**नटी ।** अज्ज उववासो गहिदो (१४) ।

**सूत्रधारः ।** किंणामधेओ अअं उववासो (१५) ।

**नटी ।** अहिरूअवदी णाम (१६) ।

**सूत्रधारः ।** अज्जे इहलोइओ आदु पारलोइओ (१७) ।

**नटी ।** अज्ज पारलोइओ (१८) ।

**सूत्रधारः ।** सरोषम् । पेक्खन्तु पेक्खन्तु अज्जमिस्सा । ममकेरकेण भत्तपरिव्वएण पारलोइओ भत्ता अण्णेसीअदि (१९) ।

---

नटी–(१४) अथोपवासो गृहीतः ।

सूत्र°–(१५) किंनामधेयोयमुपवासः । उपवास उपवासरूपं व्रतमित्यर्थः । अधिकरणसन्नीयम् ।

नटी–(१६) अहिरूअवदी णाम अभिरूपपतिर्नाम ।

सूत्र°–(१७) आर्ये इहलौकिकोथवा पारलौकिकः ।

नटी–(१८) आर्य पारलौकिकः ।

सूत्र°–(१९) प्रेक्षन्तां प्रेक्षन्तामार्यमिश्राः । पारलौकिक इत्यनेन पालकव्युदासेन नायकान्तरलाभसूचनम् । ममकेरकेण मदीयेन । भत्तपरिव्वएण भक्तपरिव्ययेन । ओदनव्ययेनेत्यर्थः । यद्वा । भर्तृपरिव्ययेन भर्तृपरित्यागेनेत्यर्थः । पारलौकिको भर्तान्विष्यते ।

---

१ उववासो B (a); उवभासो B (d). २ गहीदो D गिहीदो F. ३ अहिरूववदी BCJ; अहिरूअभदी B (d) H. ४ इहलोइओ DFH ५ अज्जउत्त DFH ६ पेक्खन्तु om B (abc) I. ७ ममकेरेण DFH. ८ भत्त A B (bc) CDFJ ९ परिव्वएण B (a), परिभएण B (d).

नटी । अज्ज पसीद पसीद । तुमं ज्जेव्व मम जम्मन्तरेवि भत्ता भविस्ससि त्ति उववसिदम्हि (२०) ।

सूत्रधारः । अध अअं उववासो केण उवदिट्ठो (२१) ।

नटी । अज्जस्स ज्जेव्व पिअवअस्सेण चुण्णवुड्ढेण (२२) ।

सूत्रधारः । सक्रोधम् । आ दासीए उत्ता चुण्णवुड्ढा कदा णु हु तुमं कुविदेण रण्णा पालएण णववहूकेसकेलावं विअ ससुअन्धं कप्पिज्जन्तं पेक्खिस्सं (२३) ।

नटी । पसीददु पसीददु अज्जो । णं अज्जस्स ज्जेव्व

---

नटी–(२०) आर्य प्रसीद प्रसीद । त्वमेव मम जन्मान्तरेपि भर्ता भविष्यसीत्युपोषितास्मि ।

सूत्र०–(२१) अथायमुपवासः केन तवोपदिष्टः ।

नटी–(२२) आर्यस्यैव प्रियवयस्येन चूर्णवृद्धेन ।

सूत्र०–(२३) आः आक्षेपे । दास्याः पु(पु)त्र चूर्णवृद्ध कदा ननु खलु त्वां कुपितेन राज्ञा पालकेन । कल्पिज्जन्तं छेद्यमानम् । प्रेक्षिष्यामि (ष्ये) । नववधूकेशकलापमिव ससुगन्धम् । वज्झन्तमिति पाठे वध्यमानम् । अनेन संहाराङ्के चारुदत्तानिग्रहसूचनम् ।

---

१ अज्जउत्त DFH २ पसीद पसीद om. B (d) I. ३ जेव्व AEG; ज्जेव CJ; एव्व DFH. ४ अदं E. ५ उवदिट्ठो F. ६ अज्जउत्तस्स DFH. ७ ज्जेव CJ; जेव्व AFG; एव्व DH. ८ आ om. B (d); आः AB (c) CDEFGIJ. ९ पुत्ता AB (bcd) CDEFG. १० कदु CJ ११ पालएण वज्झिज्जन्तं (= पालकेन वध्यमानम्) DH. १२ कलावं AB (bcd) EFI *वज्झन्तं Com. १३ पसीददु D. १४ पसीददु om. ADEFGI. १५ अज्जउत्तो DFH १६ अज्जउत्तस्स DFH. १७ जेव्व DFJ; जेव्व AG; एव्व DFH.

नटी । अज्ज उववासो गहिदो (१४) ।

सूत्रधारः । किंणामधेओ अअं उववासो (१५) ।

नटी । अहिरूअवदी णाम (१६) ।

सूत्रधारः । अज्जे, इहलोइओ आदु पारलोइओ (१७) ।

नटी । अज्ज पारलोइओ (१८) ।

सूत्रधारः । सरोषम् । पेक्खन्तु पेक्खन्तु अज्जमिस्सा । ममकेरकेण भत्तपरिव्वएण पारलोइओ भत्ता अण्णेसीअदि (१९) ।

---

नटी–(१४) अद्योपवासो गृहीतः ।

सूत्र०–(१५) किंनामधेयोयमुपवासः । उपवास उपवासरूपं व्रतमित्यर्थः । अधिकरणघञन्तोयम् ।

नटी–(१६) अहिरूअवदी णाम अभिरूपपतिर्नाम ।

सूत्र०–(१७) आर्ये इहलौकिकोथवा पारलौकिकः ।

नटी–(१८) आर्य पारलौकिकः ।

सूत्र०–(१९) प्रेक्षन्तां प्रेक्षन्तामार्यमिश्राः । पारलौकिक इत्यनेन पालकव्युदासेन नायकान्तरलाभसूचनम् । ममकेरकेण मदीयेन । भत्तपरिव्वएण भक्तपरिव्ययेन । ओदनव्ययेनेत्यर्थः । यद्वा । भर्तृपरिव्ययेन भर्तृपरित्यागेनेत्यर्थः । पारलौकिको भर्तान्विष्यते ।

---

१ उववासो B (a); उवआसो B (d). २ गहीदो B गिहीदो F. ३ अहिरूअवदी BCJ; अहिरूअभदी B (d) H. ४ इहलोइओ DFH. ५ अज्जउत्त DFH ६ पेक्खन्तु om B (abc) I. ७ ममकेरेण DFH. ८ भत्त A B (bc) CDFJ ९ परिव्वयेण B (a), परिभएण B (d).

नटी। अज्ज पसीद पसीद। तुमं ज्जेव्व मम जम्मन्तरेवि भत्ता भविस्ससि त्ति उववसिदम्हि (२०)।

सूत्रधारः। अध अअं उववासो केण उवदिट्ठो (२१)।

नटी। अज्जस्स ज्जेव्व पिअवअस्सेण चुण्णवुड्ढेण (२२)।

सूत्रधारः। सक्रोधम्। आ दासीए उत्ता चुण्णवुड्ढा कदा णु हु तुमं कुविदेण रण्णा पालएण णववहूकेसकलावं विअ सुअन्धं कप्पिज्जन्तं पेक्खिस्सं (२३)।

नटी। पसीदद पसीददु अज्जो। णं अज्जस्स ज्जेव्व

---

नटी–(२०) आर्य प्रसीद प्रसीद। त्वमेव मम जन्मान्तरेपि भर्ता भविष्यसीत्युपोषितास्मि।

सूत्र०–(२१) अथायमुपवासः केन तवोपदिष्टः।

नटी–(२२) आर्यस्यैव प्रियवयस्येन चूर्णवृद्धेन।

सूत्र०–(२३) आः आक्षेपे। दास्याःपु(पु)त्र चूर्णवृद्ध कदा ननु खलु त्वां कुपितेन राज्ञा पालकेन। कल्पिज्जन्तं छेद्यमानम्। प्रेक्षिष्यामि (ष्ये)। नववधूकेशकलापमिव ससुगन्धम्। वज्झन्तमिति पाठे बध्यमानम्। अनेन संहाराङ्के चारुदत्तनिपातसूचनम्।

पोरलोइओ अअं उववासो अणुचिट्ठीआदि (२४)। इति पादयोः पतति।

**सूत्रधारः**। अज्जे उट्ठेहि उट्ठेहि। कधेहि कधेहि। इध उववासे केण कज्जं (२५)।

**नटी**। अम्हारिसजणजोग्गेण वम्हणेण उवणिमन्तिदेण (२६)।

**सूत्रधारः**। तेण हि गच्छदु अज्जा। अहं पि अम्हारिसजणजोग्गं वम्हणं उवणिमन्तेमि (२७)।

**नटी**। जं अज्जो आणवेदि (२८)। इति निष्क्रान्ता।

---

नटी–(२४) प्रसीदत्वार्यः। आर्यस्यैव पारलौकिकोयमुपवासोनुष्ठीयत इति(?)।

सूत्र°–(२५) उट्ठेहि उट्ठेहि उत्तिष्ठोत्तिष्ठ। कधेहि कधेहि कथय कथय। एस्य(त्थ) उववासे अत्रोपवासे। केन कार्यम्।

नटी–(२६) अम्हारिसजणजोग्गेण अस्मादृशजनयोग्येन। ब्राह्मणेन। उवणिमन्तिदेण उपनिमन्त्रितेन।

सूत्र°–(२७) तेन हि गच्छत्वार्या। अहमप्यस्मादृशजनयोग्यं ब्राह्मणमुपनिमन्त्रयामि।

नटी–(२८) यदार्यः। आणवेदि आज्ञापयति।

---

१ परलोअओ H. २ अणुचिट्ठीअदि AB (bc) EFGI; अणुचिट्ठीअदुत्ति B (a). ३ इति om. AB (abc) EFGI. ४ कधेहि om. B (d). ५ इह B (a). ६ उववासके B (d). ७ केणकेण H (ab) E. ८ उवणिमन्तिदेण बम्हणेण D. ९ ता गच्छदु B (d). * अर्थं J. १० वि DFH. ११ जोग्गं B (d). १२ आणवेदि B (d) ... १३ आणवेदि(?) ... १४ इति om. B(d) G.

सूत्रधारः । परिक्रम्य । हीमाणहे । ता कधं मए एव्वं सुसमिद्धाए उज्जइणीए अम्हारिसजणजोग्गो बम्हणो अण्णेसिदव्वो । विलोक्य । एसो चारुदत्तस्स मित्तं मित्तेओ इदो ज्जेव्व आअच्छादि । भोदु । पुच्छिस्सं दाव । अज्ज मित्तेअ अम्हाणं गेहे असिदुं अग्गणी भोदु अज्जो (२९) ।

नेपथ्ये ।

भो अण्णं बम्हणं उवणिमन्तेदु भवं । वावडो दाणिं अहं (३०) ।

---

सूत्र०-(२९) ता तस्मात् । कधं कथम् । मए मया । ईदृश्यामुज्जयिन्यां समृद्धायामस्मादृशजनयोग्यो ब्राह्मणोऽन्वेषितव्यः। कोऽर्थः। ए(य)दा दुःस्थिता भवन्ति ब्राह्मणास्तदा चारणादीनामपि गृहे कुर्वन्ति भोजनम्। एष चारुदत्तस्य मित्रं मैत्रेयः । इदो जेव्व इत एव । आगच्छति । भवतु । प्रक्ष्यामि तावत् । अद्य मैत्रेय अस्माकं गेहेऽत्तुम् । अग्गणी अग्रणीः । प्रतिष्ठोमगामीति यावत् । भवत्वार्यः । अदिधी भोदु-इत्यपि पाठः । तत्रापि अतिथी(थि)भ(र्भ)वत्वित्यर्थः ।

नेपथ्ये । 'नेपथ्यं स्याज्जवनिका' इत्यमरः । ततः कश्चिदाहेति शेषः । संकेतोऽत्र नाटकादौ । स मैत्रेयनामा विदूषक एव नेपथ्यान्तर्देशादाहेति यावत् ।

(३०) भो अण्ण(ण्णं) अन्यम् । बम्हणं ब्राह्मणम् । उवणिमन्तेदु उपनिमन्त्रयतु भवान् । वावडो व्यापृतः। अहमिदानीं कार्या-

---

१ हिमाणहे GL. २ उज्जइणीए AB (c) F; ईरिसाए उज्जइणीए (= ईदृश्यामुज्जयिन्याम्) DH ३ इधो CJ. ४ जेव्व AFG, ज्जेव CEJ; एव्व DH. ५ एग दाव उवणिमन्तिस्सं (= इमं तावदुपनिमन्त्रयिष्ये) B (d). * आदिधी Con. ६ भवं (= भवान्) B (a) ७ बह्मणं om. B (d) ८ वावडा [illegible] (c); वावावडो B (d)

**सूत्रधारः** । अज्ज संपण्णं भोअणं णीसवत्तं चे । अवि अ दक्खिणा का वि दे भविस्सदि-(३१) ।

-पुनर्नेपथ्ये-।

भो जधा दाणिं पढुमं ज्जेव्व पच्चादिट्ठोसि । ता को दाणिं दे णिव्वन्धो पदे पदे मं अनुसंधिदुं (३२) ।

**सूत्रधारः** । पच्चादिट्ठोह्मि एदिणा । भोदु । अण्णं बम्हणं उवणिमन्तेमि (३३) । इति निष्क्रान्तः ।

आमुखम् ।

---

न्तरव्यासक्तः । दाणिं इदानीम् ।

सूत्र°—(३१) अद्य स(सं)पन्नं मृष्टम् । णिसवत्तं च । पितॄणां समुत्सृष्ट(ष्टं) घृतादिसहिततण्डुलपूर्णपात्रम् । निःस्राव इति यस्य प्रसिद्धिः । णीसवत्तं निःसपत्नम् । विपक्षस्यापरस्याभावादिति केचित् । अपि च दक्षिणा कापि ते भविष्यति । एकोपि: संभावनायामपरः समुच्चये ।

पुनर्नेपथ्य इति स मैत्रेय एव सूत्रधारवचो(चा)क्यस्योत्तरमाहेत्यर्थः।

(३२) भो जं दाणिं पच्चादिट्ठोसि । भो यदिदानीं प्रत्यादिष्टोसि । ता को दाणिं तत्क इदानीम् । ते । णिव्वन्धो निर्बन्धः । मं मां(माम्) । पदे पदे अणुसंधिदुं अनुसंहितुम्(?) अनुरोद्धुम् ।

सूत्र°—(३३) पच्चादिट्ठोह्मि प्रत्यादिष्टोस्मि । एदिणा अनेन । भोदु भवतु । अण्णं अन्यम् । ब्राह्मणम् । उवणिमन्तेमि उपनिमन्त्रयामि ।

---

१ ओअणं (= ओदनम्) D. २ णीसवत्तं (= निःश्रावणम्) B (d); णीसवत्तं CJ. ३ अ CJ. ४ जं(= यत्) AB (bc) CDEFGJ; जदा (= यदा) B (d). ५ पढमं AB(c) FHI; पढमं B (d); पढमे G; पढमे CDEJ. ६ जेव्व AEI; ज्जेव CHJ; एव्व DH. ७ मं पदे पदे B (d); मणोपदेसं अणुसंधिदुं AB (c) FI, मणोपदेसं अणुसंधिदुं DH. ८ णिक्कान्तो B (a), निष्क्रान्तः B (d).

प्रविश्य[1] प्रावारहस्तः[2] ।

मैत्रेयः[3] । अण्णं[4] बम्हणं[5] । इति पूर्वोक्तं पठित्वा । अथवा मए[6] वि[7] मित्तेएण[8] परस्स आमन्तणआइं[9] भक्खिदव्वाइं । हा अवत्थे तुलीअसि । जो दाणिं अहं तत्थभवदो[10] चारुदत्तस्स रिद्धीऐ[11] अहोरत्त[12]पयत्त[13]सिद्धेहिं उग्गारसुरहिगन्धेहिं मोदएहिं* जेव्व[14] आसिदो[15] अब्भन्तरचदुस्साल[16]अदुआरए[17]-उवविट्ठो मल्लक[18]-सदपरिवुदो[19] चित्तअरो विअ अङ्गुलीहिं[20] छिविअ[21] छिविअ[22] अवणेमि[23] । णअरचत्तरवुसहो विअ रोमन्थाअमाणो चिट्ठामि । सो दाणिं अहं तस्स दलिद्ददाए जहिं[24] तहिं चरिअ गेहपारावदो विअ आवासणिमित्तं इध आअच्छामि । एसो[25] अज्जचारुदत्तस्स पिअवअस्सेण चुण्णवुट्ठेण[26] जादीकुसुमवा-

---

प्रस्तावनेत्यामुखसंधिपर्यायः।यदुक्तम्—'सूत्रधारेण सहिताः संलापं यत्र कुर्वते । नटी विदूषको वापि पारिपार्श्व(र्श्वि)क एव वा ॥ आमुखं नाम तस्यैव सैव प्रस्तावना मता ॥' इति । प्रावारः प्रच्छदपटः

---

१ ततः प्रविशति DH. २ प्रावरक B (d). ३ After हस्तो DH. add मैत्रेय॰. ४ भो अण्णं D. ५ उग्गणिमन्तेदु भवं । वावडो दाणिं अहं D. ६. मये B (ab) ७ वि om. AB (cd) CDFGHIJ. ८ मैत्तेयेण B (a). ९ आमन्तणाइं B (a), आमन्तणकाइं B (d) HI. १० तत्तभोदो DJ. ११ कडीए B (ad). १२ अहोरत्तं AB (c) CDFIJ. १३ परेत्त AB (c) EFI; पअत्त B (a); पअन्त B (d) DH, पेत्त B (b), पेरन्त CJ. *मोदकेहिं J. १४ जेव्व ACFGI, एव्व DH; ज्जेव J. १५ असिदो B (a) CJ. १६ चतुस्साल B (a) D. १७. दुआरके B (d); दुआए CJ. १८ मलक्क B (a); मलक्क B (b) EG. १९ सदापि परिवुदो B (d); पडिवुदो B (a). २० अग्गङ्गुलीहिं B (d). २१ विविअ विविअ B (a). २२ छिविअ om. AB (c) FGI. २३ For मल्लक—अवणेमि DH; read वणो वणो चेडजणदिण्णं सव्वोवक्करजुत्तं णिज्जिदसुवण्णवण्णाणेअपत्तघडिद तम्बोलं भक्खिअन्तो (पुन: पुनश्चेटजनदत्तं सर्वोपस्करयुक्तं निर्जितसुवर्णवर्णानेकपत्रघटितं ताम्बूलं चर्वयन्). २४ तहिं तहिं B (d). २५ ऐसा अ B (ab) CEGJ. २६ चुण्णवुट्ठेण B (ab) EG.

सिदो पोवारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स उवणेदव्वो त्ति । ता जाव अज्जचारुदत्तं पेक्खामि । परिक्रम्यावलोक्य च । एसो अज्जचारुदत्तो सिद्धीकिददेवकज्जो गिहदेवदाणं बलिं करेन्तो ईदो. ज्जेव्व आअच्छदि (३४) ।

---

मैत्रेयः—(३४) अथवा मयापि मैत्रेयेन(ण) परस्य । आमन्तणाइं आमन्त्रणानि । प(पे)क्खिदव्वाइं प्रेक्षितव्यानीत्यर्थः । समीक्षितव्यानीत्यर्थः । भक्खिदव्वाइं इति पाठे भक्षितव्यानीत्यर्थः । हा अवस्थे तुलयसि । य इदानीमहं तत्रभवतश्चारुदत्तस्य ऋद्ध्याहोरात्रं प्रयत्नसिद्धैरुद्गारसुरभिगन्धिभिर्मोदकैरै(रे)वाशितो भोजितः । गह्नकशतपरिवृतः । गह्नकः पात्रविशेषः । पत्रपुटो वा । द्रोना इति प्रसिद्धः । इति विदूषकपक्षे । चित्रकरपक्षे वर्णिकापात्रं गह्नकः । अभ्यन्तरचतुःशालद्वार उपविष्टश्चित्रकर इवाङ्गु(ङ्गु)लीभिः । छिविअ छिविअ स्पृष्ट्वा स्पृष्ट्वा । अपनयामि न भक्षयामि । अत्यन्तं तृप्तत्वादित्यर्थः । चित्रकरोप्यङ्गुलीसंस्थितलेखनिकया वर्णिकाभाण्डं स्पृष्ट्वापनयति विक्षिपति । अन्यथा वर्णिकाविंदु(बिन्दु)पातः स्यादिति । नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि । स दाणिं इदानीम् । अहं तस्य दलिद्ददाए दरिद्रतया । यत्र कुत्रापि चरित्वा गेहपारावत इवावासनिमित्तं शयनार्थमत्रागच्छामि । एसो एषः । चूर्णवृन्देन जातीकुसुमवासितोनुप्रेषितः प्रावारकः । सिद्धीकिददेवकज्जस्स सिद्धीकृतदेवकार्यस्य । आर्यचारुदत्तस्योपनेतव्य इति । तद्यावदार्यचारुदत्तं पश्यामि । एष चारुदत्तः सिद्धीकृतदेवकार्यो गृहदेवतानां बलिं कुर्वन्नित एवागच्छति । बलिं पूजाम् ।

---

१ पावरओ B (d). २ चारुदत्तो AB (cd) CDEFGIJ. ३ इदो इदो B (a). ४ जेव्व ACDFG; ज्जेव J.

ततः प्रविशति यथानिर्दिष्टश्चारुदत्तो रदनिका च ।

**चारुदत्तः** । ऊर्ध्वमवलोक्य सनिर्वेदं निःश्वस्य च ।

यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव संप्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥ ९ ॥

इति मन्दं मन्दं परिक्रम्योपविष्टः ।

**विदूषकः** । एसो अज्जचारुदत्तो । ता जाव संपदं उवसप्पामि । उपसृत्य । सोत्थि भवदे । वड्ढदु भवं (३९) ।

**चारुदत्तः** । अये सर्वकालमित्रं मैत्रेयः प्राप्तः । सखे स्वागतम् । आस्यताम् ।

**विदूषकः** । जं भवं आणवेदि । उपविश्य । भो वअस्स । एसो दे पिअवअस्सेण चुण्णवुड्ढेण जादीकुसुमवासिदो पावारओ

---

चारु०—[यासामिति।] कीटमुखखादितो बीजाञ्जलिः पतति । विरूढा उपचितास्तृणाङ्कुरा यासु ॥९॥

विदूषकः । 'हास्यकारी विदूषकः' इति तल्लक्षणात् । अत्रायं मैत्रेय एव विदूषक इति ध्येयम् । आहेत्यध्याहारः सर्वत्र ।

विदू०—(३९)एष आर्यचारुदत्तः । तद्यावत्सांप्रतमुपसर्पामि । स्वस्ति भवते । वर्धतां भवान् ।

---

१ च om. AB (bcd) CDFG. २ इति om. AB (bcd) DEFGI. ३ मन्दं om. AB (bcd) DEFGI. ४ मन्दं om. B (d). ५ पविसामि (= प्रविशामि) B (a) ६ भोदे AB (bc) DFGI. ७ वड्डदु ACDFI. ८ सार्वकाल B (a). ९ पिअ om CJ. १० पावारओ B (d).

अणुप्पेसिदो । सिद्धीकिददेवकज्जस्स अ[1]ज्जचारुदत्तस्स तुए उवणेदव्वो त्ति (३६)। समर्पयति ।

चारुदत्तः । गृहीत्वा सचिन्तः स्थितः ।

विदूषकः। इदं किं चिन्तीअदि (३७)।

चारुदत्तः । वयस्य ।

सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां
धृ[2]तः शरीरेण मृतः स जीवति ॥ १० ॥

विदूषकः । भो वअस्स । म[3]रणादो दा[4]लिद्दादो वा क[5]दरं दे[6] रोअदि (३८)।

---

विदू°–(३६)यज्ञ्यानाज्ञापयति। भो वयस्य। एष ते प्रियं(य)-वयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः । सिद्धीकृतदेवकार्यस्यार्यचारुदत्तस्य त्वयोपनेतव्य ,इति ।

विदू°–(३७)भोः किमिदं चिन्त्यते ।

चारु°–[सुखमित्यादि ।] दुःखान्यनुभूय सुखं शोभते ।·न तु सुखमनुभूय दुःखमिति तात्पर्यम् । स मृत एव जीवति । शरीरेण धृतः शरीरवेष्टितः । चर्मभस्त्रावदित्यर्थः ॥ १० ॥

विदू°–(३८)भो वयस्य । मरणादो मरणात् । दालिद्दादो दारिद्र्या(द्र्या)त् कदरं कतरत् रोचते ।

---

१ अज्जस्स चारुदत्तस्स G. २ मृतः शरीरेण धृतः B (a). ३ मरणादो वा. H. ४ दालिद्दादो H (a) ; दारिद्दादो H (b), दारिदादो EG. ५ कदर AB (c) I. ६ दे om. A (c) DFI.

चारुदत्तः । वयस्य ।

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ११ ॥

विदूषकः । भो वअस्स अलं संतप्पिदेण । पेणइजणसंकामिदविहवस्स सुरजणपीदसेसस्स विअ पडिवाचन्दस्स परिक्खओ वि दे अहिअदरं रमणीओ (३९) ।

चारुदत्तः । वयस्य । न ममार्थान्प्रति दैन्यम् । पश्य ।

एतत्तु मां दहति यद्गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति ।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम् ॥ १२ ॥

---

चारु°–[दारिद्र्यादिति ।]अल्पसमयदुःखदत्वान्मरणमल्पक्लेशम् । बहुसमयव्यापित्वादाकाङ्क्षितापगमाद्दारिद्र्यमनन्तकं दुःखम् ॥११॥

विदू°–(३९) विसंतपितेन (?) । प्रणयिजनसंका(क्रा)मितविभवस्य सुरजनपीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोपि तेधिकतरं रमणीयः । प्रणयी जनः स्निग्धबान्धवोर्थी च(था) । आपद्यसध्ययेनार्थाः स्वदोषेण नाश्यन्ते तदा संतापः क्रियते । तव तु न तथेति भावः ।

चारु°–[एतदिति ।] क्षीणार्थमिति कृत्वास्मद्गृहमतिथयः संत्यजन्ति । एतन्मां दहति कालात्यये मदसमयापगमे धनलाभसमयापगमे या(च) ॥१२॥

---

१ संतप्पिदेण AI ; संदाविदेण D. २ पणयिअण D ; पणइअण CJ. ३ संकामिद AB (c) I. ४ विभवस्स B (d). ५ पडिवचन्दस्स AB (c) FI ; पडिवचन्दस्स CJ; पडिआचन्दस्स B; पडिवआचन्दस्स H. ६ अहिअदरं om. B (b) EG; अधिअदरं B (d), अहीअदरं H.

विदूषकः । भो वअस्स ! एदे क्खु दासीए उत्ता अत्थकल्लवत्ता वेरडाभीदा विअ गोवालदारआ जहिं जहिं ण खज्जन्ति तहिं तहिं गच्छन्ति (४०) ।

चारुदत्तः । वयस्य !

सत्यं न मे विभवनाशकृतास्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥ १३ ॥

अपि च ।

दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकविहतो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥१४॥

विदू०–(४०)एदे खु एते खलु । दासी(स्याः)पुत्राः । अर्थरूपमातरासाः(शाः) । वरटाभीता वीरणी इति ख्याता ततस्त्रस्ता-(स्ताः) । अरण्ये गोपालदारका इव यत्र यत्र न खादन्ति उपभुञ्जते तत्र [तत्र] गच्छन्ति ।

चारु०–[सत्यमिति ।] विभवनाशकृता मम चिन्ता नास्ति । कथमित्यत आह । भाग्यक्रमेण धनानि भवन्ति । नहिं चिन्ता कुत इत्यत आह । एतनु(त्तु) मां दहति । यन्नष्टधनाश्रयस्य मम सौहृ-

१ पुत्ता AB (bcd) CDEFGHIJ. २ वरटा E; वरडी (= वरटी) DFH. ३ गोवालदारआ अरण्णे, AB (bc) CDEFGHIJ; अरण्णे गोवालदारआ H (d) ४ ह्रीपरिगत· AB (bcd) CDEFGIJ. ५ विहितो AB (c) CDEFGIJ; पिहितो H (b), विहितो B (d). ६ परिभ्रश्यते.

विदूषकः । भो वअस्स । तं ज्जेव्व अत्थकल्लवत्तं सुमरिअ अलं संतप्पिदेण (४१) ।

चारुदत्तः । वयस्य । दारिद्र्यं हि पुरुषस्य

निवासश्चिन्तायाः परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो
हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥१९॥

दादपि मैत्रीतोपि जनाः शिथिलीभवन्ति । अर्थशून्येन समं प्रयोजनाभावान्मैत्रीमपि न केपि कुर्वते ॥ १३ ॥

[ दारिद्र्यादिति । ]लज्जां गच्छति । आकाङ्क्षितासामर्थ्यात् । यदा लज्जा गता तदा तेजसः प्रभ्रष्टो भवति । यावत्तावत्कारणात्तेजःशून्यः परिभूयते भयाभावात् । परिभवान्निर्वेदं गच्छति । मानम्लानेः । ततः शुचमेति । वृथा जीवनमिति । तत(तः) परित्यज्यते बुद्ध्या । निर्बुद्धिः क्षयं गच्छति । तदुक्तम्—'बुद्धिनाशात्प्रणश्यति' इति । अत एव सर्वासामापदां स्थानमित्युपसंहरति ॥ १४ ॥

विदू°—(४१) भो वयस्य । तमेवार्थकल्यवर्ती स्मृत्वालं संतपितेन(?)। अर्थस्वल्पः-कल्यवर्तः प्रातराशः । एतद्रूपत्वे चार्थस्य (?) द्रूपद्रव्यत्वाज्जनान्तरानवगाहितत्वाच्च तद्विस्मृत्य धर्मचिन्ताः साधवो भवन्तीत्याशयः ।

चारु°—[निवास इति ।] चिन्ता[या] निवासः । कथं मम निर्वाहः स्यादित्येवंरूपायाः (चिन्तायाः) परस्य परिभव इति पदीस-

१ जेव्व ACFG; ज्जेव CJ; एव्व DH. २ सुमरिअ मुमरिअ H (a). ३ संतप्पिदेण ACI ; संतापिदेण D ; सदाविदेण H. ४ परुषस्य AB (c) I. ५ क्षयं DF (in a marginal note) H.

तद्वयस्य । कृतो मया गृहदेवताभ्यो बलिः । त्वमपि गच्छ चतुष्पथे मातृभ्यो बलिमुपहर ।

विदूषकः । ण गमिस्सं (४२) ।

चारुदत्तः । किमर्थम् ।

विदूषकः । जदो एव्वं पूइज्जन्ता देवदा ण पसीदन्ति ता को गुणो देवेसु अच्चिदेसु (४३) ।

चारुदत्तः । वयस्य मा मैवम् । गृहस्थस्य नित्योयं विधिः ।

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ॥ १६ ॥

---

मासः कर्मधारयो वा । एतच्चाविश्वसनीयतया निर्धनानां ज्ञेयम् । जुगुप्सा मित्राणामिति । प्रत्युपकारासमर्थत्वात् । स्वजनानां बन्धूनां जनानामन्येषामुदासीनानाम् । विद्वेषस्य करणं कृतिः । कर्तरि करणे वा ल्युट् । भवति । चेति चकारो हेतौ । वनगमने कलत्रपरिभवो हेतुः ॥ १५ ॥

विदू०–(४२) न गमिष्यामि ।

विदू०–(४३) यत एवं पूज्यमाना अपि देवा न ते प्रसीदन्ती(न्ति) तत्को गुणोर्चितेषु देवेषु ।

चारु०–नित्योयं विधिः । अकरणे प्रत्यवायात् । [तपसेति ।] तुष्यन्ति परलोकमुत्कृष्टं प्रयच्छन्ति । यतः श्राद्धकृदतिथिप्रियो गृहस्थोपि मुच्यत इति भावः ॥ १६ ॥

---

१ गच्छ त्वमपि AB (bed) CDEFGIJ. २ पूइज्जन्ता वि CJ. ३ देवदा om. AB (bc) DEFGI. ४ ण दे AB (bc) CDEFGIJ. ५ पसादं देन्ति (= प्रसादं ददति) B (d); पसीदेन्ति EG. ६ देवेसुं अच्चिदेसुं AB (c) CDFIJ. ७ गृहस्थि-तस्य ? B (d). ८ वापि B (a). ९ देवता नित्यं शामिनां B (d).

तद्गच्छ । मातृभ्यो बलिमुपहर ।

विदूषकः। भो ण गमिस्सं । अण्णो कोवि पेउञ्जीअदु । मम उण बम्हणस्स सव्वं ज्जेव्व विपरीदं परिणमदि । आदंसगदा विअ छाआ वामादो दक्खिणा दक्खिणादो वामा । अण्णं च एदाए पदोसवेलाए इध राअमग्गे गणिआ विडा चेडा राअवल्लहा अ पुरिसा संचरन्ति । ता मण्डूअलुद्धस्स विअ कालसप्पस्स मूसिओ विअ अहिमुहावडिदो वज्झो दाणिं भविस्सं । तुमं इध उवविट्ठो किं करिस्ससि (४४) ।

चारुदत्तः। भवतु । तिष्ठ तावत् । अहं समाधिं निर्वर्तयामि।

---

विदू०—(४४)भो न गमिष्यामि ।अन्यः कोपि प्रयुज्यताम् । मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमति । आदर्शगतेव छाया वामतो दक्षिणा दक्षिणतो वामा । अ(आ)दर्शस्य प्रतिबिम्बे वामो भागो दक्षिणे दृश्यते । दक्षिणश्च वामे इति वस्तुगतिः । अन्यच्च एतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटा राजवल्लभाश्च पुरुषाः संचरन्ति ।अ(?)एतेन विटादीनां प्रवेशं सूचयति । 'नासूचितस्य प्रवेशः' इति । अत एवाग्रे विटशाकारचेटवसन्तसेनानां प्रवेशः । राजवल्लभा इत्यनेन शकारस्य प्रवेशः सूचितः । अन्येषां प्रवेशसूचनं स्पष्टतममेवेति ध्येयम् । तन्मण्डूकलुब्धस्येव कालसर्पस्य मूषक इवाहि(भि)मुखापतितो वध्य इदानीं भविष्यामि । त्वमुपविष्टः किं करिष्यति(सि) ।

नेपथ्ये ।

तिष्ठ वसन्तसेने । तिष्ठ ।

ततः प्रविशति विटशकारचेटैरनुगम्यमाना वसन्तसेना ।

विटः । वसन्तसेने । तिष्ठ तिष्ठ ।

किं त्वं भयेन परिवर्तितसौकुमार्या
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती ।
उद्विग्नचञ्चलकटाक्षविसृष्टदृष्टि-
र्व्याधानुसारचकिता हरिणीव यासि ॥ १७ ॥

शकारः । चिश्ट वशान्तशेणिए । चिश्ट (४५) ।

किं याशि धावशि पलाअशि पक्खलन्ती
वाशू पशीद ण मलीहिशि चिश्ट दाव ।
कामेण डज्झदि हु मे हडके तवश्शी
अङ्गाललाशिपडिदे विअ मंशखण्डे(४६)॥१८॥

---

विटः—[किं त्वमिति ।] विप(श)दौ संचरणलाघवगुणान्वितौ । पटू इति यावत् । उद्विग्नं चञ्चलकटाक्षरूपेण विसृष्टा दृष्टिर्यया सा तथा । अनुसारोनुगमनम् । व्याधेन यदनुगमं(म)नं तेन त्रस्ता मृगीव ॥ १७ ॥

शका°—(४५) चिश्ट तिष्ठ ।

(४६) [किं याशीत्यादि ।] वसन्ततिलकच्छन्दसा श्लोकः । किं यासि धावसि पलायसे प्रस्खलन्ती वासु प्रसीद न मरिष्यसि

चेटः । अज्जुए । चिश्ट चिश्ट (४७) ।

उत्ताशिता गेच्छशि अन्तिका मे
संपुण्णपुच्छा विअ गिह्ममोरी ।
ओवग्गदी शामिअभश्टके मे
वँणे गडे कुक्कुरशावके व्व (४८) ॥ १९ ॥

विटः । वसन्तसेने तिष्ठ तिष्ठ ।

'किं यासि बालकदलीव विकम्पमाना
रक्तांशुकं पवनलोलदशं वहन्ती ।

तिष्ठ तावत् । कामेन दह्यते खलु मे हृदयं वराकः(कं) अङ्गारराशिपतितमिव मांसखण्डम्'इति संस्कृतम् । अस्यार्थः । मस्खलन्ती । मस्खलनं निम्नोन्नतादौ गतिविघटनम् । 'बाला स्याद्वालुः' इत्यमरः । हलके हृदयम् । तवश्शी वराकः(कम्) । अङ्गारराशिपतितं मांसखण्डमिव कामेन दह्यत इति योजना ॥ १८ ॥

चेटः—(४७) आर्यके गणिके ।

(४८) [उत्ताशितेत्यादि ।] उपजातिच्छन्दसा श्लोकः । उत्त्रासिता गच्छस्यन्तिकान्मम । यद्वा अन्तिका ज्येष्ठा मे भगिनी । 'अन्तिका भगिनी ज्येष्ठा' इत्यमरः । संपूर्णपुच्छेव ग्रीष्ममयूरी । ओवग्गदी अपवल्गति ।—ससंभ्रममागच्छतीत्यर्थः । शामिभभट्टके भट्टारकः । वने गतः कुक्कुरशावक इव । गडे इति प्रथमान्तस्यैकारान्तत्वम् । 'गतमृतकृतानां डः' इति डः ॥ १९ ॥

विटः—[किं यासीति]'टङ्कः पाषाणदारणः' इत्यमरः। विदारण-

१ अज्जए AB (c) CFIJ; अज्जुए om. DH. २ चिट्ठ चिट्ठ AB (abc) CD HIJ; चिट्ट B (d); चिश्ट चिट्ट E. ३ गच्छशि अन्तिका H (a). ४ मोरि B(d). ओअग्गदी H. ६ भट्टके AB (bcd); भट्टके H (a) CDFHJ; भट्टके EGI. ७ व्वे AB (c) CJ. ८ कुक्कुड G. ९ वसन्तसेने २ B (a).

रक्तोत्पलप्रकरकुड्मलमुत्सृजन्ती
टङ्कैर्मनःशिलगुहेव विदार्यमाणा ॥ २० ॥

शकारः। चिश्ट वशन्तशेणिए। चिश्ट (४९)।

मम मअणमणङ्गं वम्महं वड्ढअन्ती
णिशि अ शअणके मे णिद्दअं पक्खिवन्ती।
पशलशि भअभीदा पक्खलन्ती खलन्ती
मम वशमणुजादा लावणश्शेव कुन्ती (५०)॥२१॥

---

क्षणे हि निर्मला निः(?)प्रसरतीति। कुड्मलं कलिका। मनःशिलगुहेति। महाभारते मनःशिलशब्दोपि दृश्यत इति तथा प्रयुक्तः। 'मनःशिला तु कुनटी' इत्यमरः॥ २०॥

शका°—(४९)—तिष्ठ वसन्तसेने तिष्ठ

(५०) [मम मदनेत्यादि।] मालिनीच्छन्दसा श्लोकः। मम मदनमनङ्गं मन्मथं वर्धयन्ती निशि च शयनके मे निद्रां प्रक्षिपन्ती। प्रसरसि प्रगच्छसि। प्रस्वरसि दात्यूहवद्विरौषीति केचित्। भयभीता प्रस्खलन्ती स्खलन्ती मम वशमनुयाता रावणस्येव कुन्ती॥ भयभीतेति भयशब्दोयमपार्थकः। मदनमनङ्गमित्यादि पुनरुक्तम्। रावणस्येव कुन्तीति हतोपमम्। तथा चोक्तम्—'आगमलिङ्गविहीनं देशकला(?)न्यायविपरीतम्। व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य॥' इति॥ २१॥

---

१ कुण्डलम् DF. २ गुहेन H. ३ चिट्ठ AB (c) DFGI; चिट्ट २ B (a); चिट B (b) CJ; ट्ठिट्ट E. ४ वसन्तशेणिए AB (ab) EF; वसन्तसेणिए G. ५ चिट AB (c) DFGI; चिश्ट om. B (a); चिट्ठ B (b) CJ; ट्ठिट E. ६ मम्हणं AB (c) FGI; मम्महं B (a) J; बम्हणं B (b) E; मम्हणं B (d), बम्हई H. ७ व- ड्ढअन्ती AB (abc) FGI; वड्ढअन्ती B (d). ८ शयणके AB (bc) EFI; शअणए DH. ९ णिद्दिअं (= निद्रां) B (d). १० पक्खिवन्ती DH. ११ रावण B (a). १२ व्व B (ab) H.

विटः। वसन्तसेने।

किं त्वं पदैर्मम पदानि विशेषयन्ती
व्याली यासि पतगेन्द्रभयाभिभूता।
वेगादहं प्रविसृतः पवनं निरुन्ध्यां
त्वन्निग्रहे तु वरगात्रि न मे प्रयत्नः॥ २२॥

शकारः। भावे भावे।

एशा णाणकमूशिकामकशिका मच्छाशिका लाशिका
णिण्णाशा कुलणाशिका अवशिका कामाहमंञ्जुशिका।
एशा वेशवहू शुवेशणिलआ वेशङ्गणा वेशिआ
एशे शे दशणामके मयि कले अज्जावि मं णेच्छदि (९१)
॥ २३॥

---

विटः—[किं त्वमिति।] विशेषयन्ती अतिशयाना। व्याली सर्पी। प्रविसृतः प्रचलितः। वातं न निरुणध्मि अपि तु रुणध्म्येव। नकार काकौ (?)॥ २२॥

शका°—'भावो विद्वान्' इत्यमरः।

(९१) [एशा णाणकेत्यादि।] शार्दूलविक्रीडितच्छन्दसा श्लोकः। एषा। णाणं शिवाङ्कं टङ्कादि वित्तम्। तस्य मोषणशीलः कामो यस्य तस्य कशिका चर्मकाष्ठिका। चौराणां किंचित्तथा चोपकरणं (?) भवति। तदत्र कशोक्ता। कशा चाश्वताडनी क(च)र्मसाडिकोच्यते। मच्छाशिका मत्स्यमच्छिका मत्स्यशुष्कमांसमित्येके। लाशिका नर्तकी। णिण्णाशा

---

१ प्रविसृतः B (a) H. २ निरुध्यां B (d). ३-नाणक E. ४ मूशिआ DH. ५ मकशिआ DH. ६ लासिका AB (abc). ७ णीणाशा CFJ, णिण्णाशा (= निम्ननासा) DH. ८ कुलणाशिआ DH. ९ अवशिआ DH. १० मञ्जूषिका B (a); मञ्जुशिआ D. ११ मामके H. १२ मए DH.

विटः । प्रसरसि भयविक्लवा किमर्थं

प्रचलितकुण्डलगण्डघृष्टपार्श्वा ।

विटजननखघट्टितेव वीणा

जलधरगर्जितभीतसारसीव ॥ २४ ॥

शकारः । झाणज्झणन्तबहुभूशणशद्दमिश्शं

किं दोव्वदी विअ पलाअशि लामभीदा ।

---

निम्ननासा । कुलणाशिका कुलं वंशस्तं नाशयति पातित्यजननात् । णीशाशेति पाठे निःस्वानामाशा कुलनाशिकेत्यर्थः । अवशिका अनायत्ता(त्ता) दानेनापि कस्यायत्ता न भवति । कामस्य मञ्जू(ञ्जू)षिका पात्रविशेषः । कंदर्पभाजनमिव । वर्तुलीभूतः काम इवेत्यर्थः । एषा वेशवधूः । 'वेशो वेश्याजनाश्रयः' इत्यमरः । सुवेशनिलया । शोभनानां वेशानामलंकाराणां निलय आश्रयो यस्यां सा । वेशाङ्गना । वेशोस्या(स्या?) अस्तीति वेशिका । एतान्यस्या दश नामकानि मया कृतानि । अद्यापि मां नेच्छति । इति संस्कृतम् । यदि देवताया अष्टौ दश द्वादश (वा) नामानि मय(द्य)न्ते तदा सा प्रसन्ना भवति । इयं त्वेतावतापि न प्रसन्नेति भावः । अत्र पूर्वार्धोत्तरार्धयोः एषा एषेति पुनरुक्तम् । न्यूनमधिकं वा कृतं(?) । दशेति व्यर्थम् ॥ २३ ॥

विटः—[प्रसरसीति] प्रचलिताभ्यां कुण्डलाभ्यां गण्डयोर्घृष्टं पार्श्वं यस्याः सा । अत एव विटनखपरिगृष्टवीणातुल्या । मनोहरत्वाच्छब्दयत्त्वाद्वा वीणातुल्यत्वम् । विटसदृशौ कुण्डलौ ॥ २४ ॥

---

१ विटजनपरिपाटितेव B (a), विटजननखपरिघट्टितेव B (d). २ झाणज्झणन्तं AB (c) CFGIJ; झाणज्झणन्ती DH. ३ भूषण H (a); भूसन B (d). ४ घदिव्वे B (ab). ५ दावदा AB (bcd) CDEFGIJ.

एशे हलामि शहश त्ति जधा हणूमे
विश्शावशुश्श[1] बहिणिं[2] विअ[3] तं शुभद्दं[4] (५२) ॥२५॥

चेटः ।

लमेहि[5] अ[6] लाअवल्लहं
तो[7] खाहिशि मच्छमंशकं[8] । 265
एदेहिं[9] मच्छमंशकेहिं[10]
शुणआ[11] मडअं ण[12] शेवंदि (५३)॥ २६ ॥

शका०–(५२) [झाणज्झणंतेति ।] वसन्ततिलकं छन्दः । झाण-ज्झणन्तेत्यव्यक्तानुकारकम् । अव्यक्तशब्दविशेषयुक्तबहुभूषणशब्देन मिश्रं यथा स्यादेवम् । किं द्रौपदीव पलायसे । रामभीता । एष हरामि झटिति । यथा हनूमान्विश्वावसोर्भगिनीमिव तां सुभद्राम् । विश्वावसोः सिद्धराजविशेषस्य । भगिनी सुभद्रा । किं तर्हि कृष्णस्य । यथा इवेति पुनरुक्तम् ॥ २५ ॥

चेटः–(५३)[लमेहीत्यादि] । प्रतिपादं चतुर्दशमात्रत्वान्मात्रा-समकं छदः(न्दः)। लमेहि अ रमय च । चकारो भिन्नक्रमः । राजवल्लभं चेत्यर्थः । तो खाहिशि ततः खादिष्यसि । मत्स्यमांसकम् । तो इत्योकारो लघुः । छन्दोनुरोधादित्याहुः । 'एओकारौ हलन्तस्थौ हु (?) द्वौ याप्यपदान्तिनौ । दीर्घात्परौ लघु (घू) स्यातां छन्दोवि-चिति(ति)भाषया' इत्युक्तम् । एदेहिं मच्छमंशकेहिं । एताभ्यां

१ वसुस्स B (ab); वस्सुवस्स B (d). २ बहिणि AB (bc) F. ३ विअदां B (a); वि तं B (b). ४ सुभद्दं B (ab). ५ लमेहि DH. ६ ता (= तत्) DH. ७ खा-हिशि B (d); क्खाहि E. ८ मंशमच्छकं B (d); मच्छं मंसकं DFH. ९ एदेहि B (a) EG. १० मंशमच्छकेहिं B (d). ११ मलअं AB (abc) CDEFGIJ. १२ शेवन्ति AB (abc) CDEGIJ; सेवन्ति B (d)

विटः। भवति वसन्तसेने।

किं त्वं कटीतटनिवेशितमुद्वहन्ती
ताराविचित्ररुचिरं रशनाकलापम्।
वक्त्रेण निर्मथितचूर्णमनःशिलेन
त्रस्ता द्रुतं नगरदैवतवत्प्रयासि ॥ २७ ॥

शकारः। अम्हेहिं चण्डं अहिशालिअन्ती
वणे शिआली विअ कुकुलेहिं।
पलाशि शिग्घं तुलिदं शवेग्गं
शवेढणं मे हलअं हलन्ती(५४) ॥ २८ ॥

---

मत्स्यमांसाभ्यां हेतुभ्याम्। मच्छकलेहिं इति पाठे मत्स्यशुष्कमांसाभ्यामित्यर्थः। ककारः स्वार्थे। शुणआ श्वानः। मृतकं न सेवन्ते। मकारः शिरश्चालने। न सेवन्त(न्त)इति नापितु सेवन्त्येवेत्यर्थः॥ २६॥

विटः—[किं त्वमिति]। वक्त्रेण लक्षिता नगरदैवतवत्प्रयासि। कीदृशेन(न) वक्त्रेण निर्मथितचूर्णमनःशिलातुल्येन ॥ २७ ॥

शका०—(५४) [अमूहे(म्हे)हिं चण्डमिति।] उपेन्द्रवज्राछन्दः। अस्माभिश्चण्डं शीघ्रमभिसार्यमाणा वने शृगालीव कुकुरैः पलायसे शीघ्रं त्वरितं सवेगम्। सवेढणं समूलबन्धम्। हलअं मम हृदयं हरन्ती। इति संस्कृतम्। सवेढणं सवेष्टनमित्यर्थ इत्य(त्ये)के ॥ २८ ॥

---

१ विवेशितमुवहन्ती B (ab). २ रसना AC. ३ त्रस्ताद्रुतं AB (bc) CDEGIJ; भ्रस्तादतं B (a). ४ अम्हेहि B (bc) CD. ५ अभिशालिअन्ती B (a); अहिशालअन्ती B (d); अभिशालिअन्ति DH. ६ वण्णे AB (cd) CDJ. ७ कुकुडेहिं AB (bcd) DEFG; कुकुरेहिं B (a). ८ शिग्घं B (a); गग्घं B (b); गग्धं G. ९ शवेगं D. १० शवेठणं AB (j) EFGI; सवेढणं B (ab); सवेण्ठणं B (a); शवेडणं CJ; शवेडुणं DH. ११ हलकं B (d); हिअअं D.

वसन्तसेना । पल्लवआ पल्लवआ । परहुदिए परहुदिए(५५)।[१]

शकारः । सभयम् । भावे भावे । मणुश्शे मणुश्शे (५६)।

विटः । न भेतव्यं न भेतव्यम् ।[२]

वसन्तसेना । माहविए माहविए (५७)।[३]

विटः । सहासम् । मूर्ख परिजनोऽन्विष्यते ।

शकारः । भावे भावे । इत्थिअं अण्णेशदि (५८)।[४]

विटः । अथ किम् ।

शकारः । इत्थिआणं शदं मालेमि । शुले हग्गे (५९)।[५][६]

---

वस०—(५५) पल्लवक पल्लवक । परभृतिके परभृतिके । पल्लवकः परभृतिका च वसन्तसेनायाः परिचारकः परिचारिका च । माधविकापरा परिचारिका ।

शका०—(५६) भावे भावे इति संबोधनम् । मणुश्शे मनुष्यः ।

वस०—(५७) माधविके माधविके ।

शका०—(५८) भाव स्त्रियमन्वेषय(न्विष्य)ति ।

शका०—(५९) स्त्रीनामश्रवणेन सगर्वमाह । स्त्रीणां शतं मारयामि । शुले शूरः । हग्गे अहम् ।

---

१ पह्लविए पह्लविए (= पल्लविके पल्लविके) AB (c) DF; पह्लविआ B (b), पह्लविआ पह्लविआ EG. २ न भेतव्यम् om. B (d). ३ After माहविए B (a) has कण्णउर कण्णउर मदणिए मदणिए. ४ इत्थिअं AB (c) CGIJ; इत्थिअं B (a) DFH; इत्थियां B (b) E; इत्थियं B (a). ५ इत्थिआणं AB (abc) CEFGIJ; इत्थिआण B (d). ६ मोडेमि AB (bcd) DEFGL ७ हग्गे CDHJ.

वसन्तसेना। शून्यमवलोक्य। हंड्डी हड्डी। कधं परिअणो परिब्भट्टो। एत्थ मए अप्पा शअं ज्जेव्व रक्खिदव्वो (६०)।

विटः। अन्विष्यतामन्विष्यताम्।

शकारः। वशन्तशेणिए विलव विलव पलहुदिअं वा पल्लवअं वा शव्वं वा वशन्तमाशं। मए अहिशालिअन्तीं तुमं के पलित्ताइश्शदि।

किं भीमशेणे जेमदग्गिपुत्ते
कुन्तीशुदे वा दशकन्धले वा।

---

वस०—(६०) हद्धि हा धिक्। हद्धीरयव्ययं भयार्थे। कथं परिजनोऽपि परिभ्रष्टः। अत्र मयात्मा स्वयमेव रक्षितव्यः।

शका०—(६१) वसन्तसेनिके विलप। किमेकदेशविलापेन। परभृतिकां वा पल्लवकं वा सर्वं वा वसन्तमासम्। अत्र पक्ष एको वाशब्दः शकारवचनतया व्यर्थ एव प्रयुक्तः। अनेकार्थत्वान्निपातानामवधारणे वा। सर्वमेव वसन्तमासमित्यर्थः। मयाभिसार्यमाणां तुमं त्वाम्। को कः परित्रायते।

[किं भीमसे(शे)णेत्यादि।] इन्द्रवज्राश्लोकः। किं भीमसेनो जमदग्निपुत्रः कुनी(न्ती)सुतो वा दशकन्धरो वा। एते चत्वारः।

---

१ हद्धि हद्धि DH. २ परिअणो वि परिब्भट्टो AB (bc) CDEFGIJ; परिअणो वि मे परिब्भट्टो B (d). ३ शअं AEFG; जेव CJ, एव्व DH. ४ अण्णिस्सदाम् om. AB (cd) DFHI. ५ पलहुदिअ AGJ; पलहुदीअ F ६ वा om. H (d). ७ पल्लविअ AB (c) D. ८ B (a) repeats वा after वसन्तमाशं. ९ अहिशालिअन्तं १० तुमं का AB (abc) DEIG, को तुमं B (d), तुम कु J ११ पलित्ताइश्शदि B (d) १२ जमदग्ग AB (c) °ग्गि J, °ग्ग DH १३ कुन्ती B (d). १४ दशकन्धले DH.

एशो हगे गेण्हिय[2] केशहत्ते
दुश्शाशणश्शाणुकिदि कलेमि ॥ २९ ॥

णं पेक्ख पेक्ख ।

अशी शुतिक्खे वलिदे अ मस्तके
कप्पेध शीशं उद मालएध वा ।
अलं तवेदेण पलाइदेण
मुमुक्खु जे हौदि[11] ण शे[12] क्खु जीअदि (६१)॥३०॥

वसन्तसेना । अज्ज अबला क्खु अहं (६२)।

विटः । अत एव ध्रियसे ।

---

एषोहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि ॥ २९ ॥

णं ननु । पेक्ख पे(प्रे)क्षस्व ।

[अशी सु(शु)तिक्खे इति।] वंशस्थेन्द्रवंशोपेन्द्रवज्रादिभिर्द्वादशैकादशवर्णैर्विजात्युपजातिः । असिः सुतीक्ष्णो वलितो लालितो (?) मस्तकं कल्पये छिनत्ति(?) तव शीर्षं [उत] मारयामि वा । अलं तवैतेन पलायितेन मुमूर्षुर्यो भवति न स खलु जीवति ॥३०॥

वस०—(६२) आर्य अबला खल्वहम् ।

विटः—अत एव ध्रियसे जीवसि । बलान्धारयितुं न शक्यत एवेति तात्पर्यम् ।

---

१ हगे B (d) २ गेन्हिअ ADEF ३ केशहत्थे ACDEFGJ ४ अणुकिद B (d) G ५ ण पेक्ख AB (c) CF ६ श B (d) ७ मस्तके AB (bcd) EF, मथत्थके B (a), मत्थए DH, मत्थके GJ ८ कप्पेम CJ ९ उअ AB (cd) DFFGI, तुम B (b) १० मालएम CJ ११ होद B (a) १२ श B (b) १३ ज्जीवदि DH १४ अ-बलता B (a) १५ बहु ACDFJ

शकारः । अदो ज्जेव्व ण मालीहशि (६३) ।

वसन्तसेना । स्वगतम् । कधं अणुणओ वि से भअं उप्पादेदि । भोदु एव्वं दाव । प्रकाशम् । अज्ज इमादो किंपि अलंकरणं सक्कीयदि (६४) ।

विटः । शान्तं पापं शान्तं पापम् । भवति वसन्तसेने । न पुष्पमोपमर्हत्युद्यानलता । तत्कृतमलंकरणैः ।

वसन्तसेना । ता किं क्खु दाणिं (६५) ।

---

शका०—(६३) अत एव न मार्यसे ।

वस०—स्वगतं मनसि विचारयतीत्यर्थे संकेतः । (६४) कथमनुनयोपि । से अस्य । भयमुत्पादयति । भवत्वेवं तावत् । प्रकाशम् । आहेति शेषः । आर्य अस्मादीदृशवाक्यभाषणात्किमप्यलंकरणं शक्यते । अन्विष्यते ।

विटः—शान्तं पापं प्रतिहतममङ्गलमित्यर्थे शान्तमित्येकदेशः संकेत इति पूर्वत्रापरत्र ज्ञेयम् । कृतं निःफलमलंकरणैः । यथा उद्यानलता पुष्पमोषं नार्हति ।

वस०—(६५) तत्किं खल्विदानीम् ।

---

१ जेव्व AEG; ज्जेव CJ; एव्व DH. २ मालीअशि AB (bc) CDEGIJ; मालीहशि B (a); मालीअदि H (d). ३ स्वगतम् om. B (ad). ४ भोदु om. DH; भो B (bd). ५ प्रकाशम् om. B (abd) ६ इमादो अ(अ)त्तादो H (d) ७ किं पि ADG. ८ तक्कीयदि DH; तक्कीअदि G. ९ शान्तम् AB (bc) CEFIJ; शान्तं शान्तम् B(d)DGH. १० खु AEFG.

शकारः । हग्गे देवपुलिशे मणुश्शे वाशुदेवके कामइदव्वे (६६) ।

वसन्तसेना । सक्रोधम् । सन्तं पावम् । अवेहि । अणज्जं मन्तोसि (६७) ।

शकारः । सहस्ततालं विहस्य । भावे भावे । पेक्ख दाव । अन्तलेण शुशिणिद्धा एशा गणिआ । जेण मं भणादि एहि शन्ते शि किलिन्ते[11] शि त्ति । हग्गे अण्णग्गामन्तलं ण

---

शका०–(६६) हगे अहम् । देवपुरुषो मनुष्यो वासुदेवः कामयितव्यः । इति तर्कयेत इत्याशयः (?) ।

वस०–(६७) सन्तं सन्तम् शान्तं शान्तम् । अणज्जं अनार्यमनहं (ह्) मन्त्रयसि ।

शका०–सतालिकं विहस्य हस्ते तालदानं कृत्वेत्यर्थः । (६८) भाव प्रेक्षस्व तावत् । अमन्तरेण मयीत्यर्थ इत्येके । अन्तरेण स्निग्धेन । अन्योन्यम् । सुस्निग्धैषा गणिकादारिका अनु येन मां भणति एहि श्रा(श्रा)न्तोसि । हगे अहं न ग्रामान्तरगतो न नगरान्तरगतः । ग्रामान्तरागतो नगरागतश्च श्रान्तः क्लात(क्लान्त)श्च भवति ।

---

१ हगे AB (bcd) CDEGIJ. २ देवपुरिषे B (ab); देवतपुलिशे B (d). ३ मणुश्शो B (b); मणुश्शके B (a). ४ कामइदव्वो AB (bc) EFGI. ५ सन्तं सन्तम् AB (c) CDFI; शान्तं पापम् B (ad); शान्त शान्तम् B (b) EG; शन्तं शन्तं J. ६ मन्तेशि AB (abc) FIJ. ७ भावे om. B (b) G. ८ पेक्ख दाव मं (= प्रेक्षस्व तावन्माम्) AB (c) DFIJ; पेक्ख दाम C; पेख B (a); पेत्थ B (b) EG; पेक्ख पेक्ख B (d). ९ सुशणिद्धा B (a). १० गणिआदालिआ णं (= गणिकादारिका ननु) AB (c), CDFIJ; गणिअदालिआ B (bd); गणिआदालिआ EG. ११ किलश्ते BH. १२ हगे AB (bcd) CDEFGJ. १३ ण गामन्तलं (= न ग्रामान्तरं) AB (c) CFJ.

गेडे णगलन्तलं वा णे गडे । अज्जुके शवामि भावश्श शीशं अत्तणकेलकेहिं पादेहिं । तव जेव्व पश्चाणुपश्चिआए आहिण्डन्ते शन्ते किलिन्ते म्हि शंवुत्ते (६८) ।

विटः । स्वगतम् । अये । कथं शौन्तमित्यभिहिते श्रान्त इत्यवगच्छति मूर्खः । प्रकाशम् । वसन्तसेने वेशवासविरुद्धमभिहितं भवत्या । पश्य ।

तरुणजनसहायश्चिन्त्यतां वेशवासो
 विगणय गणिका त्वं मार्गजाता लतेव ।
वहसि हि धनहार्यं पण्यभूतं शरीरं
 सममुपचर भद्रे सुप्रियं वाप्रियं वा ॥३१॥

अपि च ।

---

न त्वहमीदृश इत्याशयः । अज्जके भट्टालिके शपामि(पे) भावस्य विटस्य शीर्षेणास्मीयाभ्यां पादाभ्यां शपे (यदमे वक्ष्यमाणं तत्सत्यमित्यर्थः । तवैव पृष्ठ(श्चा)नुपृष्टि(ष्ठि)कया । आहिण्डन्ते उद्भ्राम्यन् । श्रान्तः क्लान्तोस्मि संवृत्तः ।

विटः—वेशो वेश्याजनस्थानम् ।

[तरुणेति । स्पष्टम्] ॥३१॥

---

१ गडे om. AB (bd) CDEFGIJ. २ ण om. AB (bd) CDEFGIJ. ३ अज्जके AB (c) COEFIJ. ४ अवामि(?) J. ५. शीस B(d), शिश्शेण DH. ६ अत्तणकेहिं AB (bc) EFGI; अत्तणकेलिहिं DH. ७ जेव्व A F ज्जेव्व, CEGJ एव्व DH, एव B (a). ८ पश्चाणुपश्चिहीदाए H (a); पश्चाणुपश्चिआए B (bc); पच्छाणुपच्छिअमाए BGH. ९ शन्ते om B (a). १० कलिन्ते DH; किलन्ते G. ११ कथमये B (a)-शान्त. १२ B (d). १३ प्रकाशम् B (a). १४ वसन्तसेने om. H (a). १५ पश्य om. B (ab) E. १६ वाप्रियं च AB (bc) CDEFGJ. १७ अपि च om. G.

वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि वर्णाधमः
फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा।
ब्रह्मक्षत्रविशस्तरन्ति च यया नावा तयैवेतरे
त्वं वापीव लतेव नौरिव जनं वेश्यासि सर्वं भज ॥३२॥

वसन्तसेना। गुणो क्खु अणुराअस्स कारणम्। ण उण बलक्कारो (६९)।

शकारः। भावे भावे एशा गब्भदाशी कामदेवाअदणुज्जाणादो पहुदि ताह दलिद्दचालुदत्ताह अणुलत्ता ण मं कामेदि। वामदो तश्श घलं। जधा तव मम हत्थादो ऐशा ण पलिब्भंशादि तधा कलेदु भावे (७०)।

---

[वाप्यामिति।] नाम्यति नमयति। नाम्यतीति कण्वादि(?)पाठा-न्नामं करोतीत्यर्थे यक्यकारलोपे च रूपम्। यथा मगधशब्दे मगध्य-तीति भवति। नामं करोतीत्यर्थे णिचि संज्ञापूर्वको विधिरनित्य इति गुणमकृत्वा यणादेशे नाम्यतीति रूपमित्येके। ण्यन्तात्संप-दादिपाठमभ्युये(पे)त्य क्विपि क्यचि रूपमित्यपरे ॥३२॥

वस०–(६९) गुणः खल्वनुरागस्य कारणम्। न पुनर्बलात्कारः।

शका०–(७०) भाव भाव एषा गर्भदासी कामदेवायतनोद्याना-त्प्रभृतिकस्य (प्रभृति तस्य) दरिद्रचारुदत्तस्यानुरक्ता न मां का-मयते। वामतस्तस्य चारुदत्तस्य गृहम्। यथा तव मम हस्तान्नैषा प्रभ्रश्यति तथा करोतु भावः। गर्भदासी जन्मप्रभृति चेटी। ताह तस्येत्यर्थः सर्वत्र।

---

१ यधा D F H. २ गुणा B (d). ३ क्खु G. ४ तस्स H (b) G. ५ चालुदत्ताह B (d). ६ अणुरत्ता D H. ७ शलं G. ८ मम अ B (d) GJ. ९ हत्थादो A B (abe). G D E F G I J, हत्तादो B. १० ण एशा B (d). ११ तधा B (d) H. १२ कलेदु B(d).

**विटः ।** स्वगतम् । यदेव परिहर्तव्यं तदेवोदाहरति मूर्खः । कथं वसन्तसेनार्यचारुदत्तमनुरक्ता । सुष्ठु खल्विदमुच्यते रत्नं रत्नेन संगच्छत इति । तद्गच्छतु । किमनेन मूर्खेण । प्रकाशम् । काणेलीमातः । वामतस्तस्य सार्थवाहस्य गृहम् ।

**शकारः ।** अध इं । वामदो तश्श गेहं (७१) ।

**वसन्तसेना ।** स्वगतम् । अम्महे वामदो तस्स गेहं त्ति जं सच्चं अवरज्झन्तेण वि दुज्जणेण पिअसंगमं पाविदा (७२) ।

**शकारः ।** भावे भावे बलिए क्खु अन्धआले मोश-

---

विटः—परिहर्तव्यं चारुदत्तवासोतिनिकट इति वसन्तसेनायाः कथयितु(तुं) नार्हतीति । तदेव स तेनोक्तम् । तद्वचनं परिहार-विषयः । काणेलीमातः । 'काणेली अन्यकामाता' इति देशीप्रकाशः । असती काणेलीत्येके ।

शका०–(७१) अथ किम् । वामतस्तस्य गृहम् ।

वस०–(७२) अम्महे इत्यव्ययमाश्चर्ये । वामतस्तस्य चारुदत्तस्य गृहमिति यत्सत्यम् । अवरज्झन्तेण अपराध्यतापि दुर्जनेनोपकृतं येन प्रियसंगमं प्रापिता ।

शका०–(७३) भाव बलवत्यन्धकारे माषराशिप्रविष्टेव मषीगुडिका दृश्यमानैव प्रनष्टा वसन्तसेना ।

---

१ अथ किं B(b)E. २ घरं A B (bc) D E F G I. ३ अम्हहे A B (abc) D E F G. ४ तस्स A B (c)CDFIJ. ५ घलं AB (abc)D EFGI. ६ ति A B (bc) FGI ७ तं B (a). ८ सेश्चं B(d); शश्चं J. ९ अवरज्झन्तेण B (d). १० दुज्जणेण उवकिदं जेण (=दुर्जनेनोपकृतं येन)A B (bc) CDEFHIJ; दुज्जणेण उवकिदं जेण B(a) G. * संगमं J. ११ बलियं E. १२ खु G. १३ माष॰ A B(bc).

लाथिपेक्खिन्टा विअ मेशीगुडिआ दीशन्ती दीशन्ती जेव्वे पणन्टा वशन्तशेणिआ (७३) ।

विटः । अहो बलवानन्धकारः । तथाहि ।

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना ।
उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण ॥ ३३ ॥

अपि च ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ३४ ॥

शकारः । भावे भावे अण्णेशामि वशन्तशेणिअं (७४) ।

विटः । काणेलीमातः । अस्ति किंचिच्चिह्नं [10] येदुपलक्षयसि ।

---

विदू० (विटः)–[आलोकेति ।] आलोके दर्शने । विशाला महती ॥ ३३ ॥

[लिम्पतीति] ॥ ३४ ॥

शका०–(७४) भाव अन्वेषया (न्विष्या) मि वसन्तसेनाम् ।

विटः–चिह्नं भूषणशब्दाद्युपलक्षणं माल्यगन्धादि । अस्ति किंचिच्चिह्नमुपलक्षयसीति ।

---

१ पखि A B (bcd) C D F G I J; पक्खि B (c) E D E F I J. २ मशि A B (bcd) G. ३ दीशन्ती A B (c) J; दीशन्ती om. A B (c) C D F I. ४ दीशन्ती दीशन्ती E. ५ ज्जेव्व E; ज्जेव F J, च्चेअ D H. ६ पणट्ठा A B (ac) C D F G I J, पणश्टा B (b) E. ७ निष्फलतां E G. ८ भावे om. G. ९ वशन्तशेणिअं A. १० किंचिच्चिह्नं A B (bc) E G I; चिह्नं om D ११ यत् om B (d).

शकारः । भावे भावे किं विअ (७५) ।

विटः । भूषणशब्दं सौरभ्यानुविद्धं माल्यगन्धं वा ।

शकारः । शुणामि मल्लगन्धम् । अन्धआलपूलिदाए उ णोशिआए र्ण शुव्वत्तं पेक्खामि भूशणशद्दं (७६) ।

विटः । जनान्तिकम् । वसन्तसेने

कामं प्रदोषतिमिरेण न दृश्यसे त्वं
सौदामिनीव जलदोदरसंधिलीना ।
त्वां सूचयिष्यति तु माल्यसमुद्भवोयं
गन्धश्च भीरु मुखराणि च नूपुराणि ॥ ३९ ॥

श्रुतं वसन्तसेने ।

वसन्तसेना । स्वगतम् । सुदं गहिदं च (७७) । नाट्ये नूपुराण्युत्सार्य माल्यानि चापनीय किंचित्परिक्रम्य हस्तेन परामृश्य

शका०—(७५) किं विअ कीदृशमित्यर्थः ।

शका०—(७६) शृणोमि माल्यगन्धम् । अन्धकारपूरितया पुनर्नासिकया पुनः (?) न सुव्यक्तं पश्यामि भूषणशब्दम् । अत्र मल्लगन्धमित्यादिना लोकविरुद्धोक्तिः ।

[काममिति] ॥ ३९ ॥

वस०—(७७) श्रुतमवधारितम् । गृहीतमस्य तात्पर्यमस्या(स्या)कलितम् ।

---

१ भावे om G. २ पूरिदाए B (a). ३ णाशिकाए B d. ४ ण om A B C D E F G J. ५ शुव्वत्तं A B (c) C D E I; शुवत्तं H (b). ६ उई पेक्खमि (=पुनर्न पश्यामि) A B (bc) C D E F G I J. ७ भूशण A ८ दृश्यते B (d). ९ सौदामनीव B (d) C D H J. १० संधिलीना H (ab). (a) has त्वया after वसन्तसेने. ११ गहीदं D H. १२ अ B (a) D H J.

अम्मो भित्तिपरामरिससूचिदं पक्खदुआरअं क्खु एदं । जाणामि अ संजोएण गेहस्स संवुदं पक्खदुआरअं (७८) ।

चारुदत्तः । वयस्य समाप्तजप्योऽस्मि । तत्सांप्रतं गच्छ मातृभ्यो बलिमुपहर ।

विदूषकः । भो ण गमिस्सं (७९) ।

चारुदत्तः । धिक्कष्टम् ।

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥३६॥

अपि च ।

---

(७८) अम्मो आश्चर्ये । भिति(त्ति) परामर्शसूचितं पक्षद्वारं खल्वेतत् । जानामि संयोगेन स्पर्शनेन्द्रियानुभवेन । गृहस्य संवृतं पक्षद्वारकम् ।

(विदू०-(७९) भो न गमिष्यामि) ।

[दारिद्र्यादिति ।] बान्धवजनो वाक्ये न संतिष्ठते वचनं न करोतीत्यर्थः । प्रतापाभावात् । स्फारीभवन्त्येकीभवन्ति । तत्तस्य संभावितं चौर्यादिकम् । इदमस्य नासीदिदानीं कथमित्यादितः ॥ ३६ ॥

---

परिदासूइदं A B (c) I; भित्तिसूइदं H (bcd) E G J; भरिसासूइदं C D F. रअं D H. ३ खु G. ४ अ° om D H. ५ संजोएण D H. ६ दुवारअं D H. रअं A B (c) F. ८ तस्य B (a). ९ पर्दं म्लायते B (d).

सङ्गं नैव हि कश्चिदस्य कुरुते संभाष्यते नादरा-
त्संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते ।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया
मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ३७॥

अपि च ।

दारिद्र्य शोचामि भवन्तमेव-
मस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये
ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ ३८ ॥

विदूषकः । सवैलक्ष्यम् । भो वअस्स जइ मए गन्त
व्वं ता एसा वि मे सहाइणी रदणिआ भोदु (८०) ।

चारुदत्तः । रदनिके मैत्रेयमनुगच्छ ।

[सङ्गमिति ।] अल्पच्छदो वस्त्रविहीनः ॥ ३७ ॥

[दारिद्र्येति । ] भवन्तमेव शोचामि । विनष्टदेहे मयि(यि) क्व यास्यसि । अस्मत्सदृक्सार्वदिकः सुह(हृ)त्कोपि नास्तीत्यर्थः । अर्थपरत्वात्पुंलिङ्गत्वम् । यद्वा तमेव भयमुत्पत्तिं स्मरामीति कुत्र्या त्र्या । सुहृन्मित्रमतो हेतोर्मयि विनष्टदेहे क्व यास्यसि त्वमिति चारुदत्तस्य चिन्ता ॥ ३८ ॥

विदू०—(८०) भो वयस्य यदि मया गन्तव्यं तदेषापि सहायिनी रदनिका भवतु । सहाइणी द्वितीया ।

---

१ संभाषते J. २ संप्राप्तो ? B (a). ३ विहरति ? D. ४ वअस्स A B (c) J. ५ एसा A B ( ) Γ I. ६ सहाइणी A B (c), सहायिणी B (a). ७ रअणि B (a) ८ होदु D H.

रदनिका । जं अज्जो आणवेदि (८१) ।

विदूषकः । भोदि रदणिए गेण्ह वेलिं पदीवं च । अवावुदं पक्खदुआरअं करेमि (८२) । तथा करोति ।

वसन्तसेना । मम अब्भुववत्तिणिमित्तं विअ अवावुदं पक्खदुआरअं । ता जाव पविसामि । दृष्ट्वा । हद्धी हद्धी । कधं पदीवो (८३) । पटान्तेन निर्वाप्य प्रविष्टा ।

चारुदत्तः । मैत्रेय किमेतत् ।

विदूषकः । अवावुदपक्खदुआरएण पिण्डीकिदेण वादेण णिव्वाविदो पदीवो । भोदि रदणिए णिक्कम तुम पक्खदु-

---

चेटी (रद०)–(८१) यदार्य आज्ञापयति ।

विदू०–(८२) भवति रदनिके गृहाण वर्लि प्रदीपं च । अहमपावृतं पक्षद्वारकं करोमि ।

वस०–(८३) ममेवाभ्युपपत्तिनिमित्तमपावृतं पक्षद्वारकम् । तद्यावत्प्रविशामि । अपावुदं अपावृतम् । अभ्युपपत्तिरनुग्रहः । हद्धी हद्धीति भये । कथं प्रदीपः । पटान्तेन प्रदीपनिर्वापणं केनाप्यन्येन निजानवलोकनाय कृतं वसन्तसेनयेति ज्ञेयम् ।

विदू०–(८४) अपावृतपक्षद्वारेण पिण्डीकृतेन वातेन निर्वापितः प्रदीपः । भवति रदनिके निष्क(ष्का)म त्वं पक्षद्वारकेण ।

---

१ अज्ज A B (bed) E F G. I. २ पदीवं वलिं अहं H (c); वलिं पदीवं अ G J; (a) वलिं D H. ३ अहं अवावुदं A B (c) G E F G J; अहं अवाउदं B ४ दुवारअं D H. ५ तथा करोति om. D H ६ मम विअ H (c) E G; मम वि (d). ७ विअ om. A B (d) D E F G. ८ दुवारअं D H. ९ हद्धि हद्धि H om G. १० दुवारेण A B (bed); दुवारेण D E H; दुवारएण D. ११ किदेण H. १२ रदणिए A. १३ Vide 15.

आरएण । अहंपि अब्भन्तरचदुस्सालादो पदीवं आअच्छामि (८४) । इति निष्क्रान्तः ।

शकारः । भावे भावे अण्णेशामि वशन्तशेणिअं (८५)

विटः । अन्विष्यतामन्विष्यताम् ।

शकारः । तथा कृत्वा । भावे भावे गहिदा गहिदा (८६)

विटः । मूर्ख नन्वहम् ।

शकारः । इदो दाव भविअ एअन्ते भावे चिट्ठदु । पुरन्विष्य चेटं गृहीत्वा । भावे भावे गहिदा गहिदा (८७) ।

चेटः । भट्टके चेडे हग्गे (८८) ।

---

अहमप्यभ्यन्तरचतुःशालातः प्रदीपं प्रज्वाल्यागच्छामि । अस्य पीत (?) (अस्थगित)द्वारेण प्रसरणाभावात्पिण्डीभूतेनैकीभूतेन प्रतिबध(बन्ध)कत्वादपावृते पक्षद्वारे सति निर्वापितो दीपः ।

शाका०—(८५) भाव भाव अन्वेषया(न्विष्या)मि वसन्तसेनिकाम् ।

शाका०—(८६) भाव भाव गृहीता गृहीता ।

शाका०—(८७) इतस्तावद्भूत्वैकान्ते भावस्तिष्ठतु । भाव

चेटः—(८८) भट्टारक चेटोऽहम् ।

---

१ अहंवि B (a) D. २ अभ्भ० H. ३ चदुस्सा० B (a). ४ पज्जा[illegible] D ५ आअत्थामि B (c); आच्छामि B (d). ६ अण्णिशं अण्णितम् ? B ([illegible] [illegible] दा गहीदा D H. ८ एकन्ते G. ९ चिट्ठदु A B (de) D F G; चिठ्ठदु B (a). Com इ B (a). १० भाव गाव B (a). ११ गुहिदा गुहिदा (?) B (a); गहिदा ० B (b); गहीदा गहीदा D H. १२ भट्टके A B (ac) C D F G I; भट्टके (bc) K. १३ हग्गे A B (bcde) D.

विटः । सवैलक्ष्यम् । महाब्राह्मण मर्षय मर्षय । अन्यजनशङ्कया खल्विदमनुष्ठितं न दर्पात् । पश्य ।

सकामान्विष्यतेऽस्माभिः

विदूषकः । किं इअं (७)।

विटः । शान्तं पापम् ।

काचित्स्वाधीनयौवना ।

सा भ्रष्टा शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥ ४४

सर्वथेदमनुनयसर्वस्वं गृह्यताम् । इति खड्गमुत्सृज्य कृताञ्जलिः पादयोः पतति ।

विदूषकः । सप्पुरिस उट्ठेहि उट्ठेहि । अआणन्तेण तुमं उवालद्धो । संपदं उण जाणन्तो अणुणेमि (८) ।

विटः । ननु भवानेवात्रानुनेयः । तदुत्तिष्ठामि समयेन

---

विदू०(विटः)—महाब्राह्मणश्चण्डालः (?) । [ सकामेति । सकामा स्वाधीनयौवनेति पदाभ्यामस्या धारणं नापराधाय सा पेरं तिष्ठति । न त्वियमित्याशयः । शीलवञ्चना दुश्चरितसंभावना ॥ ४४

(७) [किमिव । ]

विदू०—(८) सत्पुरुष उत्तिष्ठोत्तिष्ठ । अज(जा)नता त्वमुपालब्धः । सांप्रतं पुनर्जानन्ननुनयामि । आदरविषयतानुनयः

---

१ [illegible] B (a). २ [illegible] A B (c) C F I. J. ३ [illegible] B ४ अजाणन्तेण D H. ५ [illegible] B (a). ६ [illegible] A B (b.) C E F ( °[illegible] H. ७ om. E h.

विदूषकः । भणादु भवं (९) ।

विटः । यदीमं वृत्तान्तमार्यचारुदत्तस्य नोख्यास्यसि ।

विदूषकः । ण कधइस्सं (१०) ।

विटः । एष ते प्रणयो विप्र शिरसा धार्यते मया ।
गुणशस्त्रैर्वयं येन शस्त्रवन्तोपि निर्जिताः ॥४६॥

शकारः । सासूयम् । किं णिमित्तं उण भावे एदश्श दुश्टवडुअश्श किविणं अञ्जलिं कदुअ पाएशु णिवडिदे (११)।

विटः । भीतोस्मि ।

शकारः । कश्श तुमं भीदे (१२) ।

विटः । तस्य चारुदत्तस्य गुणेभ्यः ।

शकारः । के विअ तश्श गुणा जश्श गेहं पविशिअ अशिदव्वं पि णत्थि (१३) ।

---

समयः क्रियाबन्धः । समयमेवाह । यदीममिति ।(९) [भणतु भवान् ।]
(१०) [न कथयिष्यामि ।][एष ते इति ।] गुणशस्त्रैः गुणा एव शस्त्राणि तैः ॥ ४६ ॥

शका०–(११) किंनिमित्तं पुनर्भाव एतस्य दुष्टबटुकस्य थिनशाञ्जलिं कृत्वा पादयोर्निपतितः ।

विदू० (शका०)–(१२) [कस्मात्त्वं भीतः ।] (१३) के इव तस्य गुणा यस्य गृहं प्रविश्याशितव्यं भोक्तव्यमिति(मपि) नास्ति ।

---

१ आर्य om: A B (bcd) D E F G २ नाख्यापयसि D H. ३ दुड A B (abcd) E F G; दुट J. ४ षडुकश B (b); बडुकश्श A B (c) F; वडुअश्श B (d). ५ [illegible]णअंजलिं A B (c) C D E F G I. J; किं विणअं अंजलिं B (a) शविणअंजलिं [illegible] (b). ६ पादेशु D H. ७ चारुदत्तस्य A. ८ यश्श J. ९ पविशिअ B (d). [illegible] B (a) D. ११ णत्थि B (b).

विदूषकः । कअन्तेण (२३) ।

शकारः । तो उट्ठेहि उट्ठेहि (२४) ।

विदूषकः । उट्ठिस्सामो (२५) ।

शकारः । कदा (२६) ।

विदूषकः । जदा पुणो वि देव्वं अणुऊलं भविस्सदि (२७) ।

शकारः । अले लोद लोद (२८) ।

विदूषकः । रोदाविदा जेव्व अम्हे (२९) ।

शकारः । केण (३०) ।

विदूषकः । दुग्गदीए (३१) ।

---

विदू०—(२३) कृतान्तेन ।
शका०—(२४) उत्तिष्ठोत्तिष्ठ ।
विदू०—(२५) उत्थास्यामः ।
शका०—(२६) कदा ।
विदू०—(२७) यदा पुनरपि दैवमनुकूलं भविष्यति ।
शका०—(२८) अरे रो(रु)दिहि रो(रु)दिहि ।
विदू०—(२९) रोदाविदा इति रोदायि(दि)ता इत्यप्रयत्नमसं- ने रोदनं कारिता इत्यर्थः । एव वयम् ।
शका०—(३०) केन ।
विदू०—(३१) दुर्गत्या ।

---

किदंतेण D. H. २ om. A B (bcd) C D E F G. ३ om. A B (bc) D I; उच्छेहि H (d); उट्टेहि E. ४ यदा B (d). ५ लोदाविदा D. ६ ज्जेव C J; DH. ७ दुग्गदिए H.

अम्हेहिं वेलक्कालाणुणीअमाणा तुह गेहं पविट्ठा । ता जइ मम हस्ते शअं ज्जेव्व पट्ठाविअ एणं शमप्पेशि तदो अधिअलणे ववहालं विणा लहुं णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविश्शादि । आदु अणिज्जादमाणाह आमलणन्तिके वेले हुविश्शादि । अवि अ पेक्ख पेक्ख (३६) ।

कक्कालुका गोछडलित्तवेण्टा
शाके अ शुक्खे तलिदे हु मंशे ।
भत्ते अ हेमन्तिअलत्तिशिद्धे
लीणे अ वेले ण हु होदि पूदी(३७)॥५१॥

---

व्यवहारनाम्नो नवमाङ्कस्य सूचनम् । लघु शीघ्रम् । णिज्जादमाणाह निर्यातयतः । वसन्तसेनां निःसार्यत इत्यर्थः । प्राकृते कुतः शानन्त् संस्कृतेन दुर्लभः । माणाहेति पठ्यन्तं यथापूर्वमुक्तम् । चारुदत्तस्येत्यत्र चालुदत्ताहेति समूह्यम् । एवमेवात्र सर्वत्र । तव मयानुबद्धा प्रीतिर्भविष्यति । आदु अथवा । अणिज्जादमाणाहानिर्यातयतः । आमरणान्तिकं वैरं भविष्यति । अपि च प्रेक्षस्व प्रेक्षस्व ।

[कक्कालुका इत्यादि ।] उपजातिच्छन्दसा पद्यम् । कूष्माण्डी गोमयलिप्तवृत्ता(न्ता) शाकं च शुष्कं तलितं खलु मांसम् । तलितं स्नेहपक्वे देशीत्येके । भक्तं च हैमन्तिकरात्रिसिद्धं लीणे अ वेले इति लीनायां च वेलायाम् । गते समय इत्यर्थः । लीणे वेले इति

शोट्ठकं भणेशि । लेहुकं भणेशि । तेधा भणेशि जधा हग्गे अत्तणकेलिकाए पाशादबालग्गकवोदवालिआए उवविश्टे शुणिश्शं । तधा जदि ण भणेशि. तों कवालतलप्पविश्टं कविस्थं विअ मस्तअं दे मडमडाइश्शं (३८) ।

विदूषकः । भणिस्सं (३९) ।

पुंलिङ्गं शाकारवचनत्वेन न दोषः । अतः पूर्वमेवोक्तम् । 'लिङ्गविहीनम्' इत्यादीति ध्येयं सुधीभिः । न खलु भ(व)ति पूतिर्दुर्गन्धतापि तु भवत्येवेति काकुः । चिरंतनत्वेन प्रशिथिलं स्वकार्यम् ॥ ९१ ॥

(३८) शोट्ठिकं. स्वस्तिकं- शोभनं भणिष्यसि । लघुकं ष्यसि । तथा भणिष्यसि । भणेशीति भविष्यवर्तमानयोस्तुल्यं रूपम् । यथाहमात्मनः केलिकायां(?) प्रासादबालाग्रकपोतपालिकायां विटङ्के । 'बालाग्रं मत्तवारणम्' । कपोतपालिकोपरिगृहश्रेणीति दक्षिणापथे लोकोक्तिरियमिति प्राचीनटीका । उपविष्टः शृणोमि । अन्यथा यदि न भणसि तदा कपाटतलप्रविष्टं कपित्थगुलिकामिव मस्तकं तव दा त्यविशेषयुक्तं तथा भक्षयिष्यामि यथा लोकोऽस्त्या मडमडाइदश मिति व्याख्यायते ।

विदू०-(३९) भणिष्यामि ।

१ शो ट्ठुकं A B (c), सोण्ड्क ? pr. m. corr शास्तकं H (d), शोथुक K, शो B (a), शोट्ठिक C, शोट्ठुकं E. २ लघुकं B (a); लडुकं B (b), लस्तकं H (d) d syl. स्त et in marg add घु B (d), लहुअं DH, लघुक. K. ३ तथा B (d) ४ जंधे AB (bcd) CDEFGIJ. ५ °लिआए DH, केलीकाए I ६ वालिआए (abcd) DEFGI ७ °विट्ठे AB (c) CDFGJ, उवविशे B (a). ८ शुणामि (bcd) CDEFGIJ. ९ अण्णधा AB (bcd) CDEFG; अण्णधा दि H १० (a). ११ पविट्ठं AB (c), पविश्टं H (a), °विट्ठ B (b), °पविट्ठं B (d). १२ गुलिअं AB (bcd) EFGHJ कविट्ठं गुलिअं D. also H which has विट्ठ १३ AB (c) CDFGIJ; मस्तकं H (ad) K, मस्तअं B (b) १४ मडिइशं मडि

शकारः । अपवार्य । चेडे गेडे शचक़ उज्जेव्व भावे (४०)।

चेटः । अध इं (४१) ।

शकारः । ता शिग्घं अवक्कमम्ह (४२) ।

चेटः । ता गेण्हदु भश्टके अशिं (४३) ।

शकारः । तव उज्जेव्व हश्ते चिश्टदु (४४) ।

चेटः । एशो भश्टालके गेण्हदु णं भश्टके अशिं (४५)।

शकारः । विपरीतं गृहीत्वा ।

---

शका०–(४०) हे चेट गतः सत्यमेव भावो विटः ।

चेटः–(४१) अथ किम् ।

शका०–(४२) ततः शीघ्रमपाक्र(क्रा)माय: ।

चेटः–(४३) तद्गृह्णातु भट्टारकोऽसिम् ।

शका०–(४४) तवैव हस्ते तिष्ठतु ।

चेटः–(४५) एषोऽसिः । भट्टारकः स्वामिको । गृहाणेमं भट्टारकोऽसिम् ।

शका०–[णिव्वक़लमित्यादि ।] उपजातिच्छन्दसा [पद्यम्] ।

णिव्वकलं मूलकपेशिवण्णं
खन्धेण घेत्तूण अ कोशशुत्तं ।
कुक्केहिं कुक्कीहिं अ बुक्कअन्ते
जधा शिआले शलणं पलामि(४६)॥५२॥

परिक्रम्य निष्क्रान्तौ ।

विदूषकः । भोदि रदणिए णं हु दे अअं अवमाणो तत्तभवदो चारुदत्तस्स णिवेदइदव्वो । दोग्गच्चपीडिअस्स दिउणदरा पीडा हुविस्सदि (४७) ।

रदनिका । अज्ज मित्तेअ रदणिआ खु अहं संजदमुही (४८) ।

( ४६ ) निर्वल्काल(?)निरुप्याले इत्यर्थः(?)(णिव्वकलं निर्वल्का... त्यर्थः) । मूलकपेशिवण्य(ण्ण)म् । पेशिस्त्वक् । मूल... लोहितमित्यर्थः । स्कन्धेण घेत्तूण गृहीत्वा च कोशसुप्तम् । कोशावस्थितमित्यर्थः । कुक्कुरैः कुक्कुरीभिश्च बुक्कअन्ते शब्दायमानो यथा शृगालः शरणं गृहं प्रयाति तथा स्वगृहं प्रयामि ॥ ५२ ॥

विदू०–(४७) रदनिके न खलु तेयं कुक्कुरकुक्कुरीस्थाने प्रकृतः शकारेण केशग्रहणेन कृतश्चापमानस्तत्रभवतः पूज्यस्येत्यर्थः चारुदत्तस्य निवेदयितव्यः । दौर्गत्यपीडितस्य मन्ये द्विगुणतरा पीडा भविष्यति ।

रद०–(४८) आर्य मैत्रेय रदनिका खल्वहं संयतमुखी ।

१ कोशिशुत्तं K. २ कुक्केहि B (bd) C E; °क्केहिं H. ३ कुक्कीहि B (bd) C कुक्कीहिं H. ४ बुक्कअन्ते B (ab) K; बुक्कंते H. ५ भो रद० G. ६ ण हु B ण क्खु J. ७ °भोदो° D H. ८ णिवेदयिदव्वो B (d); °णिवेद° H. ९ ... १० हुविस्सदि H (d). ११ om: B (a). १२ रअणिआ A B (bc) E रणिआ B (d). १३ क्खु C D F.

माथुरः । उच्छोदिदोम्हि मूसिदोम्हि (३९)।

चेटी । जधा एदे उद्धं पेक्खन्ति दीहं णीससन्ति विसूरअन्ति अ अहिलिहन्ति अ दुआरणिहिदलोअणा तधा तक्केमि एदे दे सहिअजूदिअरा हुविस्सन्ति । उपगम्य । अज्ज वन्दामि (४०)।

माथुरः । सुहं तुहं होदु (४१)।

चेटी । अज्ज कदमो तुम्हाणं सहिओ (४२)।

माथुरः ।

कॆ इश तुहं तणुमज्झे अहरेण रैददद्दुव्विणीदेणं ।

---

माथु०–(३९)उत्खाति(उत्सादि)तोस्मि मू(मु)पितोस्मि ।

चेटी–(४०) यथैतावूर्ध्वं प्रेक्षेते दीर्घं निश्वस्तः(श्वसितः) च विसूरभन्ति विचारयतश्चाभिलपतश्च द्वारनिहितलोचनौ तथा तर्कयाम्येतो तौ सभिकः द्यूतकरः(स० द्यू० रौ)भविष्यतः । आर्य वन्दे । प्राकृत आत्मनेपदाभावादित्यपि बोध्यम् ।

माथु०–(४१) सुखं तव भवतु ।

चेटी–(४२) आर्य कतमो (कतरो) युष्माकं (युवयोः) सभिकः ।

माथु०–(४३) [करशेति । ]आर्याछन्दः । कस्य त्वं तनुमध्ये

---

१ उत्सा० D. H. २ मुसिदो० J. मूशिदो K. ३ एदो? B (b). ४ उद्ध B (b) उद्दे. B (b). ५ °सन्तिअ BD ६ om AB (bc). ७ °लहन्ति J. ८ दुआर° AB (bc) FG. ९ सहिआजूदिअला AB (bcd) F. G. K, जूदअला D. H १० हवि० D. H हविस० F. ११ वन्दामि B (d). १२ सहं तुह F. तुए J. १३ होद B (a) होदु corr. होउ B (d). १४ कसस J. १५ तुहु AB (c) K. तुमं J. १६ रददद्द BB (ad). इददद? E. १७ ०देन C.

जेम्पसि मणहरवअणं ओलोअन्ती कडक्खेण ॥१६॥

णत्थि मम विहवो । अण्णत्त वज (४३) ।

चेटी । जइ ईदिसाइं णं मन्तेसि ता ण होसि जूदिअरो । अत्थि कोवि तुम्हाणं धारओ (४४) ।

माथुरः । अत्थि । दशसुवण्णं धालेदि । किं तस्स (४५) ।

चेटी । तस्स कारणादो अज्जआ इमं हत्थाभरणं पडिवादेदि । णहि णहि सो ज्जेव्व पडिवादेदि (४६) ।

---

अपरेण एतद्दुर्विनीतेन । जल्पसि मनोहरवचनमालोकयन्ती कटाक्षेण ॥ एते द्यूत एव दुर्विनीतः सगर्वः । विशेषणे तृतीया ॥१६॥

नास्ति मम विभवः । अन्यत्र व्रज ।

चेटी–(४४) यदीदृशानि ननु मन्त्रयसि तदा न भवसि द्यूतकरः । अस्ति कोपि युष्माकं (युवयोः)धारकः ।

माथु०–(४५) अस्ति । दशसुवर्णं धारयति । किं तस्य ।

चेटी–(४६) तस्य कारणादार्येदं हस्ताभरणं प्रतिपादयति । नहि नहि स एव प्रतिपादयति ।

---

१ जम्पसि J. २ मम्मह° H (a); मम्मण° J. ३ आलोअंदी D. H. ४ नत्थि AB (c). ५ मे BB (a) ६ अण्णच (णच) H. ७ वज्ज BDG, व्वज. J. ८ ण म० B, B (ad). ९ जदि° (?)AB (c) जूदअ० D. ०आरो H. १० कोपि B. (d). ११ दशसु० AB (bc); दश० B (a);. १२ धाले (दि)? B (d). १३ कालणा० AB (abcd) DK. १४ अज्जुआ B, अज्जुआए K. १५ °भलणं AB (abcd) D, K. १६ °वालेदि B(a). om B. (d) K. णहिणहि whole om: E.

**माथुरः ।** सहर्षं गृहीत्वा । अले भेणेशि तं कुलवुत्तं भूदे तुए गन्डु । आअच्छ । पुणो जूदं रमेह (४७) । इति निष्क्रान्तौ ।

**चेटी ।** वसन्तसेनामुपसृत्य । अज्जए पँडितुट्ठा गदा संहिअजूदिअरा (४८) ।

**वसन्तसेना ।** ता गच्छेदु अज्जो बन्धुअणं समस्सासिदुं (४९) ।

**संवाहकः ।** अज्जए जइ एव्वं ता इअं कला पलिअणहत्थेगदा कलीअदु (५०) ।

**वसन्तसेना ।** अज्ज जस्स कारणादो इअं कला

---

माथु०–(४७) अरे भणसि त्वं कुलपुत्रं भूतस्तव गण्डः । आगच्छ । पुनर्द्यूतं रमस्व । कुलपुत्रं संवाहकम् ।

चेटी–(४८) आर्ये परितुष्टा गताः सभिका(क)द्यूतकराः (परितुष्टौ गतौ सभिकद्यूतकरौ) । बहुवचनमादरे ।

वस०–(४९) तद्गच्छत्वार्यो बन्धुजनं समाश्वासि(सयि)तुम् आर्यः संवाहकः ।

संवा०–(५०) आर्ये यद्येवं तदियं कला परिजनहस्तगता क्रियताम् । इयं-कला संवाहक(न)रूपा ।

---

१ डमी D (ad). २ भणेसि B. ३ कुलपुत्तअं D; पुत्तं D (d). ४ तुए B D. ५ रमेह G. K. ६ om: B. ७ परितुट्ठा B. ८ साहिआ AB (bcd) DG ९ जूद° DB. १० गच्छदु B (a). ११ परिअण AB (bcd) D. १२ हत्थं B (a) °गदा B (d). १३ करीअदु B (ad). १४ काल° D.

सिक्खीअदि सो उज्जेव अज्जेण सुस्सूसिदपुरुव्वो सुस्सूसिदव्वो (५१) ।

**संवाहकः** । स्वगतम् । अज्जुआए णिउणं पच्चादिट्ठोम्हि । कधं पच्चुवकलिश्शं । प्रकाशम् । अज्जए. अहं एदिणा जूदिअलावमाणेण शक्कशमणके हुविश्शं । ता शंवाहके जूदिअले शक्कशमणके शंवुत्तेत्ति शुमलिदव्वा अज्जआए एदे अक्खलु (५२) ।

**वसन्तसेना** । अज्ज अलं साहसेण (५३) ।

**संवाहकः** । अज्जए कैले णिच्चए । इति परिक्रम्य ।

---

वस०–(५१) आर्य यस्य कारणादियं कला शिक्ष्यते स एवार्येण शुश्रूषितपूर्वः शुश्रूषितव्यः ।

संवा०–(५२) आर्यया निपुणं प्रत्यादिष्टोस्मि । कथं प्रत्युपकरिष्ये । प्रकाशम् । आर्ये अहमेतेन द्यूतकरापमानेन शाक्यश्रमणको भविष्यामि । शाक्यश्रमणको बौद्धसंन्यासी । तत्संवाहको द्यूतकरः शाक्यश्रमणकः संवृत्त इति स्मर्तव्यान्यार्ययैतान्यक्षराणि । द्यूतकर इति संवाहकविशेषणम् ।

वस०–(५३) आर्य अलं साहसेन ।

संवा०–(५४) आर्ये कृतो निश्चयः । [ जूदेणेति । ] आर्याछन्दः ।

---

१ सिक्खिअदि D ; सिसि° G. २ सोज्जोठ B (b). ३ पुरुवो H; पुव्वो. K. ४ सिक्खिदव्व (= शिक्षितव्य ) K. ५ °दिट्टे° B. ६ ता कधं B B (ad) ७ पच्चुप° B (d). ८ अह B (a). ९ णाअदि Syll om: B (b). १० जूदिअरा B (a); जूदअला D. ११ शक्कश्श° B, °शवणके A B (bcd) DE; शवण्णके K. १२ हविश्शं DFH. १३ जूदअले B (a) जूदअले D. H. १४ शक्कश्श० B; °शवणकेDG. १५ शुमलिदव्वो B (ad). १६ °सेन D. १७ कली B (b).

पेक्खिस्सं गदुअ । अह वा किं मम एदिणा । जधावव-शिदं अणुचिट्ठिस्सं (९९) । इति निष्क्रान्तः ।

ततः प्रविशत्यपटीक्षेपेण प्रहृष्टो विकटोज्ज्वलवेशः कर्णपूरकः ।

कर्णपूरकः । कहिं कहिं अज्जआ (९६) ।

चेटी । दुम्मणुस्स किं ते उव्वेअकारणं । जं अग्गदो वट्टिदं अज्जअं न पेक्खसि (९७) ।

कर्णपूरकः । दृष्ट्वा । अज्जए वन्दामि (९८) ।

वसन्तसेना । कण्णऊरअ परितुट्ठमुहो लक्खीअसि । ता किं ण्णेदं (९९) ।

---

किं प्रयोजनम् । न किमपीत्यर्थः । यथाध्यवसितं नास्तिकसंन्यासरूपं निश्चितम् ।

इति निष्क्रान्तः । इत्युक्त्वा रङ्गान्निर्गत इत्यर्थः । संवाहकः शाक्यसंन्यासमासाद्य पथि भ्रमचारेति ज्ञेयम् । कर्णपूरको वसन्तसेनाया भृत्यः । वसन्तसेना च राजेव करितुरगरथधनादिमहैश्वर्यशालिनीत्यपि बोध्यम् ।

कर्ण०–(९६) कुत्र कुत्रार्या ।

चेटी–(९७) दुर्मनुष्य किं ते उद्वेगकारणम् । यदग्रतोऽवस्थितामार्यां न प्रेक्षसे ।

कर्ण०–(९८) आर्ये वन्दे ।

वस०–(९९) कर्णपूरक परितुष्टमुखो लक्ष्यसे । तत्किं ने-(ण)दम् ।

---

१ पेक्खिस्सं AB (bc) D. २ गदुअ किं न म & H (b) ३ °ववसिपदं B (a); °ववसिदं B (d); जधा वसिदं C. J. ४ °चिट्ठस्सं B. ५ °प्रविशति अपटाक्षेपेण AB (c) FG °प्रविश्य कर्णपूरो हृष्ट अपटीक्षेपेण B (b) पटीक्षेपेण B (d) अपटाक्षेपेण c. पटाक्षेपेण D. H, ६ °वेश B (b) E, °वेष D. ७ कहिं अज्जुआए H (a) ; कहिं अज्जुआ G K. ८ °कारण. AB (c) D ९ नं H. १० whole speech om. B (ab) K. ११ परितुट्ठ° AB (cd) D, परिदुट्ठ° F. १२ णेदं AB (cd) D.

**कर्णपूरकः** । सविस्मयम् । अज्जए वञ्चिदासि जाए अज्ज कण्णऊरअस्स परक्कमो ण दिट्ठो (६०) ।

**वसन्तसेना** । कण्णऊरेअ किं किं (६१) ।

**कर्णपूरकः** । सुणादु अज्जआ । जो सो अज्जआए खुण्टमोडओ णाम दुट्ठहत्थी सो आलाणत्थंभ भञ्जिअ महमेत्थ वावादिअ महन्तं सङ्खोह करन्तो राअमग्ग ओदिण्णो । तदो एत्थन्तरे उग्घुट्ट जणेण ।

ओवणेध बालअजण तुरिद ओरुहध वुक्खपासाद ।
किं णॆं हु पेक्खध पुरदो दुट्ठो हत्थी इदो एदि ॥१८॥ (६२)

---

कर्ण०–(६०) आर्ये वञ्चितासि यया‍द्य कर्णपूरकस्य पराक्रमो न दृष्ट ।

वस०–(६१) कर्णपूरक किं किम् ।

कर्ण०–(६२) शृणोत्वार्या । य स आर्याया खुण्टमोडको नाम दुष्टहस्ती स आलानस्तम्भ भङ्क्त्वा । [मह]मित्थ महामात्रम् । हस्तिपकमित्यर्थ । वावादिअ व्यापाद्य । मारयित्वेत्यर्थ । महान्त सक्षोभ कुर्वन्राजमार्गमवतीर्ण । ततोऽत्रान्तर उद्घुष्ट जनेन ।

[अवणेधेति ।] आर्याछन्द । अपनयत बालकजन त्वरितमारोहत वृक्षप्रासादम् । किं न खलु प्रेक्षध्व पुरतो दुष्टो हस्तीत एति ॥ १८ ॥

---

१ कण्णऊरस्स B (a) २ °ऊर B (ad), °ऊरआ B (b), °हुरअ K ३ om AB (bcd) DEh ४ वगुह D वुइ H ५ भलाग H ६ दंभं BCD ७ महत्थ B (a) मत्थं com महत्थ B (d) महामेत्त D H °मेत्त J मत्थ h ८ करन्तो BD ९ °दिण्णो B (a) १० °घुट्ट B (a) ११ अवणध B (a) १२ °रुहह B °रुहदु AB (c) Dh, °रुहद B (ab) h, °रुह B (d) १३ दक्ख BFh १४ टण B (a) ण्ण DIH

अवि अ ।

विअलइ णेउरजुअलं छिज्जन्ति अ मेहला मणिक्खइआ ।
वलेआ अ सुन्दरदरा रअणङ्कुरजालपडिवद्धा ॥ १९ ॥

तदो तेण दुट्टहत्थिणा करचलणरदणेहिं फुल्लणलिणिं विअ णअरिं उज्जइणिं अवगाहमाणेण समासादिदो परिव्वाजओ । तं च परिभट्टदण्डकुण्डिआभाअणं सीअरेहिं सिञ्चिअ दन्तन्तरे क्खित्तं पेक्खिअ पुणोवि उग्घुट्टं जणेण हा परिव्वाजओ वावादीअदित्ति । (६३)

वसन्तसेना । ससंभ्रमम् । अहो पमादो अहो पमादो (६४)।

---

अपि च ।

[विअलईति ।] आर्याछन्दः । (६३) विचलति नूपुरयुगलं छिद्यन्ते च मेखला मणिखचिताः । वलयाश्च सुन्दरतरा रत्नाङ्कुरजालप्रतिबद्धाः ॥ छिज्जन्तीत्यस्य क्षीयन्त इति वार्थः । (इत्यार्याद्वयोक्तं जनेनोद्धुष्टमुच्चैर्घोषणं कथितमित्यर्थः ॥ १९ ॥

ततस्तेन दुष्टहस्तिना करचरणरदनैः फुल्लनलिनीमिव नगरीमुज्जयिनीमवगाहमानेन समासादितः परिव्राजकः । तं च परिभ्रष्टदण्डकुण्डिकाभाजनं सीकरैः सिक्त्वा दन्तान्तरे क्षिप्तं प्रेक्ष्य पुनरप्युद्धुष्टं जनेन हा परिव्राजको व्यापाद्यत इति । अयं परिव्राजकः संवाहक एवेति ध्येयम् । व्यापाद्यते मार्यत इत्यर्थः ।

वस०—(६४) अहो प्रमादः [अहो] प्रमादः ।

---

१ छिज्जन्ति AB (c) DFH; छिज्ज° K. २ °क्खलिआ B (a). ३ वलआ D H. ४ करच° B; कालच° B (b). ५ पुप्फ AB (bcd). ६ णिं त्ति AB (bc) D; लिणि marg. अ H (d); णिञ्ज G; णीञ्ज K. ७ °गाह° AB (cd) D. ८ सादिओ B (a). ९ तं च B (a); त च B (b); तच J. १० °भट्ठ B (b) D. ११ कुडिआ B (d). १२ सीहरेहिं B (b); सीअरोहिं F, सिअरेहिं H १३ दंतेर B (d). १४ खित्त AB (bc). १५ उग्घुट्टं B (a) १६ ह B (a) om. marg हा B (d). १७ वावादिअदि without त्ति B (d); दिदंति G. १८ om. syll अहो-पमादो B (b) D H.

कर्णपूरकः । अलं सम्भमेण । सुणादु दाव अज्जआ । तदो विच्छिण्णविसण्ठुलसङ्खलाकलावअं उव्वहन्तं दन्तन्तरपरिग्गहिदं परिव्वाजअं उव्वहन्तं तं पेक्खिअ कण्णऊरएण मए णहि णहि अज्जआए अण्णपिण्डोवपुट्टेण दासेण वामचलणेण जूदलेक्खअं उग्घुसिअ उग्घुसिअ तुरिदं आवणादो लोहदण्डं गेह्णिअ आआरिदो सो दुट्टहत्थी (६५) ।

वसन्तसेना । तदो तदो (६६) ।

कर्णपूरकः ।

आहणिऊण सरोसं तं हत्थिं विञ्झसेलसिहराभं ।
मोआविओ मए सो दन्तन्तरसंठिओ परिव्वाजओ ॥ २० ॥ (६७)

---

कर्ण०–(६५) अलं संभ्रमेण । शृणोतु तावदार्या । ततो विच्छिन्नविसंष्ठुलशृङ्खलाकलापमुद्वहन्तं दन्तान्तरपरिगृहीतं परिव्राजकमुद्वहन्तं तं प्रेक्ष्य कर्णपूरकेण मया नहि नह्यार्याया अन्नपिण्डोपपुष्टेन दासेन वामचलनेन द्यूतलेखकमुद्धुष्योद्धुष्य त्वरितमापणाल्लोहदण्डं गृहीत्वाकारितः स दुष्टहस्ती । कर्णपूरकेण मयेति स्वनाम्नः स्वयं निर्दे(र्दे)शेन गर्वमाविर्भाव्य विनयं स्वामिन्याः पुरः प्रकटयति । नहि नहीत्यादि । वामचलनेन वक्रगमनेनेत्यर्थः ।

वस०–(६६) ततस्ततः ।

कर्ण०–[आहणिऊणेति ।] आर्याछन्दः (६७) । आहणिऊण-

---

१ °सङ्खला &c दन्त° B, विच्छिण्णविसङ्खला° B (a), °ण्णेविसला° B (b), विच्छिण्ण &c F, °सिङ्खला° J विसमवलावअं उव्व &c K २ om BCJ. ३ °ण्णिद B (d) ४ om. B (d) K ५ °उरेण DH. ६ °पिण्डो° B (abd) ७ वेण B (b) ८ °णपअं A H (bc) C D °दिलेक्खअ H (a) °लेक्खअ J ९ om, G १० °गि ह्णुअ H (a) °गिण्हुण B (b) °णीदण B (d), गिह्णअ° D. H. K, °गिण्हअ G ११ पतिदं G १२ विञ्झ D विज्झ J. १३ सेल B (d) सेल D H १४ सिह° D १५ परिव्वाजो B (a), पाडिदो B (d)

वसन्तसेना। सुट्ठु दे किदं। तेदो तदो (६८)।

कर्णपूरकः। तदो अज्जए साहु रे कण्णेऊरअ साहु-त्ति एत्तिअमेत्तं भणन्ती विसमभरकन्ता विअ णावा एक्कदो पल्हत्था सअला उज्जइणी आसि। तदो अज्जए एक्केण सुण्णाइं आहरणट्ठाणाइं परामसिअ उद्धं पेक्खिअ दीहं णीससिअ अअं पावारओ ममं उवरि क्खित्तो (६९)।

---

इत्य सरोषं तं हस्तिनं विन्ध्यशैलशिखराभम्। मोचितो मया स दन्तान्तरसंस्थितः परिव्राजकः। परिव्वाजओ इत्यत्र व्वाकारो ह्रस्वः पठनीयः॥ २०॥

वस०–(६८) सुट्ठु। ते त्वया। कृतम्। ततः।

कर्ण०–(६९) तत आर्ये साधु रे कर्णपूरक साधु इत्येतावन्मात्रं भणन्ती विषमभराक्रान्तेव नौरेकतः पर्यस्ता सकलोज्जयिन्यासीत्। तत आर्ये एकेन शून्यान्याभरणस्थानानि परामृश्योर्ध्वं प्रेक्ष्य दीर्घं निःश्वस्यायं प्रावारको ममोपरि क्षिप्तः। एकेन चारुदत्तेनेत्यर्थः। स्वाङ्गे भूषणानि न सन्तीति विनार्य दरिद्रोऽहं जात इति निर्विद्य देयान्तरविरह(हे)ण प्रावारकमेव प्रादादिति भावः। अयं यः प्रथमाङ्के वर्णितः प्रथमं स एव प्रावारक इति ज्ञेयम्।

---

१ कदं B, B (a); किदं corr: कदं B (d). २ तदोतदो om AB (bcd) D E. ३ °ऊर B (d). ४ एत्तिअ ? B (b); एत्ति आमत्तं A B (c) D; एत्ति अमत्तं F, अतिमेत्तं K. ५ भणन्ती F. ६ विसम° K. ७ पल्हत्था B (d) D. ८ उज्जअणी B (b). ९ अज्जुएक्केण B (a). १० अभरण B (a). ११ ठाणाइ C; ठाणाइं H. १२ °मसिअ pr m. B (d). १३ दीहं F. १४ णिससिअ B (d), णीससिअ F. १५ पावरओ B (d) K; पाव्वारओ B (b). १६ ममोवरि B D. १७ क्खिविदो B (a).

**वसन्तसेना** । कण्णऊरअ जाणीहि दाव किं एसो जादीकुसुमवासिदो पावारओ ण वेत्ति (७०) ।

**कर्णपूरकः** । अज्जए मदगन्धेण सुट्ठु तं गन्धं ण जाणामि (७१) ।

**वसन्तसेना** । णामं पि दाव पेक्ख (७२) ।

**कर्णपूरकः** । इमं णामं । अज्जआ एव्व वाएदु (७३)। इति प्रावारकमुपनयति ।

**वसन्तसेना** । अज्जचारुदत्तस्स (७४) । इति वाचयित्वा सस्पृहं गृहीत्वा प्रावृणोति ।

**चेटी** । कण्णऊरअ सोहइ अज्जआए पावारओ (७५)।

**कर्णपूरकः** । आं सोहइ अज्जआए पावारओ (७६)।

**वसन्तसेना** । कण्णऊरअ इदं दे[११] पारितोसिअं (७७) । इत्याभरणं प्रयच्छति ।

---

वस०–(७०) कर्णपूरक जानीहि तावत्किमेष जातीकुसुमवासितः प्रावारको न वेति ।

कर्ण०–(७१) आर्ये मदगन्धेन सुष्ठु तं गन्धं न जानामि ।

वस०–(७२) नामापि तावत्प्रेक्षस्व ।

कर्ण०–(७३) इदं नाम । आर्यैव वाचयतु ।

[वस०–(७४) आर्यचारुदत्तस्य ।]

चेटी–(७५) कर्णपूरक शोभत आर्यायाः प्रावारकः ।

कर्ण०–(७६) आमङ्गीकारे । शोभत आर्यायाः प्रावारकः।

वस०–(७७) कर्णपूरक इदं ते पारितोषिकम् । गजवृत्तान्तेन चारुदत्तदत्तप्रावारकव्यतिकरेण च परितोषः ।

---

१ °ऊर B (a); °हुरअ K. २ एसे B (d). ३ आदि° H. ४ °वरओ B (d) K. ५ om· B (d). ६ मावरकमु° B (abd) G k. ७ आर्यचारुदत्तस्य A B B (abcd). ८ पावरओ B (d) ९ whole speech om B (a) k. १० पावरओ B (d). ११ °णऊर B (a); °ण्णहुरअ k. १२ om· B (d)

कर्णपूरकः । शिरसा गृहीत्वा प्रणम्य च । सम्पदं सुट्ठु सोहइ अज्जआए पावारओ (७८) ।

वसन्तसेना । कण्णऊरअ एदाए वेलाए कहिं अज्जचारुदत्तो (७९) ।

कर्णपूरकः । एदेण ज्जेव्व मग्गेण पवुत्तो गेहं (८०) ।

वसन्तसेना । हञ्जे उवरिदणं अलिन्दअं आरुहिअ अज्जचारुदत्तं पेक्खेम्ह (८१) ।

इति निष्कान्ताः सर्वे ।

इति द्यूतकरसंवाहको नाम द्वितीयोऽङ्कः ।

---

कर्ण०—(७८) सांप्रतं सुष्ठु शोभत आर्यायाः प्रावारकः । व्यञ्जितश्चानेन चारुदत्तानुरागः ।

वस०—(७९) कर्णपूरक एतस्यां वेलायां कुत्रार्यचारुदत्तः ।

कर्ण०—(८०) एतेनैव मार्गेण प्रवृत्तो गेहम् । प्रवृत्तश्चलितः ।

वस०—(८१) हञ्जे उपरितनमलिन्दमारुह्यार्यचारुदत्तं प्रेक्षाम(व)हे । अलिन्दमट्टालिकाम् । सदनसामीप्यं चानयोरवसेयम् ।

इति श्रीमृच्छकटिकप्रकरणव्याख्यायां श्रीलल्लादीक्षितसंख्यावता वान्धवकरोपनाम्ना महाराष्ट्रेण कवीन्द्रबहादुरविरुदेन बुन्देलाधीशदैशिकेन विद्वन्मुकुटमणिश्रीमन्महाराजवलिसेनसाहवसंमदाय क्रमेणाचूडामूलमाख्यातायां द्यूतकरसंवाहकविलासो नाम द्वितीयोऽङ्कः ॥ २ ॥

---

१ सोहदि B. २ पावरओ B (d). ३ ०उर B (a) °दुरअ k. ४ स अज्ज° B, B (a). ५ पवत्तो H (a) पमुत्तो B (b). ६ उवरिदण B (ad). ७ अलिंदं et in marg अं H (d) अलिन्दअं D. H. ८ पेक्खम्ह B D. H. ९ इति मृच्छकटिकायां B.

## तृतीयोऽङ्कः।

(प्रविश्य)

चेटः ।

सुअणे हु भिच्चाणुकम्पके शामिए णिद्धणके वि शोहदि ।
पिशुणे उण दव्वगव्विदे दुक्कले क्खु पलिणामदालुणे ॥ १ ॥ (१)
सुअणे हु कुभिच्चपालए धणहीणे अपहूवि शोहदि ।
पिशुणे उण दव्वगव्विदे ण अ लच्छीविहवा वलंविदे ॥ २ ॥ (२)

---

(अत्र वसन्तसेनासं(स)ख्यां मदनिकायां मा(यामा)सक्तः शार्विलकनामा ब्राह्मणश्चौर्यवृत्तिः करिष्यति संधि(धिं) चारुदत्तगृहे हरिष्यति च तदलंकारसुवर्णभाण्डं यद्वसन्तसेनया न्यस्तं चारुदत्तहस्ते इत्यादि ज्ञेयम्) । प्रविश्य चेट इति । चेटोयं वर्धमानकनामा चारुदत्तस्येति बोध्यम् ।

चेटः—[सुअणे इति ।] वैतालीयं छन्दः (१) । सुजनः खलु भृत्यानुकम्पकः स्वामी निर्धनकोपि शोभते । पिशुनः पुनर्द्रव्यगर्वितो दुष्करः खलु परिणामदारुणः ॥ खलु यस्मात्परिणामदारुणस्ततो दुष्करो दुःसाध्यः । पिशुन इत्यर्थः । पूर्वार्धं स्पष्टम् ॥ १ ॥ एतत्पद्यसमानार्थकं पाठान्तरं छन्दोभिन्नं च । तथा हि ।

सुअणे हु [कुभिच्चेति ।] (२) । सुजनः खलु कुभृत्यपालको

---

१ ततः प्रविशति चेटः A, B B (abcd) C D J K. २ शुअणे B C D J.

सुहणे हु भिचाणुकम्पके सामिए णिद्धणके पि सोहिदे ।
पिसु उण दव्वगव्विदे दुक्कले क्खु पलिणामदालुण ॥

अव (वि) अ ।

तिउ साहु विट तिचिउ तिचिट घअणे ण्णिलक्खले ।
अलसबहुआ तिजिआ ण जणाइ दलिद्दतित्तउ ॥

अवि अ ।

कुण्डअं ण रोएइ पडुंम कलअं आसई ।

स इत्तगेण सा गब्वइ अंचललंब पढुम एकइ ॥

शरशा &c B (a)

सुहणेहुं अवि अ ।

तिडसाह विटं तित्तड तित्तड अक्षणे गिलक्खले ।
अलसवेहुआवि तितिआ णे जगाइ दलिद तित्तए ॥

अविअ । कुणाडअं रोएई पढुम कालअं असई ।
सइत्तणे सा गब्वइ अंचलं लंब पढुम एच्छइ ॥

शरशा &c B (b)

सुअणे हु भिचानुकम्पके सामिए णिद्धणकेवि सोहदि ।
पिसुणे उण दव्वगव्विद दुक्कले खु पलिणामदालणे ॥
सुअणे हु कुभिच्चपालए धणहीणे अपदू वि सोहदि ।
पिशुणे उण दव्वगव्विरे णअ लड़ी विहवावलंबिदे ॥

अपिच । शरशा &c. A B (c) (fol. 13 B lin ult.) (Pp 13 b, last line) सुअणे हु [कुभिच्चपालए धणहीणे ण पदू वि सोदहि । पिसुणे उणे] गिलक्खले अलसबहुआवि तितिआ ( finis fol 13 ). (p 13 ends) B (d). Words which are included in the text are erased by the blue (yellow) pigment and in their place it is written (added) on the margin [भिचाणुकम्पके सामिए णिद्धणकोवि सोहदि । पिसुणे उण दाव्वगव्विदे दुक्कले क्खु पलिण्णामदारुणे ॥ अवि अ । तिडसाहु (हु ?) विंट तित्तिड तित्तिड वक्षणे ] Then after the words तित्तिआ at the end of page 13 follows the page 14 ण जगाइ दलिदतिस (sec. m. त्ति) ए । अवि अ । कुणाड(ड)अं ण रोअइ पढुम का (sec. m. क) लअं असइ ति ( corr स ) इत्तणेण सा गव्वइ अचलं लंब पढुमए ( supra ser ढ ) ( अवि delet ) कइ । सस्स &c. I accept the first distich from the MS A. I indeed reject the same second and the third distich (line)? which are not in Wilson's MS which I consulted as to letters and which do not stand in the commentary. In the second distich ( line 1) there is a dissertation about acrid things or about troublesome things the first of which is तिडुपाया-कृत्तं stalk of the plant called by the vulgar people remains of which are to be seen. I am uncertain about the writing and the sense of the third line. ३ सामीए D. H. ४ सोहदि D K. First verse om G. ५ Second verse om. BCDJK. For additional verses see २ B (a b c d) above. ६ वत्तु H. ७ कु erased H. ८ ण पहुवि सोहदि G. ९ लड़ी F.

तितड साह विंटं तितड तितड वक्षणे णिलक्खले ।
अलसबहुआ वितित्तिआ ण जगाइ दलिददितित्तए ॥ १ ॥

अवि अ ।

कुणाड अण्ण रोएई पढुम कालअं असई ।
स इत्तणे सा गब्वइ अंचलं लंब पढुम एच्छई ॥ २ ॥ E

अवि अ ।

अंवि अ।

शश्शेपलकेवलदे ण शेकि वालिदुं

अण्णकलत्तपशत्ते ण शेकि वालिदुं।

---

धनहीनो प्रभुरपि शोभते। पिशुनः पुनर्द्रव्यगर्वितो न च लक्ष्मीविभयावलम्बितः॥ कुभृत्यस्यापि मादृशस्य कार्यकरणासमर्थस्य वर्धमानकादेरपि पालकः। किं पुनर्वाच्यं सुभृत्यस्य पालक इति। ईदृशः सुजनो प्रभुर्दरिद्रोपि शोभते। उत्तरार्धं स्फुटम्। धनहीनो यतोतो (तः) प्रभुर्लक्ष्मीविभवावलम्बितो यतोतो द्रव्यगर्वित इत्येवं पौनरुक्त्यं परिहरणीयम्। उत्तरार्धे चेटेन कटाक्षितः शकार इति ध्येयम्॥ २॥ [शश्शपलकेत्यादि]। शाकरी-जातिः (३)। सस्य-

---

तिड साइ विंट तित्तड वशणे णिलवशले।
अलसमहुआ वि णित्तिआ ण अणाइ &c॥ २॥

अवि अ।

कुणाडअं न रोएई पढुम &c असइ।
स इत्तेणे सा गव्वइ अंचलं तं बहुम पठइ॥ ३॥ G.

तिलसाह विंट तित्तडं तित्तड वशणे णिलवशले।
अलसबहुआ &c ण om: .........॥

अवि अ।

कुणाडअं ण &c एइ पढुम &c.
॥ इत्तणे &c ..... अचल् लंबं पढुम एकइ॥ K.

Sanskrit.

षपुषस्य वृन्तं तिक्तं तिक्तो ब्राह्मणो निरक्षरः।
अलसा वधूरपि तिक्ता अन्मदारिद्रितक-॥

अपि च।

कुनाटक न रोचते प्रथमकालं असती।
पतीत्वे सा गर्वाति अंचलं दीर्घं प्रथमं आच्छादयाति॥

१ अवि अ om: L. K; अपि च C D. २ शस्य K; सरा B (a). ३ पशण b (d). ४ शकि B (d). ५ पलत्ते B (ad), Sec. m; पशत्ते K. ६ शकि B (d) K.

जूदपशत्तमणुश्शे ण शक्कि वालिदुं
जे वि शहाविअदोशे ण शक्कि वालिदुं ॥ ३ ॥

का वि वेला अज्जचालुदत्तश्श गन्धव्वं शुणिदुं गदश्श । अदिक्कमदि अद्धलअणी । अज्ज वि णं आअच्छादि । ता जाव बाहिलदुआलशालाए गदुअ शुविश्शं ( ३ ) । तथा करोति ।

ततः प्रविशति चारुदत्तो विदूषकश्च ।

---

लप (लम्प)टबलीवर्दो न शक्यो वारयितुम् । अन्यकलत्रप्रसक्तो न शक्यो वारयितुम् । अन्यप्रसक्तकलत्रं न शक्यं वारयितुम् । इदं पाठान्तरं भिन्नचमत्कृतार्थकतया व्याख्यातम् । शक्कि इत्यस्य शक्यः शक्यं यथेच्छमर्थः । द्यूतप्रसक्तमनुष्यो न शक्यो वारयितुम् । योपि स्वाभाविकदोषो न शक्यो वारयितुम् । पलक्को लम्पटः । आक्षिप्यते हि योपीत्यनेन सोपीति । तथा च योपि 'स्वाभाविको दोषः सोपि वारयितुं न शक्य इति कथनेन दशायामीदृश्यां दातृत्वं दोषः । तं च मम स्वामी न त्यजतीति व्यज्यते ॥ ३ ॥

कापि वेलार्यचारुदत्तस्य गान्धर्वं श्रोतुं गतस्य । अतिक्रामत्यर्धरजनी । अद्यापि नागच्छति । निशीथोपि न जात (जात) इत्यर्थः । तद्यावद्बहिर्द्वारशालायां गत्वा स्वप्स्यामि । गान्धर्वं संगीतसहितं गीतमित्यर्थः ।

---

१ °पसत्त B (d); पशन्त K. २ °मणुस्शे K. ३ सक्कि B (d) E. ४ सहाविअ AB (cd) K. ५ दोसे B (d) K. ६ °चारुदत्तस्स B (abd) G. H. ७ सुणिदुं गदस्स B (abd) K. ८ णागच्छादि D; णागच्छइ G. ९ तज्जाव B (abd) E. १० बाहिरदुआर B (abd) DEFK corr. बहिर B (d). ११ सालाए B (abd) DH. १२ सुविस्सं B (abd) GH. १३ इति तथा J.

चारुदत्तः । अहो साधु भावरेभिलेन गीतम् । वीणा हि नाम असमुद्रोत्थितं रत्नम् । यतः ।

उत्कण्ठितस्य हृदयानुगुणा वयस्या
संकेतके चिरयति प्रवरो विनोदः ।
संस्थापना प्रियतमा विरहातुराणां
रक्तस्य रागपरिवृद्धिकरः प्रमोदः ॥ ४ ॥

विदूषकः । भो एहि । गेहं गच्छेह्म (४) ।

चारुदत्तः । अहो सुष्ठु भाव रेभिलेन गीतम् ।

---

चारु०—रेभिलः कश्चिद्गायकः सार्थवाहः । स्फुटं चेदमग्रे । असमुद्रोत्थितं रत्नं वीणेति । न्यूनताद्रूप्यरूपकमलंकारः । इह जगति रत्नमेव वीणा । परं तु समुद्रोत्थितं न भवतीति तदर्थः । अत्र हेतुमाह यत इति । [उत्कण्ठितस्येति । ] च वसन्ततिलका छन्दः । उत्कण्ठितस्य कान्तासक्तस्य विरहिणो मनोनुगुणा वयस्या सखी वीणेत्यर्थः । यस्या वीणायाः प्रवरो विनोदो वादनव्यापारः । संकेतके (?) चिरयति चिरं स्थापयतीत्यर्थः । विरहातुराणामतिप्रिया संस्थापना विरहव्याप्रप्राणसंबोधने(ना) वीणेत्यर्थः । प्रियतमा-विरहातुराणामित्येकं वा पदम् । रक्तस्य रागपरिवृद्धिकरः प्रमोद आनन्दो वीणेति सकलार्थः ॥ ४ ॥

विदू०—(४) भो एहि । गेहं गच्छावः ।

चारु०—भावेति संबुद्धिर्विदूषकस्य ? । ज्ञेयं चान्यत्राप्येवमेव ।

---

१ अहो अहो J. २ साधु साधु AB (bc) CDFJ. ३ भाव om as others G. ४ रेभिलकेन B. ५ °त्थितरत्न B (d) ६ कुत AB (bcd) CDJ. ७ संकेतिके H. ८ करप्रमोद H. ९ गेह om. H (d) १० गच्छम्ह G. H. ११ °ह्ये° om. B (ba). १२ भावे B (d).

विदूषकः । मम दाव दुवेहिं ज्जेव्व हस्सं जाअदि । इत्थिआए सक्कदं पढन्तीए मणुस्सेण अ काअलीं गाअन्तेण । इत्थिआ दाव सक्कदं पढन्ती दिण्णणवणस्सा विअ गिट्ठी अहिअं सुंसुआअदि । मणुस्सोवि काअलीं गाअन्तो सुक्खसुमणोदामवेढिदो वुड्ढपुरोहिदो विअ मन्तं जवन्तो दिढं मे ण रोअदि (९) ।

---

विदू०–(९) मम तावद्द्वाभ्यामेव हास्यं जायते । द्वाभ्यामित्युक्तं तदाह । स्त्रिया संस्कृतं पठन्त्या मनुष्येण च काकलीं गायता । स्त्री तावत्संस्कृतं पठन्ती दत्तनवनासिकारज्जुरिव गृष्टिर्गौ(र्गौ)रधिकं शुशुआअदि । इदमव्यक्तध्वनेरनुकरणम् । सशब्दं करोतीत्यर्थः । मनुष्योपि काकलीं गायन् शुष्कसुमनोदामवेष्टितो वृद्धपुरोहित इव मन्त्रं जपन्दृढं मे मह्यं न रोचते। णस्सा नासिकाविवररज्जुः । गृष्टिः सकृत्प्रसूता गौरिति । पोटाइ (?) युवतीति सूत्रे स्पष्टं कौमुद्याम् । इयं परिहासेनोपमेति ज्ञेयम्। शुष्केत्यादिविशेषणेन चिरकालजपप्रवणत्वमुक्तम् ।

---

१ दवेहिं H (b), दुवेहिं एव्व D. This *MS.* has एव्व throughout for ज्जेव्व H. ज्जेव J. दाव हिदुज्जेव (=हृदय एव)? २ इत्थिआए B (bd). ३ सक्किदं B (a) संकदं DH. ४ पढन्तीए BK, पढन्तीये B (a). ५ काआलिं B काअलीं (?) H. ६ सक्किदं B (a). ७ पढन्ती BK. ८ दिउआ for गिट्ठी B (d) विअलगंठी for विअगिट्ठी (=विवरग्रन्थिः) K. ९ अधियं? B (a); अहिअं C. J. अधियं E. १० ससुआअदि BDJ सुसुआदि (=सुषुमायते)K. ११ काअली AB (c). १२ सुक्खखवणो E. १३ °वढिदो EGK. १४ वुड्°B (d) १५ दढं H (ad) दिढं K. १६ एअदि (रोअदि?) B (ab).

चारुदत्तः । वेयस्य सुष्ठु खल्वद्य गीतं भाव रेभिलेन ।
न च भवान्परितुष्टः ।

रक्तं च नाम मधुरं च समं स्फुटं च
भावान्वितं च ललितं च मनोहरं च ।
किं वा प्रशस्तवचनैर्बहुभिर्मदुक्तै-
रन्तर्हिता यदि भवेद्वनितेति मन्ये ॥ ९ ॥

अपि च ।

तं तस्य स्वरसंक्रमं मृदुगिरः श्लिष्टं च तन्त्रीस्वनं
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम् ।

---

चारु०—[रक्तं चेति ।] पूर्वोक्तं छन्दः । गीतमित्यस्य(स्या)नुपदोक्तस्य रक्तं चेत्यादीनि सप्त विशे[ष]णानि पूर्वस्मादुत्तरोत्तरं हेतुहेतुमद्भावापन्नानीत्यवधातव्यम् । रक्तं तच्चद्रागरमणीयमतो मधुरं रागमाधुर्यवत् । भावो रतिः । ललितं लालित्याख्यधर्मविशेषशाल्यत एव मनोहरम् । मदुक्तैर्मया चारुदत्तेनोक्तैर्बहुभिः प्रशस्तवचनै रक्त(क्तं) च मधुरं चेत्यादिभिः प्रशंसापरं गीतमिति कथनैः किं वा न किमपीत्यर्थः । अन्तर्हि(र्हि)ता गुप्ता पिहिता । अदृश्यमानेति यावत् । ई(ई)दृशी वनिता यदि गायन्ती भवेत्तदेति । इतीदं रक्तं चेत्यादिना कथितं गीतसौन्दर्यमा(दा)स्यमहं मन्ये नान्यथेत्यर्थः । तत्र गाच्छन्ना योषि(षि)देव गायन्ती स्थिता न तु पुरुष इति भासत इति भावः ॥ ९ ॥

[तं तस्येति ।] शार्दूलविक्रीडितं छन्दः । यद्गीतसमये विरतेऽपि गतेऽपि सर्वमिदमिदं शृण्वन्निवाहं गच्छामि तदसत्यमित्यन्वयः । तं

---

१ वयस्य B (a) २ मधुरं च K. ३ समस्फुटं च G ४ °रन्तर्हिता° D, K. ५ मृदुगिरश्लिष्टं h. ६ तन्त्रीस्वनं G ७ मृदु B (ab)

हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं
यत्सत्यं विरतेपि गीतसमये गच्छामि शृण्वन्निव ॥ ६ ॥

विदूषकः । भो वअस्स आवेणन्तररच्छाविहाएसु सुहं कुक्करा वि सुत्ता । ता गेहं गच्छम्ह । अग्रतोवलोक्य । वअस्स पे-

मिदं किम् । मृदुगिरः कोमलकण्ठस्वरस्य तस्य रेभितस्य तमिदानीं श्रुतं स्वरसंक्रमं स्वराणां निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमानां सप्तानां प्रसिद्धानां समीचीनं—क्रममारोहावरोहरूपम् । शृण्वन्ति(न्नि)त्यत्रान्वयः सर्वद्वितीयान्तानाम् । श्लिष्टं गीताक्षरैरभिन्नतया श्रूयमाणम् । तन्त्री वीणा तस्याः स्वनं च शृण्वन्नित्यर्थः । वर्णानां गानाक्षराणां मूर्छना । यथा कुटुम्बिनः सर्वे एकीभूता भवन्ति हि । तथा स्वराणां संदोहो मूर्छनेत्यभिधीयत इति । तस्या अन्तरगतं मध्यगतम् । तार उ(मु) द्यम् । विरामे समाप्तौ । मृदुम् । इदं विशेषणत्रयं तन्त्रीस्वनस्येति बोध्यम् । हेला रागस्यारोहावरोहयोरनौचित्यम् । तत्र संयमितं नियमितम् । अनौचित्यान्निवृत्तमिति भावः । पुनश्च ललितं रागेषु द्विरुच्चारितं द्विरुक्तं गीतं शृण्वन्नित्यर्थः ॥ ६ ॥

विदू०—(६) भो वयस्य आपणान्तररथ्याविभागेषु सुखं कुक्कुरा अपि सुप्ताः । तद्गेहं गच्छावः । आपणो विपणिः । बाजार इति भाषा । तस्यान्तररथ्याविभागेषु मध्यमार्गप्रवेशेष्वित्यर्थः । वयस्य पश्य पश्य । एषोऽप्यन्धकारस्येवावकाशं ददद्न्तरिक्षप्रासादादवतरति

१ रागाद्वि° B B (ad) J. २ °वणन्तरवीहीए° B. °वीहीरे B (a) वणन्तररच्छाविताहीए एहं om. सुहं B (b) रच्छाविहाए pr. m. dele रच्छा at corr वीहीए B (d) रच्छान्तराए E. ३ पसुत्ता BK. ४ गहं B (a) गेहे B (b)

क्ख पेक्ख । ऐसो वि अन्धआरस्स विअ अंतरआसं देन्तो अन्तरिक्खपासादादो ओदरदि भअवं चन्दो (६) ।

चारुदत्तः । सम्यगाह भवान् ।

असौ हि दत्त्वा तिमिरावकाश-
मस्तं व्रजत्युन्नतकोटिरिन्दुः ।
जलावगाढस्य वनद्विपस्य
तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥ ७ ॥

विदूषकः । भो एदं अम्हाणं गेहम् । वड्ढमाणआ उग्घाडेहि दुआरअं (७) ।

चेटः । अज्जमित्तेआह शलशंजोए शुणीअदि । आगदे अज्जचालुदत्ते । तॉ जाव दुआलअं शे देमि । तथा कृत्वा । अज्ज

---

भगवांश्चन्द्रः । (अवतरत्यस्ताभिमुखं यातीत्यर्थः' । 'दृशेः पेक्खः (क्खः)' इति सूत्रेण पश्यतेः पेक्ख(क्ख)देशः । ददादित्यत्राभ्यस्तत्वान्नुमागमाभाव इति बोध्यम् ।

चारु०—[असौ हीति ।] स्फुटं पद्यम् । जलावगाढस्य जलनिमग्नस्य । वनद्विपस्येति– वनपदेन सामदन्तवत्त्वं व्यज्यते । तेन च तीक्ष्णं विषाणाग्रं दन्ताग्रमिवेत्युपमापि संघटते इत्यपि बोध्यम् ॥७॥

विदू०—(७) भो एतदस्माकं गेहम् । वर्धमानक उद्घाटय । द्वारम् ।

चेटः—(८) आर्यमैत्रेय(स्य) स्वरसंयोगः श्रूयते । आगत आर्यचारुदत्तः । तद्यावद्द्वारमस्य ददामि । आर्य वन्दे । मैत्रेय त्वा-

---

१ एसो वि B (a). २ अरआस दतो B (a). ३ चन्दो B (a) ४ वड्ढमाणआ वड्ढमाण B J. ५ देहि BEGK. ६ दुवारअं E. ७ अज्जअ° B (a). अज्जमित्ते° B (d) अज्जमित्तेअ शल° AB (c) D. ८ समाए B (a). ९ अगदे H. १० ता दाव दुआरअ B (a). ११ शे om B; शोदेमि (=शोधयामि) K.

वन्दामि । मित्तेअ[1] तुमं पि वन्दामि । एत्थ वित्थिण्णे आसणे[2] णिसीदन्तु[3] अज्जा (८) ।

उभौ नाट्येन प्रविश्योपविशतः ।

विदूषकः । वड्डमाणअ[4] रअणिअं सद्दावेहि पादाइं धोइदुं (९) ।

चारुदत्तः । सानुकम्पम् । अलं सुप्तजनं प्रबोधयितुम् ।

चेटः । अज्ज मित्तेअ[5] अहं पाणिअं गेह्णे । तुमं पादाइं धोवेहि[6] (१०) ।

विदूषकः । सक्रोधम् । भो वअस्स[8] एसो दाणिं दासीए पुत्तो[9] भविअ पाणिअं गेह्लेदि[10] । मं उण[11] बम्हणं पादाइं सोधावेदि[12] (११) ।

---

मपि वन्दे । त्वां चारुदत्तम्(?) । अत्र विस्तीर्ण आसने निषीदत-आ(मा)र्यौ ।

विदू०—(९) वर्धमानक रदनिकां सद्दावेह्याकारय पादौ धावितुम् ।

चेटः—(१०) आर्य मैत्रेय अहं पानीयं गृह्णामि । त्वं पादौ धाव[य] । चारुदत्तस्य-चरणौ प्रक्षालयेत्यर्थः ।

विदू०—(११) भो वयस्य एष इदानीं दास्याः पुत्रो भूत्वा पानीयं गृह्णाति । मां पुनर्ब्राह्मणं पादौ सोधावेदि शोचयति । धावयतीत्यर्थः ।

---

१ अज्जमित्तेअ B. २ आसणे D. ३ णिसीदन्तु B (abd) D. ४ वड्डमाणआ AB (c) वड्ढमा° B (d). ५ अज्ज मित्तेअ bis B (b). ६ धावेहि (=धावय) D; साधावेहि E. ७ om: D EK. ८ वयस्स G. ९ उत्तो B. G. १० गह्लदि B गेह्लदि E (Sen) K. ११ मं च B. K. १२ सोधावेदि DF; दोधावेदि AB (c); धोवावेदि B. C. J. K; धोवेविदि B (a).

चारुदत्तः । वयस्य मैत्रेय त्वमुदकं गृहाण। वर्धमानकः पादौ प्रक्षालयतु ।

चेटः । अज्ज मित्तेअ देहि उदअं (१२) ।

विदूषकस्तथा करोति । चेटश्चारुदत्तस्य पादौ प्रक्षाल्यापसरति ।

चारुदत्तः । दीयतां ब्राह्मणस्य पादोदकम् ।

विदूषकः । किं मम पादोदएहिं । भूमीए ज्जेव्व मए गद्देहेण विअ पुणोवि लोट्टिदव्वं (१३) ।

चेटः । अज्ज मित्तेअ बम्हणे क्खु तुमं (१४) ।

विदूषकः । जधा सव्वणागाणं मज्झे डुण्डुहो तधा सव्वबम्हणाणं मज्झे अहं बम्हणो (१५) ।

---

चेटः–(१२) आर्य मैत्रेय देह्युदकम् ।

विदू०–(१३) किं मम पादोदकैः । भूम्यामेव मया गर्दभेन पुनरपि लु(लो)ठितव्यम् । लोठनं कर्तव्यमित्यर्थः ।

चेटः–(१४) आर्य मैत्रेय ब्राह्मणः खलु त्वम् ।

विदू०–(१५) यथा सर्वनागानां मध्ये दुन्दुभस्तथा सर्वब्राह्मणानां मध्येहं ब्राह्मणः ।

---

१ वर्धमानक B K; °नातु B (d). २ एत्थ H. ३ जिट्टिदव्व° BC; लोट्टिद° J मए लो(पि)ट्टिद° K. ४ बम्हणो G, K. ५ तुम AB (cd). ६ मज्झे 1 ७ डुडुहो B (a).

चेटः । अज्ज मित्तेअ तधा वि धोविस्सं । तथा कृत्वा । अज्ज मित्तेअ एदं तं सुवण्णभण्डअं मम दिवा तुह रत्तिं च । ता गेह्ण (१६) । इति दत्त्वा निष्क्रान्तः ।

विदूषकः । गृहीत्वा । अज्ज वि एदं चिट्ठदि । किं एत्थ उज्जइणीए चोरोवि णत्थि । जो एदं दासीएँ पुत्तं णिद्दाचोरं ण अवहरदि । भो वअस्स अब्भन्तरचतुःसालअं पवेसआमि णं (१७) ।

चारुदत्तः ।

अलं चतुःशालमिमं प्रवेश्य
प्रकाशनारीधृत एष यस्मात् ।
तस्मात्स्वयं धारय विप्र ताव-
द्यावन्न तस्याः खलु भोः समर्प्यते ॥ ८ ॥

---

चेटः—(१६) आर्य मैत्रेय तथापि धाविष्यामि । आर्य मैत्रेय एतत्तत्सुवर्णभाण्डं मम दिवा तव रात्रौ च । तद्गृहाण ।

विदू०—(१७) अद्याप्येतत्तिष्ठति । किमत्रोज्जयिन्यां चौरोपि नास्ति । य एतद्दास्याः पुत्रो निद्राचौर्य(रं) नापहरति । भो वयस्य अभ्यन्तरचतुःशालकं प्रवेशयामि । णं एनम् । अलंकारमित्यर्थः ।

चारु०—[अलमिति ।] श्लोकः [उपजातिच्छन्दसा] । इममलंकारं चतुःशालं प्रवेश्यालं वृथा । कुतो यस्मादेषोलंकारः प्रकाशनारी वेश्या

---

धोइस्सं B (abd) D. २ सुवण्ण B (abd). ३ मुह B (a). ४ रत्तिं B (abd) तव रत्ति G. ५ नि क्रान्तः K. ६ उज्जअणीए B (a) ७ °उत्तो B; दासीउत्तो अभंतर H. ९ चतुस्सा° B १० पवेसामि B (abd). ११ अरे च०? E. पविस्स B (a), पवेश (?) स्स B (d). १२ तत् B (a). १३ खलु भो K.

निद्रां नाटयस्तं तस्य स्वैरसक्रममिति पुनः पठति ।

विदूषकः । अवि णिद्दाअदि भवं ( १८ ) ।

चारुदत्तः । अथ किम् ।

इयं हि निद्रा नयनावलम्बिनी
ललाटदेशादुपसर्पतीव माम् ।
अदृश्यरूपा चपला जरेव या
मनुष्यसत्त्वं परिभूय वर्धते ॥ ९ ॥

विदूषकः । ता सुवेम्ह ( १९ ) । नाट्येन स्वपितः ।

ततः प्रविशति शर्विलकः ।

---

वसन्तसेना तया धृतो न्यासरूपेणास्मासु स्थापितः । तस्या वसन्तसेनायाः । शेषं सुगमम् ॥ ८ ॥ 'तं तस्य' इति पुनः पठतीति गानानुध्यानमिति ज्ञेयम् ।

विदू०—(१८) अपि निद्राति भा(भ)वान् ।

चारु०—[इयं हीति ।] श्लोकः [वंशस्थच्छन्दसा] सुगमः । निद्राजरयोरुपमेयोपमानभावः । सत्त्वं बलम् । सर्वाणि विशेषणानि द्वयर्थान्युभयान्वितानि साधारणधर्मतां वहन्तीति बोध्यम् ॥ ९ ॥

विदू०—(१९) तत्स्वपिवः । तदिति हेत्वर्थेऽव्ययम् । निद्रागमनरूपकारणादित्यर्थः । स्वापं कुर्वः इत्यर्थः । स्वपितः स्वपिति

---

१ विदू० which G om , निद्रां नाटयति add B (ab) E , निद्रां नाटयन् om B E ; ° नति नाट्य० सं तस्य B (ab) E D २ °सक्रम ! B (a) corr संक्रम° B °सक्रमिति नाट्येन पु० D, °संक्रम FEG ३ भवान् B (a) ४ चपला । ५ या om BDEFGK ६ नाट्येन स्वपिति . om. B (b), स्वपत G.

शर्विलकः ।

कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन च बलेन च कर्ममार्गम् ।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजंगः ॥ १० ॥

नभोऽवलोक्य सहर्षम् । अये कथमस्तमुपगच्छति स भगवान् मृगाङ्कः । तथा हि ।

नृपतिपुरुषशङ्कितप्रचारं
परगृहदूषणनिश्चितैकवीरम् ।
घनतिमिरनिरुद्धसर्वभावा
रजनिरियं जननीव संवृणोति ॥ ११ ॥

कुरुतः । चारुदत्तविदूषकावित्यर्थः । अथायं निशीथसमय इत्यनुसंधेयम् । शर्विलक इति । अयं शर्विलकः स एव यो द्वितीयाङ्के दर्दुरकेण कथितश्चौरः । चारुदत्तभवनपर्यन्तवृक्षवाटिकाप्राकारभित्तौ कृत्वा संधिं चारुदत्तभवनं प्रविष्ट इति तदिदमेव वर्णयति । [कृत्वेति ।] स्फुटार्थं पद्यम् [वसन्ततिलकच्छन्दसा] । कर्मणश्चौर्यस्य मार्गं संधिम् । अस्यैव शरीरेत्यादि विशेषणम् ॥ १० ॥ 'चौराणां चन्द्रमा रिपुः' इति वचनादिन्दावस्तं गते हृष्टस्तावदन्धकाररजनीं जननीरूपकेण वर्णयति । [नृपतीति ।] [पुष्पिताग्राछन्दसा श्लोकः ।] अन्यगृहस्य यद्दूषणं चौर्येण सर्वस्वहरणं तस्य निश्चितं निश्चयस्तेन तत्र चैकं मुख्यं वीरं मामित्यर्थः । भावाः पदार्थाः । संवृणोत्याच्छादयति । यथा जननी

१ बलेन च बलेन° K. २ °स्तं गच्छति D. ३ घनपटलतमो निरुद्धतारा B. K; °निरुद्धसर्वभावं° D; °निरुद्धसर्वभावम् H; ४ न (?) जननीव B (a).

वृक्षवाटिकापरिसरे संधिं कृत्वा प्रविष्टोऽस्मि मध्यमकम्। तद्यावदिदानीं चतुःशालकमपि दूषयामि। भोः

कामं नीचमिदं वदन्ति पुरुषाः स्वप्ने च यद्वर्धते
विश्वस्तेषु च वञ्चनापरिभवश्चौर्यं न शौर्यं हि तत्।
स्वाधीना वचनीयतापि हि वरं बद्धो न सेवाञ्जलि-
र्मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना ॥ १२ ॥

तत्कस्मिन्नुद्देशे संधिमुत्पादयामि।

---

जननीति शून्यमतिदुर्वृत्तमपि सुतं संवृणोति तथा तमिस्राप्यजस्रं चौरसहस्रं संवृणोतीति विशिष्टार्थः ॥ ११ ॥ वृक्षवाटिकापरिसरे प्राकारभित्तावित्यर्थः। मध्यमकं मध्यभागम्। चतुःशालकमनुपदोक्तं गृहं चारुदत्तस्य। यद्विदूषकेणोक्तमेनमलंकारं चतुःशालकं प्रवेशयामि तदुपरि च चारुदत्तेनोक्तमलं चतुःशालमिमं प्रवेशयेत्यादि तदिदं चतुःशालकम्। दूषयामि संधिं कृत्वा भिंदामी(भिनद्मी)त्यर्थः। चौर्यमेव परमपुरुषार्थ इत्याह। [काममिति।] शार्दूलविक्रीडितं छन्दः। स्पष्टम्। मार्ग इति नरेन्द्रसौप्तिकानां राजरक्षिणां वधे द्रौणिनाश्वत्थाम्ना एष मार्गः पूर्वं महाभारत एव कृतः न तु नवीनः कर्तव्यो(व्यो)स्तीत्यर्थः। महाभारते सौप्तिके पर्वणि संविष्टसेनाद्वारपालकशयोद्यमाशयाश्वत्थामा सुप्तानेव सर्वानाजघान तद्वदेव सुप्ता एव मया हन्तव्या इत्याशयः ॥ १२ ॥

चतुःशालकभित्तिसमीपं गत्वा विचारयति तत्कस्मिन्नित्यादि।

---

१ °परिसरे H. २ वदन्तु J. ३ स्वप्नेऽपि च यद B (a); स्वप्नेन B (d). ४ वद्धो यतो (?) D. H. ५ कृतो. B (a). ६ कस्मिन्देशे B; कस्मिन्देशे B (a) G.

देशः को नु जलावसेकशिथिलो यस्मिन्न शब्दो भवे-
द्भित्तीनां च न दर्शनान्तरगतः संधिः करालो भवेत्।
क्षारक्षीणतया च लोष्टककृशं जीर्णं क्व हर्म्यं भवे-
त्कस्मिन्स्त्रीजनदर्शनं च न भवेत्स्यादर्थसिद्धिश्च मे ॥१३॥

भित्तिं परामृश्य। नित्यादित्यदर्शनोदकसेचनेन दूषितेयं भूमिः क्षारक्षीणा। मूषिकोत्करश्चेह। हन्त सिद्धोऽयमर्थः। प्रथममेतत्स्कन्दपुत्राणां सिद्धिलक्षणम्। अत्र कर्मप्रारम्भे कीदृशमिदानीं संधिमुत्पादयामि। इह खलु भगवता कनकशक्तिना चतुर्विधः संध्युपायो दर्शितः। तद्यथा। पक्वेष्टकानामाकर्ष-

[देश(शः) को न्विति च।] [पूर्वोक्तमेव छन्दः।] दर्शनं शास्त्रम्। दर्शनान्तरं कनकशक्त्यादिमतविशेषस्तत्र गतोऽनुगतस्तेन मतेन बोधित इत्यर्थः। करालो विपरीतः। तन्मतविरुद्ध इति यावत्। भित्तीनां संधिर्न भवेत्। कस्मिन्नुद्देशे स्त्रीजनदर्शनं ह्येतच्छास्त्रविरुद्धमनिष्टाचरणं धीरजनगर्हितं चेति संज्ञातव्यम्। [श्लोकार्थः सर्वोऽयं विचाररूप एवेति बोध्यम्]॥ १३ ॥

अयमर्थः प्रयोजनं संधिरूपः सिद्ध इत्यर्थः। स्कन्दपुत्राणां स्कन्दोपजीविनां चौराचार्याणां प्रथमं सिद्धिलक्षणमेतत्। नित्यादित्येत्यादि यदुक्तं तत्। कर्मणश्चौर्यस्य प्रारम्भे इह खलु भगवता कनकशक्तिनेति। स्कन्देनेत्यर्थः। [चौरशास्त्रप्रवर्तकश्चौराणां देवः स्वा(मि)मी कार्तिकस्तस्याप्युपदेष्टा गुरुर्ब्रह्मा।] तदिदं स्फुटीभविष्यत्यखिलमनुप-

१ जीर्णं क्व? B (b); क्षीण क्व E २ न च B (d) K ३ नित्यादित्यादर्शनोदकसेचनेन B (ad) ( d corr सेचनेन ); °दित्या ..... सेचनेन न K. ४ सेविना B (d). ५ °क्षीणमूषि° B (d); °मूषको B (a). ६ om. B (a). ७ इष्टिका AB (bcd).

णमामेष्टकानां छेदनं पिण्डमयानां सेचनं काष्ठमयानां पाटनमिति । तदत्र पक्वेष्टके इष्टिकाकर्षणम् । तत्र

पद्मव्याकोशं भास्करं बालचन्द्रं
वापी विस्तीर्णं स्वस्तिकं पूर्णकुम्भम् ।
तत्कस्मिन्देशे दर्शयाम्यात्मशिल्पं
दृष्ट्वा श्वो यं यद्विस्मयं यान्ति पौराः ॥ १४ ॥

तदत्र पक्वेष्टके पूर्णकुम्भ एव शोभते । तमुत्पादयामि ।

अन्यासु भित्तिषु मया निशि पाटितासु
क्षारक्षतासु विषमासु च कल्पनासु ।

---

दमये । संध्युपायचातुर्विध्यमुदाहरति तद्यथेति । पक्वेष्टकानामकर्षणमित्यादिना । [पद्मव्याकोशमिति ।] वैश्वदेवी छन्दः । शालिनीछन्दोपेक्षयात्रादावेक एव गुरुरधिक इति ध्येयम् । पद्मव्याकोशमित्यादयः संधीनां भेदाः । यदुक्तं चौरदर्शने 'इष्टकाभित्तौ संस्कारवशेन पद्मव्याकोशादिसंज्ञाः सप्तसंधयः' इति । पद्मव्याकोशं फुल्लम् । फुल्लपद्मसदृशमित्यर्थः । भास्करं मण्डलाकारम् । पश्चान्येपि बालचन्द्रादयः संधयो नामसमानाकारा ज्ञेयाः । आत्मशिल्पं संधिम् । आत्मशिल्परूपं संधिमित्यभेदान्वयः । तत्तस्माद्धेतोः । कस्मिन्देशे दर्शयामि । यद्यस्माच्छ्वः पौराः यं संधिं दृष्ट्वा विस्मयं यान्ति परमरमणीयोयं संधिरिति वर्णयन्तीत्यर्थः ॥ १४ ॥

[अन्यास्विति ।] वसन्ततिलका छन्दः । सुगमं पद्यम् । कल्पनासु रचनासु विषमासु विपरीतासु सतीषु । दोषानिति यत्र न सम्य-

---

१ °ष्टकानां तु° BK २ ष्टा (व्या) दन D. H ३ ष्टका° H. K. ४ om. B (b) ५ पद्मव्या° B (a); तत्पश्या° B (b); पद्म व्या° E. ६ बर्भादिरर्तोषे J. ७ दर्शने ? H. ८ यत् om. B (ad) E; श्वो दृष्ट्वा वि° B (b); °विस्मयं om. E; श्वो परि° (?); परिस्मयं om. K.

दृष्ट्वा प्रभातसमये प्रतिवेशिवर्गो
दोषांश्च मे वदति कर्मणि कौशलं च ॥ १५ ॥

नमो वरदाय कुमारकार्त्तिकेयाय, नमः कनकशक्तये ब्रह्मण्याय देवाय देवव्रताय, नमो भास्करनन्दिने, नमो योगाचार्याय यस्याहं प्रथमः शिष्यः। तेन च परितुष्टेन योगरोचना मे दत्ता।

अनया हि समालब्धं न मां द्रक्ष्यन्ति रक्षिणः।
शस्त्रं च पतितं गात्रे रुजं नोत्पादयिष्यति ॥ १६ ॥

तथा करोति। धिक्कष्टम्। प्रमाणसूत्रं मे विस्मृतम्। विचिन्त्य। आं इदं यज्ञोपवीतं प्रमाणसूत्रं भविष्यति। यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यं विशेषतोऽस्मद्विधस्य। कुतः।

एतेन मापयति भित्तिषु कर्ममार्ग-
मेतेन मोचयति भूषणसंप्रयोगान्।
उद्घाटको भवति यन्त्रदृढे कपाटे
दष्टस्य कीटभुजगैः परिवेष्टनं च ॥ १७ ॥

तत्र दोषान्वदिष्यति। यत्र तु सुन्दरं तत्र कर्मणि संधिरूपे कौशलमपि वदति वदिष्यतीत्यर्थः। अप्यर्थे चकारः ॥ १५ ॥

चिकीर्षुः संधिं निजं देवं प्रणमति नम इत्यादिना। कनकस्य शक्तिः कुन्तो यस्य तस्मै। योगाचार्यः स्कन्दशिष्यः। [अनयेति।] अनुष्टुप्। समालब्धमालिप्तम्। रुजं पीडाम् ॥ १६ ॥

आ इ(मि)ति वितर्के(र्के)। अस्मद्विधस्य चौरचूडामणेरित्यर्थः। [एतेनेति।] वसन्ततिलका छन्दः। ये(ए)तेन यज्ञोपवीतेन। कर्मणः संधेर्मार्गम् ॥ १७ ॥

१ भास्करानन्दिने B (a). २ आद्य. B (a). ३ योगरचना D. ४ इदं मे य० D. ५ उपकरणम् B; उपरण B (a), उपकरणं द्र° B (d). ६ हि अस्म० B (d). ७ भुजगैः H.

मापयित्वा कर्म समारभे । तथा कृत्वावलोक्य च । एकलोष्टावशेषोयं संधिः । धिकष्टम् । अहिना दष्टोस्मि । यज्ञोपवीतेनाङ्गुलीं बद्ध्वा विषवेगं नाटयति । चिकित्सां कृत्वा स्वस्थोस्मि । पुनः कर्म कृत्वा दृष्ट्वा च । अये ज्वलति प्रदीपः । तथा हि ।

शिखा प्रदीपस्य सुवर्णपिञ्जरा
  महीतले संधिमुखेन निर्गता ।
विभाति पर्यन्ततमःसमावृता
  सुवर्णरेखेव कषे निवेशिता ॥ १८ ॥

पुनः कर्म कृत्वा । समाप्तोयं संधिः । भवतु प्रविशामि । अथवा न तावत्प्रविशामि । प्रतिपुरुषं तावत्प्रवेशयामि । तथा कृत्वा । अये न कश्चित् । नमः कार्तिकेयाय । इति प्रविश्य दृष्ट्वा च । अये पुरुषद्वयं सुप्तम् । भवतु आत्मरक्षार्थं द्वारमु-

कर्म संधिरूपम् । अत्र पुरतः परतश्च कर्मपदेन संधिर्बोध्यः । [शिखा प्रदीपस्येति ।] स्फुटार्थकं पद्यम् [वंशस्थच्छन्दसा] ॥ १८ ॥ भवत्वित्यादि वितर्कः शर्विलकस्येति बोध्यम् । प्रतिपुरुषं सहवर्तमानं पुरुषमित्यर्थः(?) । तथा कृत्वा तं पुरुषमन्तः प्रवेश्य । अये न कश्चिदिति प्रश्नः । शर्विलकस्य बहिर्वर्तमानस्य नम इत्यादि पूर्वोक्तं पठित्वा प्रविष्टः शर्विलको दृष्ट्वा प्राह अये इत्यादि । पुरुषद्वयं चारुदत्तविदूषकद्वयात्मकं ज्ञातव्यम् । आत्मरक्षार्थमुद्घाटितद्वारेण

१ °मारभते B (a); समारभे AB (c) DF, समारभते K. २ °लोष्टा° H. ३ धिक् B (d). ४ Corr. लि H. ५ कर्मसमारभते । कृत्वा B (a). ६ ज्वलिति D. ७ सुवर्णप° B (d). ८ सुवर्ण° B (d) ९ °पं निवेशयामि AB (bc) CDFGJK; प्रति° del (?) et add in marg. तावत्प्र° B (d) pr. m. १० इति om. BCDG. ११ कृपाट B B (a) E.

द्वारयामि। कथं जीर्णत्वोद्धृतस्य विरौति कपाटः। तद्यावत्सलिलमन्वेषयामि। क्व नु खलु सलिलं भविष्यति। इतस्ततो दृष्ट्वा सलिलं गृहीत्वा क्षिपन्सशङ्कम्। मा तावद्भूमौ पतच्छब्दमुत्पादयेत्। भवतु एवं तावत्। पृष्ठेन प्रतीक्ष्य कपाटमुद्घाट्य। भवतु एवं तावदिदानीं परीक्षे किं लक्ष्यसुप्तमुत परमार्थसुप्तमिदं द्वयम्। त्रासयित्वा परीक्ष्य च। अये परमार्थसुप्तेनानेन भवितव्यम्।

तथा हि।

निःश्वासोऽस्य न शङ्कितः सुविशदः स्वमान्तरं वर्तते
दृष्टिर्गाढनिमीलिता न विकला नाभ्यन्तरे चञ्चला।
गात्रं स्रस्तशरीरसंधिशिथिलं शय्याप्रमाणाधिकं
दीपं चापि न मर्षयेदभिमुखं स्याल्लक्ष्यसुप्तं यदि॥ १९॥

शङ्किति पलायनार्थम्। (प्रतीक्ष्य उद्घाट्य) भवत्वन्तरसंवादे। लक्ष्यसुप्तं व्याजसुप्तम्। मिथ्यासुप्तमित्यर्थः। 'व्याजोपदेशौ लक्ष्यं च' इत्यमरः। उतेत्यव्ययं पुनरित्यर्थकं वितर्के परमार्थसुप्त(प्तं)सत्यसुप्तमिदं द्वयं पूर्वोक्तं पुरुषद्वयम्। अनेन पुरुषद्वयेन। वितर्क्यं सत्यसुप्तत्वमुपपादयति। तथा हीति। निःश्वासोऽस्येत्यादिश्लोकेन। शार्दूलविक्रीडितं छन्दः। पद्यमिदमतिस्फुटार्थं कथयतोऽस्मि निपदेनैव। अस्य पुरुषद्वयस्य निःश्वासः अस्य दृष्टिः अस्य गात्रं इत्यन्वयः। इदं द्वयम्। अस्येत्यस्य विभक्तिविपरिणामादिदमित्यायातं कर्तृ। दीपमिति कर्म। न मर्षयेन्न सहेत॥ १९॥

समन्तादवलोक्य । अये कथं मृदङ्गः, अयं दर्दुरः, अयं पणवः, इयमपि वीणा, एते वंशाः, अमी पुस्तकाः । कथं नाट्याचार्यस्य गृहमिदम् । अथवा भवनप्रत्ययात्प्रविष्टोस्मि । तत्किं परमार्थदरिद्रोयमुत राजभयाच्चौरभयाद्वा भूमिष्ठं द्रव्यं धारयति । तन्ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यम् । भवतु । बीजं प्रक्षिपामि । तथा कृत्वा । निक्षिप्तं बीजं न क्वचित्स्फारीभवति । अये परमार्थदरिद्रोयम् । भवतु । गच्छामि ।

विदूषकः । उत्स्वप्नायते । भो वअस्स सँन्धी विअ दिस्सदि । चोरं विअ पेक्खामि, ता गेह्णदु भँवं एदं सुवण्णभण्डअं (१९) ।

---

भवनप्रत्ययात् । भवनस्य गृहस्य प्रत्ययाद्विश्वासात् । (महदिदं भवनं भासते इति भूरि स्यादत्र धनमिति विश्वासादिति भावः ।) स्फारीभवतीति । अभिमन्त्रितो बीजविशेषो अन्तर्धनसहितभूतले क्षिप्तो बहुलीभवतीति चौरशास्त्रप्रसिद्धिः । अत्र तु न तथेति निश्चिनोति । अये परमार्थद(रिद्रो)यमिति)।

विदू०—उत्स्वप्ना(यते) । सान्द्रनिद्रित एव जनो यत्र जल्पत्याक्रोशति हसति (स्तौ)ति विपरिवर्तत्युत्तिष्ठते च स उत्स्वप्न इति । स्वप्नविशेष इत्यर्थः । अत एवोत्कृष्टः स्वप्न उत्स्वप्न इत्यवयवार्थः संगच्छते । तमुत्स्वप्नमाह । (१९) भो वयस्य

---

१ अय om. H. २ °प्रार्थकूट° B,B (ad) K. ३ °ष्ठद्रव्य B °स्थं द्रव्यं B (b) FGK °स्थद्रव्यं° B (d). ४ °स्थ द्रव्य H (bd) K °स्थद्रव्यं G. ५ °तु न प्रक्षि H (a) भवतु बीज om. AB (c) ६ °क्वापिदपि प्पा स्फारी° B (a) °स्फारि° H ७ सतन्धी (') D सन्धिविअ दिस्सदि सन्धिविअ दिस्सदि G. ८ चोरोविअ । H (a).

शार्विलकः । किं नु खल्वयमिह मां प्रविष्टं ज्ञात्वा दरिद्रोऽस्मीत्युपहसति । तत्किं । व्यापादयामि उत लघुत्वादुत्स्वप्नायते । दृष्ट्वा । अये जर्जरस्नानशाटीनिबद्धं दीपप्रभयोद्दीपितं सत्यमेवैतदलंकरणभाण्डम् । भवतु । गृह्णामि । अथवा न युक्तं तुल्यावस्थं कुलपुत्रजनं पीडयितुम् । तद्गच्छामि ।

विदूषकः । भो वअस्स साविदो सि गोबह्मणकामाए जइ एदं सुवण्णभण्डअं ण गेह्णसि (२०) ।

शार्विलकः । अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च । तद्गृह्णामि । अथवा ज्वलति प्रदीपः । अस्ति च मया प्रदीपनिर्वापणार्थमाग्नेयः कीटो धार्यते । तं तावत्प्रवेशयामि । तस्यायं देशकालः । एष मुक्तो मया कीटो यात्वेवास्य

---

संधिरिव दीयते । चौरमिव पश्यामि । तद्गृह्णातु भवानेतत्सुवर्णभाण्डम् ।

[शर्वि०]—व्यापादयामि मारयामि । लघुत्वादिति । लघुर्नीचः खल्वयमा(मा)यते न तु महाशय इति भावः ।-तुल्यावस्थं स्वसदृशावस्थं दरिद्रमित्यर्थः । कुलपुत्रजनं कुलीनम् ।

विदू०—(२०) भो वयस्य शापितोसि गोब्राह्मणकाम्यया यद्येतत्सुवर्णभाण्डं न गृह्णामि(सि) । गोकाम्यया ब्राह्मणकाम्यया चेत्यर्थः । गोकाम्या गवेच्छा । ब्राह्मणकाम्या ब्राह्मणेच्छा । ताभ्यां

---

१ °लंकार° B ; °सत्यैवेतद° B (a) ; सत्यैवैतलंक° B (b). २ तुल्यावस्थकुल० B (a). ३ वयस्स C. ४ कम्याए D. ५ णं H. ६ गेह्णोसि G. ७ अनतिक्रमणी मम B (a). ८ भगवती मम B, भगव marg B(d). ९ तद् om. AB (bcd) K गृह्णाति AB(bc) DG तद्गृह्णामि om. E. १० अस्ती ? H. ११ °तं . . मि० om. B.B (ad). १२ °यामि । तथा कृत्वा । अये निर्वापितः प्रदीप । तस्या° AB (bc) DFG. १३ मया यत्रैवास्य दीपोपरि मण्डकै · त्रै विरचयति B (a); दीपरि मण्डलं विचरति B (b); दीपोपरि . . . विरचयति B (d) °मण्डलं विचरति DEFG. १४ यात्वेवास्य D.

दीपस्योपरि मण्डलैर्विचित्रैर्विचरति। ऐष पक्षद्वयानिलेन निर्वापितो भेद्रपीठेन। धिक्। कृतमन्धकारम्। अथवा मैयाप्यस्मद्ब्राह्मणकुले धिकृतमन्धकारम्। अहं हि चतुर्वेदविदो प्रतिग्राहकस्य पुत्रः शर्विलको नाम ब्राह्मणो गणिकामदनिकार्थमकार्यमनुतिष्ठामि। इदानीं करोमि ब्राह्मणस्य प्रणयम्। इति जिघृक्षति।

विदूषकः। भो वअस्स सीदलो दे अग्गहत्थो (२१)।

शर्विलकः। धिक्प्रमादः। सलिलसंपर्काच्छीतलो मेऽग्रहस्तः। भवतु कैक्षयोर्हस्तं प्रक्षिपामि। नाट्येन सव्यहस्तमुष्णीकृत्य गृह्णाति।

विदूषकः। गहिदं (२२)।

---

शापितः—शप[illegible] प्रापित इत्यर्थः। सति संभवे गोब्राह्मणयोरिच्छा पूरणीयैवास्ति कैरिति धर्मदर्शनराद्धान्तः। गोब्राह्मणयोरिच्छायाः प्रतिघाते महत्पातकमिति निर्णयसिन्धुमुखग्रन्थेषु स्पष्टम्। यदीयं(दं) सुवर्णभाण्डं न गृह्णासि तर्हि गोब्राह्मणेच्छयोः प्रतिघातं करोषीत्याशयः। तदिदं सर्वमनुसंधायाह शर्विलकः।

[शर्वि०]—अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या चेति। भगवती पूज्या शपथरूपा।

विदू०—(२१)भो वयस्य शीतलस्तेऽग्रहस्तः हस्ताग्रमित्यर्थः राजदन्तादिवत्।

विदू०—(२२) गृहीतम्।

---

१ ऌव B (d) २ भद्रपीठेन D H ३ धिकृत० (?) AB (c) ४ °ममा° I. ५ मह किं H. ६ कक्षायां DH ७ इति नाट्येन° BB (a) ८ हस्त...त्य ( ष° h.

शर्विलकः । अनतिक्रमणीयोऽयं ब्राह्मणप्रणयः तद्गृहीतम् ।

विदूषकः । दाणिं विक्किणिदपण्णो विअ वाणिओ अहं सुहं सुविस्सं (२३)।

शर्विलकः । महाब्राह्मण स्वपिहि वर्षशतम् । कष्टमेवं मदनिकागणिकार्थे ब्राह्मणकुलं तमसि पातितम्। अथवा आत्मा पातितः ।

धिगस्तु खलु दारिद्र्यमनिर्वेदितपौरुषम् ।
यदेतद्गर्हितं कर्म निन्दामि च करोमि च ॥ २० ॥

तद्यावन्मदनिकाया निष्क्रयणार्थं वसन्तसेनागृहं गच्छामि । परिक्रम्यावलोक्य च । अये पदशब्द इव । मा नाम रक्षिणः । भवतु । स्तम्भीभूत्वा तिष्ठामि । अथवा ममापि नाम शर्विलकस्य रक्षिणः । योऽहं

मार्जारः क्रमणे मृगः प्रसरणे श्येनो गृहालुञ्चने
सुप्तासुप्तमनुष्यवीर्यतुलने श्वा सर्पणे पन्नगः ।

---

विदू०—(२३) इदानीं विक्रीतपण्य इव वणिगहं सुखं स्वप्स्यामि ।

शर्वि०— ब्राह्मणकुलं निजपित्रादि गोत्रम् । तमसि पापे । विचार्य राद्धान्तमाह । अथवेति । [मार्जारः क्रमणे इति।] शार्दूल-

---

१ The words प्रणयः .. ... .. महाब्राह्मण D add marg. २ इदाणि B (ab) K दाणीं AB (c) J. इदाणीं B (d). ३ विणिक्किणिद B (d) ४ om. B.B. (ad). ५ वर्षशतं स्वपिहि B.B (a). ६ ब्राह्मकुलं B (a), °जस्य कुलं० B (d) ७ आत्मापि पातित G. ८ वेदित J. ९ नि क° K. १० मानामस्तम्भो F °मानाम ...... स्तम्भो° ACDEGK. ११ ममापि शर्वि० ... नाम B (a). १२ °गृहा० AB (bcd) DF.

माया रूपशरीरवेशरचने, वाग्देशभाषान्तरे
दीपो रात्रिषु संकटेषु डुडुभो वाजी स्थले नौर्जले ॥२१॥ १

अपि च ।

भुजग इव गतौ गिरिः स्थिरत्वे
पतगपतेः परिसर्पणे च तुल्यः ।
शश इव भुवनावलोकनेऽहं
वृक इव च ग्रहणे बले च सिंहः ॥ २२ ॥

प्रविश्य ।

**रदनिका ।** हंद्धि हद्धी । बाहिरदुआरसोलाए पसुत्तो वड्ढमाणओ । सोवि एत्थ ण दीसंदि । भोदु । अज्जमित्तेअं सद्दावेमि (२४) । इति परिक्रामति ।

**शर्विलकः ।** रदनिका हन्तुमिच्छति । निरूप्य । कथं स्त्री । भवतु । गच्छामि । इति निष्क्रान्तः ।

---

विक्रीडितछन्दः । सुगमम् । रूपशरीरवेषरचने माया शाब-(म्ब)?री विद्या । अहं देशभाषान्तरे तत्तद्देशभाषाविज्ञानमध्ये वाग्देवी सरस्वती अहमित्यन्वयः । शेषं स्पष्टम् ॥ २१ ॥

[भुजग इव गताविति ।]पुष्पिताग्रा छन्दः । पतगपतेर्गरुडस्य तुल्यः । परिसर्पणे त्वरितधावने ॥ २२ ॥

रदनिका चारुदत्तदासी पूर्वोक्ता । (२४) हद्धि हद्धीति भये । बहिर्द्वारशालायां प्रसुप्तो वर्धमानकः । सोप्यत्र न दृश्यते । भवतु । आर्यमैत्रेयं सद्दावेमि आह्वयामि । निष्क्रान्तः शर्विलक इत्यर्थः ।

---

१ डुद्रभो B (a), डुभो B (b) corr. डुडुभो B (d), डुडुभे K २ हद्धि Semel (once) D B हद्धी F ३ साथए B (a), शालाए B (b), शालए B (d). ४ दीसद AB (bcd) FJK. दीसई B. ५ मित्तेय K. ६ °नि क्रान्तः K

रदनिका । गत्वा सत्रासम् । हद्धि हद्धी । अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कमति । भोदु । मित्तेअं गदुअ पबोधेमि । विदूषकमुपगम्य । अज्ज मित्तेअ उट्ठेहि उट्ठेहि । अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कन्तो (२५) ।

विदूषकः । उत्थाय । आः दासीए धीए किं भणासि । चोरो कप्पिअ संधिं णिक्कन्तो (२६) ।

रदनिका । हदास अलं परिहासेण । किं ण पेक्खसि एणं (२७) ।

विदूषकः । आः दासीए धीए किं भणासि । दुदिअं विअ दुआरअं उद्घाडिदंत्ति । भो वअस्स चारुदत्त, उट्ठेहि उट्ठेहि । अम्हाणं गेहे संधिं दइअ चोरो णिक्कन्तो (२८) ।

---

रद०—(२५) हद्धि हद्धी [हा धिक् हा धिक्] अस्माकं गेहे संधिं कल्पयित्वा चौरो निष्क्रामति । कप्पिअ इति कर्तयित्वेत्यर्थो वा । भवतु । मैत्रेयं गत्वा प्रबोधयामि । आर्य मैत्रेय उत्तिष्ठोत्तिष्ठ । अस्माकं गेहे संधिं कर्तयित्वा चौरो निष्क्रान्तः ।

विदू०—(२६) आ इत्याश्चर्ये । दास्याः पुत्रि किं भणसि । चौरः कल्पयित्वा संधिं निष्क्रान्तः । धि(धी)आ इति धी इति पुत्रीनाम भाषायाम् ।

रद०—(२७) हताश अलं परिहासेन । किं न प्रेक्षसे एतत् ।

विदू०—(२८) आः दास्याः पुत्रिके किं भणसि । द्वितीयमिव

---

१ णिक्कमदि B G. २ उत्थेहि B (bd); उत्थेहि उत्थेहि G. ३ आ D. H. ४ चोरो कप्पिदो संधी णिक्कन्तोत्ति BB(ad) K; °चोरं कप्पिअ संधीं० B (b) CJ. ५ om. B (d). E. ६ किं भणासि om. B (a). ७ °दुदिअं विदुआ० BK, ८ दुदिअं B (a); दुदिअंपि add marg. B (d); दुदीअ दुआरअं G; दुदिअं H. ८ उग्घाडिदंत्ति B; °दंत्ति° AB (c); देति B (abd), उग्घाडिदत्ति D.

चारुदत्तः । भवतु । भोः अलं परिहासेन ।

विदूषकः । भो ण परिहासो । पेक्खदु भवं (२९) ।

चारुदत्तः । कस्मिन्नुद्देशे ।

विदूषकः । भो एसो (३०) ।

चारुदत्तः । विलोक्य । अहो दर्शनीयोयं संधिः ।

उपरितलनिपातितेष्टकोयं
शिरसि तनुर्विपुलश्च मध्यदेशे ।
असदृशजनसंप्रयोगभीरो-
र्हृदयमिव स्फुटितं महागृहस्य ॥ २३ ॥

कथमस्मिन्नपि कर्मणि कुशलता ।

विदूषकः । भो वअस्स अअं संधी दुवेहिं ज्जेव्व दिण्णो भवे । आदु आगन्तुएण सिक्खिदुकामेण वा । अण्णधा इध उज्जेइणीए को अम्हाणं घरविहवं ण आणादि (३१) ।

---

द्वारमुद्घाटितमिति । भो वयस्य चारुदत्त उत्तिष्ठोत्तिष्ठ । अस्माकं गेहे संधिं दत्वा चौरो निष्क्रान्तः ।

विदू०–(२९) भो न परिहासः । प्रेक्षतां भवान् ।

विदू०–(३०) भो एषः ।

चारु०–दर्शनीयः सुन्दरः । [उपरितलेति] पुष्पिताग्राछन्दः । स्पष्टार्थं पद्यम् ॥२३॥ अस्मिन्नपि कर्मणीति संधावित्यर्थः ।

विदू०–निद्रायां तस्करापहृतहेमभाण्डगमनमजानन्नेवाह भो इत्यादि । (३१) भो वयस्य अयं संधिर्द्वाभ्यामेव दत्तो भवेत् । अथवा-

---

१ °भो B(ab). २ भअव B(a). ३ कस्मिन्नु देशे B ४ उपरितल H (d) ५ भीरोर्हृ° H. ६ मध्य B (d) ७ दुवेहि B (a). ८ एक्क DH ९ °आगन्तु °H. १० अण्णहा B B(ad). ११ इह B (a). १२ उज्जअणीए B (a). १३ अम्हाण घरविहव को B. १४ घर [illegible] A.

चारुदत्तः ।

वैदेश्येन कृतो भवेन्मम गृहे व्यापारमभ्यस्यता
नासौ वेदितवान्धनैर्विरहितं विस्रब्धसुप्तं जनम् ।
दृष्ट्वा प्राक्तहतीं निवासरचनामस्माकमाशान्वितः
संधिच्छेदनखिन्न एव सुचिरं पश्चान्निराशो गतः ॥२४॥

ततः सुहृद्भ्यः किमसौ कथयिष्यति तपस्वी सार्थवाहसुतस्य गृहं प्रविश्य न किंचिन्मया समासादितमिति ।

विदूषकः । भो कधं तं ज्जेव्व चोरहदअं अणुसोचेसि । तेण चिन्तिदं महन्तं एदं गेहं । इदो रअणभण्डअं सुवण्णभण्डअं वा णिक्कामइस्सामि । स्मृत्वा सविषादमात्मगतम् । कहिं तं सुवण्णभण्डअं । पुनरनुस्मृत्य प्रकाशम् । भो वअस्स तुमं सव्वकालं भणा-

---

गन्तुकेन शिक्षितुकामेन वा । अन्यथेहोज्जयिन्यां कोस्माकं गृहविभवं न जानाति (व्यर्थं कृतः संधिरिति भावः) ।

चारु०—निद्रितान्मैत्रेयात्तस्करेणापहृतं हेममाण्डमजानन्नेव प्राह । [वैदेश्येनेति ।] [शार्दूलविक्रीडितं छन्दः ।] धनैर्विरहितं यतोतो विस्रब्धसुप्तम् । स्फुटार्थम् ॥ २४ ॥ततः यतो रिक्तो गतस्तस्मादित्यर्थः । तपस्वी शोच्यः । सार्थवाहः सागरदत्तश्चारुदत्तपिता तत्सुतस्येत्यर्थः । सार्थवाहसुतस्येत्यनेन महाधनिकपुत्रत्वमावेद्यते ।

विदू०—(३२) भोः कथं तमेव चौरहतकमनुशोचसि(चसि) । तेन चिन्तितं महदेतद्गेहम् । इतो रत्नभाण्डं सुवर्णभाण्डं वा निष्क्रामयिष्यामि । कुत्र तत्सुवर्णभाण्डम् । भो वयस्य त्वं सर्वकालं भणसि

---

१ °धनैर्वि° H. २ विश्रब्ध B. B (ad). D. ३ °मयासादित° E. ४ एव्व H. ५ अणुसोचेसि A B (c) G. अणुसोचासि C. J. ६ °यिस्सामि° B (a). ७ स्मृत्वा (त्वा?) D. ८ °सुवण्णस्स भ० K. ९ सव्वं कालं B (a).

सि मुक्खो मित्तेअओ अपण्डिदो मित्तेअओ त्ति । सुट्टु मए कदं तं सुवण्णभण्डअं भवदो हत्थे समप्पअन्तेण । अण्णधा दासीए पुत्तेण अवहदं भवे (३२) ।

चारुदत्तः । अलं परिहासेन ।

विदूषकः। भो जह णाम अहं मुक्खो किं ता परिहासस्स वि देशआलं ण आणामि (३३) ।

चारुदत्तः । कस्यां वेलायाम् ।

विदूषकः । भो जदा तुमं मए भणिदोसि सीदलो दे अग्गहत्थो (३४) ।

चारुदत्तः । कदाचिदेवमपि स्यात् । सर्वतो निरूप्य सहर्षम् । वयस्य दिष्ट्या ते प्रियं निवेदयामि ।

विदूषकः । किं ण अवहदं (३५) ।

चारुदत्तः । हृतम् ।

---

मूर्खो मैत्रे[यः] अपण्डितो मैत्रेय इति । सुष्टु मया कृतं तत्सुवर्णभाण्डं भवतो हस्ते समर्पयता । अन्यथा दास्याः पुत्रेणापहृतं भवेत् ।(दास्याः पुत्रेणेति गाली । चौरेणेत्यर्थः ।

विदू०—(३३)भो यथा नामाहं मूर्खः किं तत्परिहासस्यापि देशः कालं न जानामि । परिहासस्य देशकालमपीत्यन्वयः ।

विदू०—(३४) भो यदा त्वं मया भणितोसि शीतलस्तेग्रहस्तः

विदू०—(३५) किं नापहृतम् ।

---

१ मित्तेओ B (a). २ सुट्टखु मए B , °खु° B (a) ३ मे किद B (a) ४ ... B (a) ५ अण्णहा B B (a) ६ ठत्तेण B. B (a) ७ जहवि णाम . तहवि परि° B (a). ८ om B ९ °णिदो सदिलो B (a), °णिदोसि सिद° B (b) , णिदो ... B (d). १० प्रिय ते B. B (ad) G. K.

विदूषकः । तधा वि किं पिअं (३६) ।

चारुदत्तः । यदसौ कृतार्थो गतः ।

विदूषकः । णासो क्खु सो (३७) ।

चारुदत्तः । कथं न्यासः । मोहमुपगतः ।

विदूषकः । समस्ससदु भवं । जइ णासो चोरेण अवहदो तुमं किं मोहं उवगदो (३८) ।

चारुदत्तः । समाश्वस्य । वयस्य

कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति ।
शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता ॥ २५ ॥

भोः कैष्टम् ।

यदि तावत्कृतान्तेन प्रणयोऽर्थेषु मे कृतः ।
किमिदानीं नृशंसेन चारित्रमपि दूषितम् ॥ २६ ॥

विदू०–(३६) तथापि किं प्रियम् ।

विदू०–(३७) न्यासः खलु सः ।

विदू०–(३८) समाश्वसितु भवान् । यदि न्यासश्चौरेणापहृतस्त्वमपि किं मोहमुपगतः ।

चारु०– [कः श्रद्धेति ।] अनुष्टुप् श्लोकः । भूतार्थं चौरेण हृतं हेमभाण्डमित्येवंरूपम् ॥ २५ ॥

[यदीति ।] श्लोकः [पूर्वोक्तमेव छन्दः] । कृतान्तेन दैवेन । 'कृतान्तो यमसिद्धान्त दैवाकुशलकर्मसु' इत्यमरः ॥ २६ ॥

१ किं पिअं A B (bc); क पिअं H. २ °मुपागत B (a). ३ समस्सदु D. H. ४ तुमं वि किं AB (bcd) del. वि H (d). ५ उपगदो B. G; उपागदो H (a) ६ om. B H (ad). ७ वयस्याति pr m कः श्रद्धास्य om; del. वयस्य add in marg कः श्रद्धास्यति D. ८ मा B (d). ९ °इस्थाति° G. १० नि प्रतापा K. ११ om B (d). १२ चरित्रमपि G.

विदूषकः । अहं क्खु अवलविस्सं । केण दिण्णं, केण गहिदं, को वा सक्खि त्ति (३९) ।

चारुदत्तः । अहमिदानीमनृतमभिधास्ये ।

भैक्ष्येणाप्यर्जयिष्यामि पुनर्न्यासप्रतिक्रियाम् ।
अनृतं नाभिधास्यामि चारित्रभ्रंशकारणम् ॥ २७ ॥

रदनिका । ता जाव अज्जाधूदाए गदुअ णिवेदेमि (४०) ।

इति निष्क्रान्ता ।

प्रविश्य चेट्या सह चारुदत्तवधूः ।

वधूः । ससंभ्रमम् । अइ सच्चं अंपरिक्खदसरीरो अज्जउत्तो अज्जमित्तेएण सह (४१) ।

चेटी । भट्टिणि सच्चं । किंतु जो सो वेसेजणकेरको अलंकारओ सो अवहदो (४२) ।

---

विदू०—(३९) अहं खल्वपलपिष्यामि । केन दत्तं, केन गृहीतं, को वा साक्षीति ।

चारु०—[भैक्ष्येणेति ।] ॥ २७ ॥

रद०—(४०) तद्यावदार्याधूतायै गत्वा निवेदयामि । धूता चारुदत्तस्य स्त्री । अत्र वधूपदेनेयमेव सर्वत्र ग्राह्या ।

वधूः—(४१) अपि सत्यमपरिक्षतशरीर आर्यपुत्रः आर्यमैत्रेयेण सह । चेटीयं रदनिकैवेति ज्ञेयम् ।

चेटी—(४२) भट्टिनि स्वामिनि । सत्यम् । किं तु यः स वेश्याजनस्यालंकारः सोपहृतः ।(सत्यं त्वयोक्तं अपरीत्यादि तत्सत्यमित्यर्थः । केरक इति षष्ठ्यर्थेऽत्र प्राकृते पूर्वापरत्र बोध्यम् ।

---

१ अवलयिविस्स ? B (b). २ दिण दिण H (a). ३ आधे (?) धास्ये B (d) ४ प्या (?) र्जयिष्यामि D. ५ अज्जाए धूदाए H. ६ om. B (a). ७ णिवेदेमि H. ८ नि कान्ता G. K. ९ अवि सच G. १० अवक्खद० B (a). ११ वेश्या जन B (d). १२ अलंकारको D. H.

वधूर्मोहं नाटयति ।

**चेटी** । समस्ससदु अज्जा धूदा (४३) ।

**वधूः** । समाश्वस्य । हञ्जे किं भणासि अवरिक्खदसरीरो अज्जउत्तो त्ति । वरं दाणिं सो सरीरेण परिक्खदो ण उण चारित्तेण । संपदं उज्जइणीए जणो एव्वं मन्तइस्सदि दलिद्दाए अज्जउत्तेण ज्जेव ईदिसं अकज्जं अणुचिट्ठिदंत्ति । ऊर्ध्वमवलोक्य निःश्वस्य च । भअवं कअन्त पोक्खरवत्तपाडिदजलविन्दुचञ्चलेहिं कीलसि दलिद्दपुरिसभाअधेएहिं । इअं च मे एक्का मादुघरलद्धा रअणावली चिट्ठदि । एदं पि अदिसोण्डीरदाए अज्जउत्तो ण गेह्निस्सदि । हञ्जे अज्जमित्तेअं दाव सद्दावेहि (४४) ।

---

चेटी–(४३) समाश्वसितु आ(त्या)र्या धूता ।

वधूः–(४४) हञ्जे किं भणस्यपरिक्षतशरीर आर्यपुत्र इति । वरमिदानीं स शरीरेण परिक्षतो न पुनश्चारित्रेण । सांप्रतमुज्जयिन्यां जन एवं मन्त्रयिष्यति दरिद्रतयार्यपुत्रेणैवेदृशमकार्यमनुष्ठितमिति । भगवन् कृतान्त हे दैवेत्यर्थः । पुष्करपत्रपतितजलबिन्दुचञ्चलैः क्रीडसि दरिद्रपुरुषभागधेयैः । इयं च मे एका मातृगृहलब्धा रत्नावली तिष्ठति । एतामप्यतिशौण्डीरतयार्यपुत्रो न ग्रहीष्यति । हञ्जे आर्यमैत्रेयं तावदाकारय ।

---

१ समस्ससदु समस्ससदु B K. २ अवक्खद B (a). ३ परिक्खत्तो H (a). ४ उज्जअणीए B (b) K. ५ एवं H (d); एव्व स मन्त॰ B (b). ६ दलिदाए B (b), दलीहादाए B (d). ७ एव्व H. ८ इदिसं AB (d) ९ अणुविचिदात्ति (?) K. १० उध्दं A. ११ निश्वस्य A B (abc). १२ भवं H (a). १३ काअन्त B (b). १४ °पडिदजलेहिं कील॰ B (b) १५ कीलेसि H १६ °पुरुस G. १७ °मादुळघर॰ K. १८ °एदं आदि° D. H; शोण्डीर A. B (c); °एदंपि सोण्डीर॰ K. १९ एसो अज्जउत्तो B. H (ad). K.

चेटी । जं अज्जा धूदो आणवेदि । विदूषकमुपगम्य । अज्ज मित्तेअ धूदा दे सद्दावेदि (४५) ।

विदूषकः । कहिं सा (४६) ।

चेटी । एसा चिट्ठदि, उवसप्प (४७) ।

विदूषकः । उपसृत्य । सोत्थि भोदीए (४८) ।

वधूः । अज्ज वन्दामि । अज्ज पुरत्थिआमुहो होहि (४९) ।

विदूषकः । एसो भोदि पुरत्थिआमुहो संवुत्तोम्हि (५०) ।

वधूः । अज्ज पडिच्छ इमं (५१) ।

---

चेटी–(४५) यदार्या धूताज्ञापयति । आर्य मैत्रेय धूता ते त्वा आकारयति ।

विदू०–(४६) कुत्र सा ।

चेटी–(४७) एषा तिष्ठति । उपसर्प ।

विदू०–(४८) स्वस्ति भवत्यै ।

वधूः–(४९) आर्य वन्दे । आर्य पुरस्तान्मुखो भव । पुरत्थिअ पुरस्तादित्यर्थः ।

विदू०–(५०) एष हे भवति पुरस्तान्मुखः संवृत्तोस्मि ।

वधूः–(५१)आर्य प्रतीच्छ गृहाणेत्यर्थः । इमां रत्नावलीमित्यर्थः

---

१ धूआ G. २ उपसप्प B (a) ३ भोदिए H ४ अज्ज AB (c)DFGK ५ पुरत्थि B (a) (-पौरस्त्या०) K; पुरत्थिम B (b); पुरन्थीआ B (d) ६ एसा भो० CD ७ पुरत्थिमा B (a), पुरत्थिम B (b) ८ संवुत्तो G. म्हि om B (a) as G; संवुत्तोम्हि H. ९ पडिच्छ H.

विदूपकः। किं ण्णेदं (५२)।

वधूः। अहं क्खु रअणसट्टिं उववसिदा आसि। तहिं जधाविहवाणुसारेण बम्हणो पडिग्गाहिदव्वो। सो अण्णपडिग्गाहिदो। ता तस्स कदे पडिच्छ इमं रअणमालिअं (५३)।

विदूपकः। गृहीत्वा। सोत्थि। गमिस्सं। पिअवअस्सस्स णिवेदेमि (५४)।

---

विदू०–(५२) किं ने(ण्णे)दमिति वितर्के विचारे वा मन्यत्र सर्वत्र बोध्यम्।

वधूः–(५३) अहं खलु रत्नषष्ठीमुपोषितासम्। तत्र यथाविभवानुसारेण ब्राह्मणः प्रतिग्राहि(हयि)तव्यः। सः अन्यप्रतिग्राहितः (?)। तत्तस्य कृते प्रतीच्छेमां रत्नमालिकाम्। रत्नपष्ठी–अरण्यरत्नषष्ठिकाभिधं व्रतम्। इदं मीष्मव्रतमित्येके। तत्र रत्नषष्ठीव्रत इत्यर्थः। सर्वोप्ययं परिहास इति ज्ञेयम्। दीयते चेयं सुवर्णभाण्डप्रतिदानत्वेनेतीदं स्फुटमा(म)ङ्कसमाप्त्येव।

विदू०–(५४) स्वस्ति। गमिष्यामि। प्रियवयस्यस्य निवेदयामि। यत्त्वयोक्तं दानं दीयत इति तन्निवेदयामीत्यर्थः। अत एवाह।

---

१ भोदि किं णेदं B; °किं णेदं AB (cd) D; °किण्णेदं K. २ अज्ज अहं° B. B (ad). ३ रअणउट्टि B; छट्ठिं H (a), सट्ठि AB (cd), सट्ठी D सट्ठी H छट्ठिं K. ४ उथ (अ?) वसिदा B(a); उपवसिदा B (d). ५ आसि AB (bc); असि H. ६ तहि B (d). ७ पडिग्गाहिदव्वो G; पडिग्गाहिदो AB (bc) ८ सो अणं (=सच न) BCE; सो अण्ण° AB (bc); सो अण° pr. m. del. अ B (d) सो अण्णत्त° D, H. अण्णं पडिग्गाहिदो G, सोअ पडि° J. ९ रअणावलिअं B, रअणावालिअ B (a). १० गहित्तं B (d) ११ °देमि G.

वधूः । अज्ज मित्तेअ मा क्खु मं लज्जावेहि (९५)।

इति निष्क्रान्ता ।

विदूषकः । सविस्मयम् । अहो से महाणुभावदा (९६)।

चारुदत्तः । अये चिरयति मैत्रेयः । मा नाम वैक्लव्यादकार्यं कुर्यात् । मैत्रेय मैत्रेय ।

विदूषकः । उपसृत्य । एसोम्हि । गेण्ह एदं (९७)।

रत्नावलीं दर्शयति ।

चारुदत्तः । किमेतत् ।

विदूषकः । भो जं दे सरिसदारसंगहस्स फलं (९८)।

चारुदत्तः। कथं ब्राह्मणी मामनुकम्पते। कष्टमिदानीमस्मि दरिद्रः ।

आत्मभाग्यक्षतद्रव्यः स्त्रीद्रव्येणानुकम्पितः ।
अर्थतः पुरुषो नारी या नारी सार्थतः पुमान् ॥ २७ ॥

---

वधूः–(९५) आर्य मैत्रेय मा खलु मां लज्जावेहि । लज्जितां कुर्वित्यर्थः ।

विदू०–स्वगतम्।(९६) अहोस्या महानुभावता। अस्या धूतायाः।

विदू०–(९७) एषोस्मि। गृहाणैताम् ।

विदू०–(९८) भो यत्ते सदृशदारसंग्रहस्य फलम् । सदृशेति योग्येत्यर्थः ।

---

१ मा क्खु मं० B. B (a). °ख्खु म° H. २ Once K. ३ °णी समस्स अ० B; °ंस्सस B (a): pr. m.°णी मे दे del मे दे et add in marg. समस्स मे दे B (b). ४ १९२ स्त्री० B (a).

अथवा । नाहं दरिद्रः । यस्य मम

विभवानुगता भार्या सुखदुःखसुहृद्भवान् ।
सत्यं च न परिभ्रष्टं यद्दरिद्रेषु दुर्लभम् ॥ २८ ॥

मैत्रेय गच्छ रत्नावलीमादाय वसन्तसेनायाः सकाशम् । वक्तव्या च सा मद्वचनात् । यत्खल्वस्माभिः सुवर्णभाण्डमात्मीयमिति कृत्वा विश्रम्भाद्द्यूते हारितम् । तस्य कृते गृह्यतामियं रत्नावलीति ।

विदूषकः । मा दाव अक्खाइदस्स अभुत्तस्स अप्पमुल्लस्स चोरेहिं अवहदस्स कारणादो चदुस्समुद्दसारभूदा रअणावली दीअदि (९९) ।

चारुदत्तः । वयस्य मा मैवम् ।

यं समालम्ब्य विश्वासं न्यासोऽस्मासु त्वया कृतः ।
तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥ २९ ॥

---

चारु०—[आत्मेति] श्लोकः ॥ २७ ॥ [विभवेति] ॥ २८ ॥

विदू०—(९९) मा तावदखादितस्याभुक्तस्याप(ल्प)मौ(मू)ल्यस्य चौरैरपहृतस्य कारणाच्चतुःसमुद्रसारभूता रत्नावली दीयते । अखादितस्येत्यादिविशेषणविशिष्टस्य सुवर्णभाण्डस्य कारणादित्यन्वयः ।

चारु०—[यं समेति] श्लोकः । तस्य महतः प्रत्ययस्य विश्वासस्य मूल्यं रत्नावलीरूपं दीयत इत्यर्थः ॥ २९ ॥ स्फाटिकया स्पर्शेन-

---

१ न च B (d). २ वसन्तसेनागृहं B B (a) ३ °अस्मदीय° H B (a). ४ °विस्रम्भा° A B (abc) D. ५ चोरेहिं K ६ °चतु स° B (a), °चतुस्स° B (d): चदुस्समुद्दस्य सार° H (b). ७ वयस्य मैवम् H (a). ८ तस्यै तन्मह० A B (c), तस्मै तन्मह० B (b) ९ मूल्यं B (d) K.

तद्वयस्यास्मच्छरीरस्पृष्टिकया शापितोसि । नैनामग्राहयित्वात्रागन्तव्यम् । वर्धमानक

एताभिरिष्टिकाभिः संधिः क्रियतां सुसंहवः शीघ्रम् ।
परिवादबहलदोषान्न यस्य रक्षां परिहरामि ॥ ३० ॥

वयस्य मैत्रेय भवताप्यकृपणशौण्डीर्यमभिधातव्यम् ।

विदूषकः । भो दलिद्दो किं अकिविणं मन्तेदि(६०) ।

चारुदत्तः । अदरिद्रोस्मि सखे । 'यस्य मम । विभवानुगता भार्ये'त्यादि पुनः पठति । तद्गच्छतु भवान् । अहमपि कृतशौचः संध्यामुपासे । इति निष्क्रान्ताः सर्वे ।

॥ संधिच्छेदो नाम तृतीयोङ्कः समाप्तः ॥

---

स्यर्थः । शापितः शपथं श्रावितः । [एताभिरिति] आर्याच्छन्दः ॥३०॥ अकृपणमदीनं शौण्डीर्यमौद्धत्यसहितं वीर्यं यत्र तदेवं यथा स्यात्तथा अभिधातव्यं कथि(थयि)तव्यम् । इदमभिधानक्रियाविशेषणम् ।-वसन्तसेनायाः पुर इति शेषः ।

विदू०-(६०) भो दरिद्रः किमकृपणं मन्त्रयति । किंतु कृपणमेव मन्त्रयतीत्यर्थः । इतीदं परिहसतीति भावः । संध्यां प्रातःसंध्यामित्यर्थः । इति मृच्छकटिकप्रकरणव्याख्यायां श्रीलल्लादीक्षितसंप्रयुक्ता भमेण महता राजश्रीमलिसेनसाहबानंदायाचूडामूलं व्याख्यातायां संधिच्छेदो नाम तृतीयोङ्कः ॥ ३ ॥ शुभमस्तु ॥

---

१ वर्धमानक वर्धमानक B (b) E, °वर्ध ..क॰ om B (d), °नकः C. २ °ष्टिका corr °ष्टका° B (d), °ष्टकाभि D K, रिष्टिकाभि ? F. ३ सुसंहतः (?) B (d) ४. परिवादात् (?) B (d) ५ दोषात् नयस्य K; बहुलदोषात् F G. ६. नृपस्य B H (ad) K. ७ °रक्षार्थ° BB (a) K. ८ अकिविणं B (d). ९ whole verse instead of इत्यादि &c. D, १० निष्क्रान्ता K ११. इति मृच्छकटिकायां तृ० B, इति मृच्छकटिके D. १२. om. B D F H K.

# चतुर्थोऽङ्कः ।

ततः प्रविशति चेटी ।

चेटी । आणत्तम्हि अत्ताए अज्जआए सआसं गन्तुं । एसा अज्जआ चित्तफलअणिसण्णदिट्ठी मदणिआए सह किंपि मन्तअन्ती चिट्ठदि । ता जाव उवसप्पामि (१) ।

इति परिक्रामति ।

ततः प्रविशति यथानिर्दिष्टा वसन्तसेना मदनिका च ।

वसन्तसेना । हञ्जे मदणिए अवि सुसदिसी इअं चित्ताकिदी अज्जचारुदत्तस्स (२) ।

---

श्रीः । चेटीयं काचन वसन्तसेनादासीति ज्ञेयम् ।

चेटी– (१) आज्ञप्तास्म्यार्यया (१) र्यासकाशं गन्तुम् । आर्यया-वसन्तसेनामात्रा माधवसेनया । आर्या वसन्तसेना । एषार्या चित्र-फलकानिषण्णदृष्टिर्मदनिकया सह किमपि मन्त्रयन्ती तिष्ठति । तद्या-वदुपसर्पामि । यथानिर्दिष्टेति । चित्रदत्तदृष्टिरित्यादीत्यर्थः ।

वस०– (२) हञ्जे मदनिके अपि सुसदृशीयं चित्राकृतिरार्य-चारुदत्तस्य । सुसदृशी योग्या । तत्सौन्दर्यानुरूपसौन्दर्येति यावत् । चित्रे लेख्य आकृतिः सर्वावयवसंस्थानं चित्राकृतिरित्यर्थः । चित्र-रूपालेख्यरूपाकृतिरिति वा ।

---

१ आणत्तं ह्मि B (ad), आणत्तह्मि D; अंपत्त° H. २ °ताए H. ३ अज्जुआमआसं AB (bcd) EG; अज्जुआए स° B, अज्जआ स° D. ४ एसा अ अज्जुआ B (a) EK. which has अज्जुआ throughout for अज्जआ as also B. ५ °फलणि° AB (bcd) DFK, °फल° B. ६ मअणि° K. ७ किं वि [illegible] H. ८ मं तिअन्ती? H. ९ उप० B (ab). १० मअणिए BDK; मअणीए G. ११ °कदी B (d).

मदनिका । सुसदिसी (३) ।

वसन्तसेना । कधं तुमं जाणासि (४) ।

मदनिका । जेण अज्जआए सुसिणिद्धा दिट्ठी अणुलग्गा (५) ।

वसन्तसेना । हञ्जे किं वेसवासदक्खिण्णेण मदणिए एव्वं भणासि (६) ।

मदनिका । अज्जए किं जो ज्जेव जणो वेसे पडिवसदि सो ज्जेव अलीअदक्खिण्णो भोदि (७) ।

---

मद०—(३) सुसदृशी ।

वस०—(४) कथं त्वं जानासि ।

मद०—(५) येनार्यायाः सुस्निग्धा दृष्टिरनुलग्ना ।

वस०—(६) हञ्जे किं वेशवासदाक्षिण्येन मदनिके एवं भणसि । 'वेशो वेश्याजनसमाश्रयः' इत्यमरः । वेशे यो वासस्तेन यद्दाक्षिण्यं नैपुण्यं तेनेत्यर्थः । 'वेशवाददाक्षिण्येन' इति पाठे वेशानां वेश्याश्रितानां यो वादस्तस्य दाक्षिण्येन चातुर्येणेत्यर्थः । दाक्षिण्येन प्रेम्णा इत्यप्यर्थः ।

मद०— (७) आर्ये किं य एव जनो वेशे प्रतिवसति स एवालीकदाक्षिण्यो भवति । अलीकं मिथ्या दाक्षिण्यं प्रीतिर्यस्य स इत्यर्थः ।

---

१ कधं B (ad) २ जाणेसि H. ३ सुसणिद्धा B, सुणिद्धा B (b) ४ °जणा ? B (bd) ५ दक्खिणेण E, दक्खिण° J; दक्खिण्णेण K. ६ मभणिए B D F, °णि एव B (d) ७ भणिस B. ८ दक्खिणो J

**वसन्तसेना** । हञ्जे णाणापुरिससङ्गेण वेसाजणो अलीअदक्खिण्णो भोदि (८) ।

**मदनिका** । जदो दाव अज्जआए दिट्ठी इध अभिरमदि हिअअं चं तस्स कारणं किं पुच्छीअदि (९) ।

**वसन्तसेना** । हञ्जे सहीअणादो उवहसणीयदं रक्खामि (१०) ।

**मदनिका** । अज्जेए एव्वं णेदं । सहीअणचित्ताणुवत्ती अबलाअणो भोदि (११) ।

---

वस०– (८) हञ्जे नानापुरुषसङ्गेन वेश्याजनोऽलीकदाक्षिण्यो भवति । यादपराजिता मदनिका कथं त्वं जानासीत्यस्योत्तरमाह ।

मद०– (९) यतस्तावदार्याया दृष्टिरिहाभिरमति(ते) हृदयं च तस्य कारणं किं पृच्छयते । (तस्सेत्यादेर्यत्र चक्षुर्हृदयं च..लग्नं तत्र कारणं किं पर्यालोच्यते । पुंसीत्वशि सुन्दरे तावदासक्तावले विलम्बेनेत्याशयः ।.इह चारुदत्तचित्रफलके ।

वस०– (१०) हञ्जे सखीजनादुपहसनीयतां रक्षामि । अयोग्योनया नायकः कृत इत्येवंरूपामुपहसनीयतामित्यर्थः ।

मद०– (११) आर्ये एवं ने(वमि)दम् । सखीजनचित्तानुवर्त्यबलाजनो भवति ।

---

१ वेस्सा° D. २ अलिअ B. ३ दक्खिणो J. ४ हिआअे B (b). ५ om D H. ६ किं पि B (d); om. G. ७ सहि० B (d), सहि अण्णादो= अन्यस्मात् K ८ °णीअदा A B (c); °अदं B; °सणीअ (?) B (b); उवहसणिआद E H, °णीयदा J. ९ दिक्खामि A B (c) F; देक्खामि B (b), दक्खामि (=द्रक्ष्यामि) D; also H १० °ए एवं A B (c); अज्जए व B (d). ११ सहीअन C, °अण D K. १२ °णुवर्दी D; °ताणुवर्दा ? H. १३ °जणो B.

प्रथमा चेटी । उपसृत्य । अज्जए अत्ता आणवेदि गहिदावँगुण्ठणं पक्खदुआरए सज्जं पवहणं । ता गँचेत्ति (१२)।

वसन्तसेना । हञ्जे किं अज्जचारुदत्तो मं णइस्सदि (१३) ।

चेटी । अज्जए जेण पवहणेण सह सुवर्णदससाँहस्सिओ अलङ्कारओ अणुप्पेसिदो (१४) ।

वसन्तसेना । को उण सो (१५) ।

चेटी । एसो ज्जेव राँअसालो संटाणओ (१६) ।

---

चेटी– (१२) आर्ये माताज्ञापयति गृहीतावगुण्ठनं पक्षद्वारे सज्जं प्रवहणम् । तद्गच्छेति । गृहीतावगुण्ठनमाच्छादनमहापटाच्छादितं 'कर्णीरथः प्रवहणम्' इति कोशः । स्त्रीणां स्थितियोग्योभितः प्रमाच्छन्नो रथः प्रवहणम् । स एव कर्णीरथः स्फुटं चेदं दशकुमारे द्वितीयचरिते ।

वस०–(१३) हञ्जे किमार्यचारुदत्तो मां नयि(ने)ष्यति ।

चेटी–(१४) आर्ये येन प्रवहणेन सह सुवर्णदशसाहस्रिकोलंकारोनुप्रेषितः । सुवर्ण-दशसाहस्रिकम् । मोहर इति भाषया प्रसिद्धमिति पूर्वमुक्तम् ।

वस०–(१५) कः पुनः सः ।

चेटी–(१६) एष एव राजश्यालसंस्थानः ।

---

१ उपसृत्य प्रथमा चेटी B (a). २ आत्ता J. ३ अणवेदि H ४ अवगुठणं B (a)^a ५ गच्छति B D H, गच्छेदि H (a) ६ सुवण्णसद B. ७ साहस्सिद (which is ओ) A B (c); साहस्सिआओ H (a); साहस्सो G; साहस्सिओ K. ८ अलङ्कार (which is ओ) A B (c) ९ °जसे A B (bc). °जसो E. १० °सालसंठाणो A B (bc) G; राअसालो सं० B (a) ,राअउलसठाणो del उल et add marg ल B (d), सालसंठाणो D, सालओ सठाणो h.

वसन्तसेना । सक्रोधम् । अवेहि मा पुणो एव्वं भणिस्ससि (१७) ।

चेटी । पसीददु पसीददु अज्जआ । संदेसेण म्हि पेसिदा (१८) ।

वसन्तसेना । अहं संदेसस्स ज्जेव कुप्पामि (१९) ।

चेटी । ता किंति अत्तं विण्णविस्सं (२०) ।

वसन्तसेना । एव्वं विण्णविदव्वा जइ मं जीअन्तीं इच्छसि ता एव्वं ण पुणो अहं अत्ताए आणविदव्वा (२१) ।

चेटी । जधा दे रोअदि (२२) ।

इति निष्क्रान्ता ।
प्रविश्य ।

---

वस०–(१७) अपेहि मा पुनरेवं भणिष्यसि । अपेहि गच्छ ।

चेटी–(१८)प्रसीदतु प्रसीदत्वार्या । संदेशेनास्मि प्रेसि(रि or षि)ता । यथा संदेशस्तथा मयोक्तम् । मम नास्त्यत्र दोष इति । किंच न कुप्यन्ति संदेशहारिणे प्रभव इति भावः ।

वस०– (१९) अहं संदेशस्यैव कुप्यामि । संदेसस्सेति षष्ठी चतुर्थ्यर्थे । संदेशायेत्यर्थः ।

चेटी–(२०)तत्किमित्यत्तं मातरम्।विण्णविस्सं विज्ञापयिष्यामि।

वस०–(२१) एवं विज्ञापयितव्या यदि मां जीवन्तीमिच्छसि तदै(दे)वं न पुनरहं मात्राज्ञापि(पयि)तव्या ।

चेटी–(२२) यथा ते तुभ्यम् । रोचते ।

---

१ °दतु ... दतु D २ अत्ताए D. ३ किं अत्तअं B Ⅱ (a), किंति अत्तअं B (d). ४ एवं B (d). ५ विण्णइदव्वा D E. ६ जं A Ⅱ (c) D. ७ °ती मिच्छसि A Ⅱ (c) D; जीवन्तीं B (a). ८ पुणो अत्ताएण om. अह B B (a). ९ आणाविदव्वा A B (d) D; आणाविदव्व B; आणाइदव्व Ⅱ (a), आणाइदव्वा B (b), अणाविदव्वा K.

शर्विलकः ।

दत्त्वा निशाया वचनीयदोषं
निद्रां च जित्वा नृपतेश्च रक्षान् ।
स एष सूर्योदयमन्दरश्मिः
क्षपाक्षयाच्चन्द्र इवास्मि जातः ॥ १ ॥

अपि च ।

यः कश्चित्त्वरितगतिर्निरीक्षते मां
संभ्रान्तं द्रुतमुपसर्पति स्थितं वा ।
तं सर्वं तुलयति दूषितोऽन्तरात्मा
स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥ २ ॥

मया खलु मदनिकायाः कृते साहसमनुष्ठितम् ।

परिजनकथासक्तः कश्चिन्नरः समुपेक्षितः
क्वचिदपि गृहं नारीनाथं निरीक्ष्य विवर्जितम् ।
नरपतिबले पार्श्वायाते स्थितं गृहदारुव-
द्व्यवसितशतैरेवंप्रायैर्निशा दिवसीकृता ॥ ३ ॥

इति परिक्रामति ।

---

शर्वि°—[दत्त्वेति] श्लोकः [उपजातिछन्दसा] ॥ १ ॥ [यः कश्चिदिति ।] प्रहर्षिणीछन्दः । त्वरितगतिर्यः कश्चित्संभ्रान्तं मां निरीक्षते । चौर्यादिना संभ्रान्तं स्थितं वा मां शीघ्रमुपसर्पति समीपमागच्छति च यः कश्चित्तं सर्वं जनं चौर्याद्यकर्मकारणेन दूषितोऽन्तरात्मा तुलयति परीक्षते । अयं जनश्चौरोऽयमिति मां शङ्कतेऽन्तःकरणमित्यर्थः । अत एवाह स्वैर्दोषैरित्यादि ॥ २ ॥ मया खल्वित्यादि च साहसं चौर्यरूपमिदमेवाभिसंधाय

---

१ निशाया B (a). २ रक्षान् A B C D F G J. ३ om. B (b). ४ °गति र्नि° D H. ५ °इवते B (b), निरि° F. ६ °तान्तरात्मा K. ७ नारी om. B (b). ८ वर्जितम् A B (c); निर्जितम् F. ९ पार्श्वो° om. B (d).

**वसन्तसेना** । हञ्जे इमं दाव चित्तफलअं मम सेअणीए ठाविअ तालवेण्टअं गेह्णिअ लहुं आअच्छ (२३) ।

**मदनिका** । आं । जं अज्जआ आण्णवेदि (२४) । इति फलकं गृहीत्वा निष्क्रान्ता ।

**शर्विलकः** । इदं वसन्तसेनाया गृहम् । तद्यावत्प्रविशामि । प्रविश्य । क्व नु मया मदनिका द्रष्टव्या ।

ततः प्रविशति तालवृन्तहस्ता मदनिका ।

**शर्विलकः** । दृष्ट्वा । अये इयं मदनिका ।

मदनमपि गुणैर्विशेषयन्ती
रतिरिव मूर्त्तिमती विभाति येयम् ।
मम हृदयमनङ्गवह्नितप्तं
भृशमिव चन्दनशीतलं करोति ॥ ४ ॥

मदनिके

---

निशि कृतं निजं चरितं वर्णयति । [परिजनेति ।] हरिणीवृत्तनाच्छन्दः । स्पष्टम् ॥ ३ ॥

वस०—(२३) हञ्जे इदं तावच्चित्रफलकं मम शयनीये स्थापयित्वा तालु(ल)वृन्तकं गृहीत्वा लघ्वागच्छ । लघु-शीघ्रम् ।

मद०—आमङ्गीकारे । यदार्याज्ञापयति (२४) ।

शर्वि०—मदनिकेति नामार्थं निर्वक्ति । [मदनमपीति ।] स्पष्टम् । पुष्पिताग्राच्छन्दः ॥ ४ ॥ मदनिके इत्याह्वानम् ।

---

१ om. B B (a). २ °फलहअं B (b) E K. ३ सअणीए B (a). ४ थाविअ corr ठाविअ B (d). ५ वेण्टं B (a) ६ लहु D H. ७ om. B B (ad) C J. ८ नु मया om. A B (bc) D E F G; नु मयात्र B K. ९ om B (a) १० मदनिके, मदनिके B B (ad) K.

**मदनिका** । दृष्ट्वा । अम्मो कधं सव्विलओ । सव्विलअ साअदं दे । कहिं तुमं (२९) ।

**शर्विलकः** । कथयिष्यामि । इति सानुरागमन्योन्यं पश्यतः ।

**वसन्तसेना** । चिरअदि मदणिआ । ता कहिं णु हु सा । गवाक्षकेण दृष्ट्वा । कधं एसा केणावि पुरिसकेण सह मन्तअन्ती चिट्ठदि । जधा अदिसिणिद्धाए णिच्चलदिट्ठीए आपिबन्ती विअ एदं णिज्झाअदि तधा तक्केमि एसो सो जणो एदं इच्छदि अभुजिस्सं कादुं । ता रमदु रमदु मा कस्सावि पीदिच्छेदो भोदु । ण हु सद्दाविस्सं (२६) ।

मद०-(२९) आश्चर्यं कथं शर्विलकः । शर्विलक हे स्वागतं ते । कुत्र त्वम् ।

वस०-इदं स्वगतम् । (२६) चिरयति मदनिका । तत्कुत्र नु खलु सा । कथमेषा केनापि पुरुषकेण(ण ?) सह मन्त्रयन्ती तिष्ठति । यथातिस्निग्धया निश्चलदृष्ट्यापिबती(न्ती)वैतं निर्ध्यायति तथा तर्कयाम्येष स जन एतामिच्छत्यभुजिष्यां कर्तुम् । तद्रमतु(तां) रमतु(तां) मा कस्यापि प्रीतिच्छेदो भवतु । न खलु सद्दाविस्सं आकारयिष्यामीत्यर्थः । अतिस्निग्धयातिस्नेहविशिष्टया । निश्चलेति निर्निमेषेत्यर्थः । अभुजिष्यां स्वमिन्नेन केनाप्यभोग्याम् । कान्तवरस्यगृहस्थां स्वाधीनामित्यर्थः ।

१ सव्विलअ (ओ) A B (c); सव्विलो H (a). २ सव्विलआ H. ३ कहिं तुमं om. K. ४ केणावि or वि B D E, केणवि G. ५ पुरिसेण H (d). ६ जधा अ D (ab) K. ७ दिट्ठिए A B (c); °दिट्ठि G. ८ आपिबन्ती B (d); आपि॰ H. ९ °ज्झाअदि A B (bc) E F; णिज्झा॰ H. १० जो एदं K. ११ रमदु रमदु H (ab) om. D F H. १२ कस्सावि or वि B D K. १३ °च्छेदो AB (c) F; च्छेदो H; पीदिच्छेदो B (a); ॰च्छेदो B (b). १४ सद्दाविस्सं B.

मदनिका। सव्विलअ कधेहि (२७)।

शर्विलकः। साशङ्कं दिशोऽवलोकयति।

मदनिका। सव्विलअ किं ण्णेदं संसंको विअ लक्खीअसि (२८)।

शर्विलकः। वक्ष्ये त्वां किंचिद्रहस्यम्। तद्विविक्तमिदम्।

मदनिका। अध इं (२९)।

वसन्तसेना। कधं परमरहस्सं। ता ण सुणिस्सं (३०)।

शर्विलकः। मदनिके किं वसन्तसेना मोक्ष्यति त्वां निष्क्रयेण।

---

मद०–(२७) शर्विलक कथय।

मद०–(२८) शर्विलक किं नेदम्। सशङ्क इव लक्ष्यसे।

[ शर्वि० ] विविक्तं-विजनमिदं-स्थलम्।

मद०–(२९) अथ किम्।

वस०–(३०) कथं परमरहस्यम्। तन्न श्रोष्यामि। कस्यापि रहस्यं न (श्रा)व्यमिति शिष्टानां संप्रदायः।

---

१ °ण्णेदं B C, क्णिणेदं B (a). २ °संको B (d). ३ रहस्सं त० B. ४ तद्वि or द्वि विक्तमिदं E. ५ पडमार° B (b). ६ नि क्रयेण A II (c) K, निक्र° B (d).

**वसन्तसेना** । कधं मत्संबन्धिणी कधा । ता सुणिस्सं ईमिणा गवक्खेण ओवारिदशरीरा (३१) ।

**मदनिका** । सव्विलअ भणिदा मए अज्जआ । तदो भणादि जइ मम छन्दो तदा विणा अत्थं सव्वं परिअणं अभुजिस्सं करइस्सं । अध सव्विलअ कुदो दे एत्तिओ विहवो जेण मं अज्जआसआसादो मोआइस्ससि (३२) ।

**शर्विलकः** ।

दारिद्र्येणाभिभूतेन त्वत्स्नेहानुगतेन च ।
अद्य रात्रौ मया भीरु त्वदर्थे साहसं कृतम् ॥ ९ ॥

---

वस०—(३१) कथं मत्संबन्धिनी कथा । तच्छ्रोष्याम्यनेन गवाक्षेणापवारितशरीरा । (इदमपि स्वगतमिति ज्ञेयं विज्ञैः) ।

मद०—(३२) शर्विलक भणिता मयार्या । तदा भणति यदि मम छन्दस्तदा विनार्थं च सर्वं परिजनमभुजिष्यां(ष्यं) करिष्यामि । अथ शर्विलक कुतस्त एतावान्विभवो येन मामार्यासकाशान्मोचयिष्यसि । मम छन्दो ममाभिलापः । [दारिद्र्येणेत्यनुष्टुप्] ॥ ९ ॥

---

१ कधं B (b). २ मम संबन्धिणी B B (ad) C J K ३ om. K. ४ इमि… रीरा om. B B (a). ५ गअक्खेण B (d). ६ उत्तारिद A B (c), उत्तारुद D H. ७ सरीरा A B (bc) C D ८ सच्छन्दो A B (c); सच्छन्दो B C D H J K; संउंदो B (b) E F. ९ अत्थं च A B (bcd) D. १० सव्वं अत्थं D. ११ करिस्सं B (d); करविस्सं D, करावेस्स H. १२ अथ सव्विल B (d). १३ एत्तिउ A B (c); एत्तिको B (a); एत्ति B (d); om. K. १४ मे H. १५ °आसादाति B B (a); °आसाति et super scr घइ B (d), °इस्सदि H. १६ दारिद्रे° K. १७ °भूतेन A B (c). १८ अद्य A B (abc) E F G. १९ om. B (a).

वसन्तसेना । पसण्णा से आकिदी । साहसकम्मदाए उण उव्वेअणीआ (३३) ।

मदनिका । सव्विलअ इत्थीकलत्तवत्तस्स कारणेण उहअं पि संसए विणिक्खित्तं (३४) ।

शर्विलकः । किं किम् ।

मदनिका । सरीरं चारित्तं च (३५) ।

शर्विलकः । अपण्डिते साहसे श्रीः प्रतिवसति ।

मदनिका । सव्विलअ अखण्डिदचारित्तोसि । ता ण हु दे मम कारणादो साहसं करन्तेण अच्चंतविरुद्धं आचरिदं (३६) ।

---

वस०—(३३) प्रसन्नास्याकृतिः । साहसकर्मतया पुनरुद्वेजनीया । उद्वेगभाजनमित्यर्थः ।

मद०—(३४) शर्विलक स्त्रीकल्यवर्तस्य कारणेनोभयमपि संशये विनिक्षिप्तम् ।

मद०—(३५) शरीरं चारित्रं च ।

मद०—(३६) शर्विलक अखण्डितचारित्रोसि । तन्न खलु ते त्वया मम कारणात्साहसं कुर्वता प्रोद्धांतविरुद्धमाचरितम् । अपि तु सिद्धान्तविरुद्धमाचरितमेवेति काकुः । सर्वेयं वक्रोक्तिः । अत्रोत्तर-

---

१ पसणा A B (c); पसंणा H. २ ण उण D. ३ इत्थि B (ad). ४ कलव० B (d). ५ काल० A B (abcd) D E K. ६ उहअं K. ७ बि B (a). ८ णिविखत्तं B (a). ९ शरीरं B (d). १० चारित्तं A B (c) D. ११ अखण्डचारित्तोसि Sca B (a); °चारित्तस्स B (d). १२ करेन्तेण B B (a); करेंतस्स B (d). १३ विरुद्धमाचरिदं D. १४ आमरिदं A B (bc)?

शर्विलकः ।

नो मुष्णाम्यबलां विभूषणवतीं फुल्लामिवाहं लतां
विप्रस्वं न हरामि काञ्चनमथो यज्ञार्थमभ्युद्धृतम् ।
धात्र्युत्सङ्गगतं हरामि न तथा बालं धनार्थी क्वचि-
त्कार्याकार्यविचारिणी मम मतिश्चौर्येऽपि नित्यं स्थिता ॥ ६ ॥

तद्विज्ञाप्यतां वसन्तसेना

अयं तव शरीरस्य प्रमाणादिव निर्मितः ।
अप्रकाशो ह्यलंकारो मत्स्नेहाद्धार्यतामिति ॥ ७ ॥

मदनिका । सव्विलअ अप्पकासो अलंकारओ । अअं च

---

माह शर्विलकः । [ नो मुष्णाम्यबलामिति । ] शार्दूलविक्रीडितं छन्दः । स्फुटार्थं पद्यम् । चौर्यमपि विचार्यैव मया क्रियत इति भावः ॥ ६ ॥ तद्विज्ञाप्यतामिति विज्ञापनामेवाह । [अयमिति ।] अयमलंकारः । तव वसन्तसेनाया इत्यर्थः । अनुचितः प्रकाशो यस्य सोऽप्रकाशः । मयि स्नेहादयं धार्यताम् । परंतु शर्विलकेन दत्त इनि(ति) न प्रकाशनीयः । तथा सत्यस्माकं राजदण्डः स्यादित्याशयः ॥ ७ ॥

मद०–(३७) शर्विलक अप्रकाशोऽलंकारः । अयं च जन इति द्वयमपि न युज्यते । तदुपनय तावत् । पश्यामि तावदेतमलंकारम् ।

---

१ मुष्णा० K. २ °मभ्युद्धृत B (a). ३ कार्यां om. B (b). ४ विचारिता B ५ तत्र K. ६ अलङ्कारओ B B (ad), अलङ्कारअं J. ७ सव्विलआ K. ८ °प्पकासो J. ९ अलंकारा A B (bcd) D E १० अअ च A B (bcd) D.

जणोत्ति दुवेवि ण जुज्जादि । ता उवणेहि दाव । पेक्खामि दाव एदं अलंकारअं (३७)

शर्विलकः । इदमलंकरणम् । इति साशङ्कं समर्पयति ।

मदनिका । निरूप्य । सव्विलअ दिट्ठपुरुव्वो विअ अअं अलंकारओ । ता भणेहि कुदो दे एसो (३८) ।

शर्विलकः । मदनिके किं तवानेन । गृह्यताम् ।

मदनिका । सरोषम् । जइ मे पच्चअं ण गच्छसि ता किंणिमित्तं मं णिक्किणसि (३९) ।

शर्विलकः । अयि प्रभाते मया श्रुतं श्रेष्ठिचत्वरे यथा सार्थवाहस्य चारुदत्तस्येति । वसन्तसेना मदनिका च मूर्छां नाटयतः ।

शर्विलकः । मदनिके समाश्वसिहि । किमिदानीं त्वम्

---

क्व चायं(?) जनो वसन्तसेनादिः सप्रमाणव्यवहारकारिजन शिरोमणिः क्व च पुनरासादितं वस्तु चौर्येणेति । द्वयमपि न युज्यत इत्यर्थः । तावदिति द्विरुक्तिः संभ्रमेण ।

मद०–(३८) [शार्विलक] दृष्टपूर्व इवायमलंकारः । तद्भण कुतस्त एषः ।

मद०–(३९) यदि मे प्रत्ययं न गच्छसि तत्किंनिमित्तं मां निष्क्रीणासि । निष्क्रयं दत्वा स्वीकरोषीत्यर्थः । प्रत्ययं विश्वासम् ।

---

१ जनो C; अअं च जणो whole om. J. २ om. B (d). ३ om. B B (ad) C J. ४ om. B (a). ५ om. A B (bc) J. ६ °पुव्वो A B B (ad) B H. ७ अयं D H. ८ कुदो एसो B B (a). ९ णिक्किणिस्ससि B (d); णिक्कीणसि D H; विक्कणासि G. १० अय B (a). ११ °त्तस्य इति &c. B. १२ Twice B G.

विपादस्रस्तसर्वाङ्गी संभ्रमभ्रान्तलोचना ।
नीयमानाभुजिष्यात्वं कम्पसे नानुकम्पसे ॥ ८ ॥

**मदनिका** । समाश्वस्य । साहसिअ ण हु तुए मम कारणादो इमं अकज्जं करन्तेण तस्सिं गेहे कोवि वावादिदो परिक्खदो वा (४०) ।

**शर्विलकः** । मदनिके भीते सुखे न शर्विलकः प्रहरति । तन्मया न कश्चिद्व्यापादितो नापि परिक्षतः ।

**मदनिका** । सच्चं सच्चं (४१) ।

**शर्विलकः** । सत्यम् ।

**वसन्तसेना** । संज्ञा लब्ध्वा । अम्महे पच्चुवजीविदम्हि (४२) ।

---

[विपादेत्यनुष्टुप् ।] अभुजिष्यात्वमनुपदोक्ता भुजिष्याशब्दार्थधर्मम् भार्यात्वपराधीनत्वं नीयमाना ॥ ८ ॥

मद०–(४०) साहसिक न खलु त्वया मम कारणादिदमकार्यं कुर्वता तस्मिन्गेहे कोपि व्यापादितो(तः) परिक्षतो वा ।

मद०–(४१) सत्यं सत्यम् ।

वस०–संज्ञां चेतनाम् । (४२) आश्चर्यं प्रत्युपजीवितास्मि । गतजीवितास्मीत्यर्थः(?) । यन्मित्रचारुदत्तगृहे शर्विलकेन कोपि न मारितः क्षतो वेति भावः ।

---

१ परत B (d) २ B नीयमाना भुजिष्या त्व J ३ After this word किमिदानीं च B (d). ४ करे० B B (a). ५ कोवि तत्त B B (a), कोभिवि B (d). ६ सर्च सत्तम् G. ७ सत्य सत्यम् A B (bc) E F G. ८ पच्चु° A B (cd) F G, पच्चुर्ण (ज्जी ?) h.

मदनिका। पिअं पिअं (४३)।

शर्विलकः। सेर्ष्यम्। मदनिके किं नाम प्रियमिति।

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्यं
सद्वृत्तपूर्वपुरुषेऽपि कुले प्रसूतः।
रक्षामि मन्मथविपन्नगुणोऽपि मानं
मित्रं च मां व्यपदिशस्यपरं च यासि ॥९॥

साकूतम्।

इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः।
निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥१०॥

---

मद०–(४३) प्रियं प्रियम्। वक्रोक्तिरियम्। विरोधलक्षणया प्रियमित्यर्थः। अत एवैतदुपरि शर्विलकस्य किं नाम प्रियमिति प्रश्नो(भो)पि संगच्छते। [त्वत्स्नेहेति।] वसन्ततिलका च्छन्दः। सद्वृत्ताः सदाचाराः पूर्वपुरुषाः पितृपितामहादयो यस्मिन्नीदृशे कुले प्रसूतोपि त्वय्यासक्तः करोमि चौर्यं तच त्वदर्थमेवेत्यर्थः। कामातुरोन्यस्य न रक्षति मानमहं तु कामातुरोपि रक्षामीत्याह। मन्मथेत्यादिना। देहमिति पाठे ध्वनिः। देहं स्त्रीयं रक्षामि कामपीडितोप्यहमिति वाच्यार्थः। परकीयमपि देहं रक्षामि नोचेदपहरेयमिति व्यङ्ग्यम्। शेषं सुगमम् ॥९॥

[इहेति।] अनुष्टुप्। कुलपुत्रा एव महाद्रुमाः। अत्र विशेषणविशेष्ययोः समस्तं सावयवरूपकमलंकारः ॥ १० ॥

---

१ om. A B B (abc) २ करोमि. ३ °ऽप मानं A B (c) D F G; प्रमानं B (b); नमानं E. ४ यासि. ५ फलिना K. ६ निःफलत्व K.

अयं च सुरतज्वालः कामाग्निः प्रणयेन्धनः ।
नराणां यत्र हूयन्ते यौवनानि धनानि च ॥ ११ ॥

वसन्तसेना । सस्मितम् । अहो से अत्थाणे आवेओ (४४)।

शर्विलकः । सर्वथा ।

अपण्डितास्ते पुरुषा मता मे
ये स्त्रीषु च श्रीषु च विश्वसन्ति ।
श्रियो हि कुर्वन्ति तथैव नार्यो
भुजंगकन्यापरिसर्पणानि ॥ १२ ॥

स्त्रीषु न रागः कार्यो रक्तं पुरुषं स्त्रियः परिभवन्ति ।
रक्तैव हि रन्तव्या विरक्तभावा तु हातव्या ॥ १३ ॥

---

[अयं चेति ।] अनुष्टुप् । अत्र विशेषणयोः समस्तं व्यस्तं विशेष्ये सावयवरूपकमलंकारः ॥ ११ ॥

वस०—(४४) अहोऽस्यास्थाने आवेशः । अस्थानेऽयोग्य आवेश इत्यर्थः । स्थाने इति योग्यार्थकमव्ययम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः ।

शर्वि०—कामप्रतिघाते क्रोधः शक्तस्य । अशक्तस्य तु विषाद इति शास्त्रात्क्रुद्धः शर्विलको वेश्याजनं निर्भर्त्स्य स्त्रीमात्रमिदानीं निर्भर्त्सयति । [अपण्डितास्ते इत्यादिपद्यपद्यैः ।]

[अपण्डितास्ते] इति । [उपजाति छन्दसा श्लोकः ।] भुजंगकन्या भुजंगी तद्वत्परिसर्पणानि त्वरितानि चलनानीत्यर्थः । [श्रियां स्त्रियां(स्त्रीणां) घातिचाञ्चल्यमिति तात्पर्यम् ॥ १२ ॥

[स्त्रीषु न रागः ।] इत्यार्याच्छन्दः ॥ १३ ॥

---

१ कामोग्निः A B (bcd) D E F K. २ °णेधन (?) B (d) ३ om B B (a) ४ तु A B (b) D I G ५ हातव्या B (b)

सुष्ठु खल्विदमुच्यते ।

एता हसन्ति च रुदन्ति च वित्तहेतो-
विश्वासयन्ति पुरुषं न तु विश्वसन्ति ।
तस्मान्नरेण कुलशीलसमन्वितेन
वेश्याः श्मशानसुमना इव वर्जनीयाः ॥ १४ ॥

अपि च ।

समुद्रवीचीव चलस्वभावाः
संध्याभ्रलेखेव मुहूर्तरागाः ।
स्त्रियो हृतार्थाः पुरुषं निरर्थं
निष्पीडितालक्तकवत्त्यजन्ति ॥ १५ ॥

स्त्रियो नाम चपलाः

अन्यं मनुष्यं हृदयेन कृत्वा
अन्यं ततो दृष्टिभिराह्वयन्ति ।
अन्यत्र मुञ्चन्ति मदप्रसेक-
मन्यं शरीरेण च कामयन्ते ॥ १६ ॥

---

स्त्रीजनं निन्दन्नेव विशिष्य वेश्यां(श्या) निन्दति । [एता इति ।] [वसन्ततिलकाछन्दः] श्मशानसुमना इति । सुमनसः पुष्पवृत्तेरेकवचनान्ततापीति बोध्यम् । 'अपत्याख्येये दधिसुमनसी' इति प्राचीनप्रयोगात् । अथवा 'सुमना मालती जातिः' इत्यमरोक्तपक्षेपि । सतामनुद्वेजकत्वाददुष्टत्वमुपमाया इत्याकलनीयम् ॥१४॥ [समुद्रेति ।] [उपजातिछन्दः] । स्पष्टम् ॥ १५ ॥

चपलाश्चञ्चला विद्युतश्च । चपला इव चपलाः स्त्रियः इति व्यङ्ग्योपमा । 'तडित्सौदामिनी विद्युच्चञ्चला चपला अपि' इत्यमरः ।[अन्यं

---

१ वित्त ? G. २ न च B B (ad) K. ३ ०श्मशान K. ४ °वीचीव B (a)· ५ हि om. B (b) ; हितार्थो- B (d) E. ६ निर्पीडिता० D H, नि-पीडिता K. ७ स्त्रियो हि G. ८ हृदयेन A. ९ त्वन्यं ? H. १० °ह्वयन्त्यः D, H.

सूक्तं खलु कस्यापि ।

न पर्वताग्रे नलिनी प्ररोहति
न गर्दभा वाजिधुरं वहन्ति ।
यवाः प्रकीर्णा न भवन्ति शालयो
न वेशजाताः शुचयस्तथाङ्गनाः ॥ १७ ॥

आः दुरात्मंश्चारुदत्तहतक अयं न भवसि । इति कतिचित् पदानि गच्छति ।

मदनिका । अञ्चले गृहीत्वा । अइ असंबद्धभासअ असंभावणीए कुप्पसि (४५) ।

शर्विलकः । कथमसंभावनीयं नाम ।

मदनिका । एसो क्खु अलकारओ अज्जआकेरओ (४६)।

शर्विलकः । ततः किम् ।

---

मनुष्यमिति ।] सुगमतमम् [इन्द्रवज्राछन्दः]॥ १६ ॥ [न पर्वताग्र इति ।] स्पष्टतर पद्य प्राचीनम् । अत एवोक्तं सूक्त कस्यापीति । [विलक्षणमिद छन्दः । प्रथमपादे द्वादशाक्षराणि । द्वितीये एकादशाक्षराणि च सन्ति । प्रथमपादे 'ज त ज भ' एते गणा लभ्यन्ते । द्वितीये तु 'ज त ज ग ल' एते गणा लभ्यन्ते । उत्तरार्धेतु वंशस्थं छन्दः] ॥१७॥

आः दुरात्मन् चारुदत्तहतक अयं न 'भवसीत्यनेनाधुनैव हन्मि' चारुदत्तमिति व्यङ्ग्यम् ।

मद०–(४५) अयि(यि)असबद्धभाषक असंभावनीयं(ये)कुप्यसि।

मद०–(४६) एष खल्वलंकारोऽज्जआकेरओ आर्यायाः । वसन्तसेनाया इत्यर्थः । केरओ इति केवलं पदी । यद्वार्यीकृत इत्यर्थ ।

---

१ °मातः B (d) २ °दत्त हतक B ३ om A B (c) D ४ ददाति BB (abcd) C D F F G. ५ अपि D H ६ °भास E. ७ तु A ८ अ तं• H ९ अज्जआ केर० C J.

**मदनिका** । स च तस्स अज्जस्स हत्थे विणिक्खित्तो (४७) ।

**शर्विलकः** । किमर्थम् ।

**मदनिका** । कर्णे । एव्वं विअ (४८) ।

**शर्विलकः** । सवैलक्ष्यम् । भोः कष्टम् ।

छायार्थी ग्रीष्मसंतप्तो यामेवाहं समाश्रितः ।
अजानता मया सैव पत्रैः शाखा वियोजिता ॥ १८ ॥

**वसन्तसेना** । कधं एसोवि संतप्पादि ज्जेव । ता अआणन्तेण एदिणा एव्वं अणुचिट्ठिदं (४९) ।

**शर्विलकः** । मदनिके किमिदानीं युक्तम् ।

**मदनिका** । एत्थ तुमं ज्जेव्व पण्डिओ (५०) ।

**शर्विलकः** । नैवम् । पश्य ।

स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः ।
पुरुषाणां तु पाण्डित्यं शास्त्रैरेवोपदिश्यते ॥ १९ ॥

---

मद०–(४७) स च तस्यार्यस्य हस्ते विनिक्षिप्तः । स चालंकारश्च । आर्यस्य चारुदत्तस्य ।

मद०–(४८) एव - इ(मि)व । चारुदत्तस्याकिंचनतया भोगस्य भूरिधनसाध्यत्वादयमलंकारो न्यासमिषेण तस्य हस्ते विनिक्षिप्त इति संकेतार्थः । अप्रस्तुतवृत्तान्तेन प्रस्तुतवृत्तान्तमुपपादयन्नाह । [छायार्थीति] श्लोकः । यां शाखाम् । अप्रस्तुतप्रशंसालंकारः ॥ १८ ॥

वस०–(४९) कथमेषोपि संतप्यत एव । तदजानतैतेनैवमनुष्ठितम् ।

मद०–(५०) अत्र त्वमेव पण्डितः । [स्त्रियो हीति ।] अनुष्टुप् ॥ १९ ॥

---

१ निक्खित्तो D. २ छायार्थे A B (c) C D J. ३ कथं B (a). ४ अआणन्त° B (a). ५ एव्वमणु° D, चिट्ठिदं B (a). ६ शास्त्रैरे° BB (a).

**मदनिका ।** सेव्विलअ जइ मम वअणं सुणीअदि ता तस्स ज्जेव्व महाणुभावस्स पडिणिज्जादेहि (५१) ।

**शर्विलकः ।** मदनिके यद्यसौ राजकुले मां कथयति ।

**मदनिका ।** ण चन्दादो आदवो होदि (५२) ।

**वसन्तसेना ।** साहु मदणिए साहु (५३) ।

---

मद०–(५१) शर्विलक यदि मम वचनं श्रूयते तत्तस्यैव महानुभावस्य पडिणिज्जादेहि । प्रतिनिर्यातयेत्यर्थः । परावृत्य गत्वा चारुदत्ताय प्रतिदेहीत्यर्थः । महानुभावस्येति संबन्धसामान्ये षष्ठी । महानुभावाय चारुदत्तायेत्यर्थः । यदि मम वचनं श्रूयत इत्यनेन निजवचनस्यावश्योपादेयत्वं व्यज्यते । इदं च 'त्वामस्मि' इत्युदाहरणे काव्यप्रकाशे स्पष्टम् । अन्यथा येन यदुच्यते तदन्येन श्रूयत इति लोकरीतेर्यदि मम वचनं श्रूयत इति कथनं व्यर्थमेवेति ध्येयम् ।

शर्वि०–असौ चारुदत्तो राजकुले राजगृहेऽधिकरणे न्यायस्थल इत्यर्थः ।

मद०– (५२) न चन्द्रादातपो भवति । आतपः संतापः । यद्यपि प्रकाशमात्रवाचक आतपशब्दश्चन्द्रातप इत्यादि(दि) प्रयोगदर्शनात् । 'छाया त्वनातपे' इत्यमरकोशाद्य तथापि प्रकृते केवलमुष्णपरत्वं वक्तृतात्पर्यादुन्नीयते ।

वस०–(५३) साधु मदनिके साधु ।

---

१ सेव्विलअ K. २ सुणीअा० B ३ कथयिष्यति BB (a) pr. m. कथयति co. (?) ष्यति. B (d) ४ मर्षागय B. E.

शर्विलकः । मदनिके

न खलु मम विषादः साहसेऽस्मिन्भयं वा
कथयसि हि किमर्थं तस्य साधोर्गुणांस्त्वम् ।
जनयति मम वेदं कुत्सितं कर्म लज्जां
नृपतिरिह शठानां मादृशां किं नु कुर्यात् ॥२०॥

तथापि नीतिविरुद्धमेतत् । अन्य उपायश्चिन्त्यताम् ।

मदनिका । सो अअं अवरो उवाओ (९४) ।

वसन्तसेना । को क्खु अवरो उवाओ हुविस्सदि (९५) ।

मदनिका । तस्स ज्जेव अज्जस्स केरओ भविअ एदं अलंकारअं अज्जआए उवणेहि (९६) ।

शर्विलकः । एवं कृते किं भवति ।

---

शर्वि०–[न खलु ममेति ।] मालिनी छन्दः । साहसे चौर्ये । तस्य चारुदत्तस्य । राजदण्डं स्मृत्वा माह नृपतिरिहेति ॥ २० ॥ अन्यथाऽऽरदत्तमति(दा)नभिज्ञः ।

मद०–(९४) सोयमपर उपायः ।

वस०–(९५) कः खल्वपर उपायो भविष्यति ।

मद०–(९६) तस्यैवार्यस्य । केरकः कृतः । तेन प्रेषित इत्यर्थः । भूत्वैतमलंकारमार्याया उपनय । प्रापयेत्यर्थः । तस्य चारुदत्तस्य । आर्यायै वसन्तसेनायै ।

---

१ साहसो० B (b). २ गुणास्तम् A B (c) F. ३ खेदं II B (abd) E. ४ किंत्र B (d) ५ नीति......तत् om: B (f) D E; नीतिविरुद्धमे० B (a). ६ मेतदन्य० B. ७ एसो अअं B B (a). ८ उआओ B (a). ९ उआओ B (a). १० होविस्सदि H. ११ केरओ BDEK. १२ हुविअ B (a).

मदनिका । तुमं दाव अचोगे । सो वि अज्जो अरिणो । अज्जआए सके अलंकारअं उवगदं भोदि (५७) ।

शर्विलकः । नन्वतिसाहसमेतत् ।

मदनिका । अइ उवणेहि । अण्णधा अदिसाहसं (५८) ।

वसन्तसेना । साहु मदणिए साहु । अभुजिस्साए विअ मन्तिदं (५९) ।

शर्विलकः ।

मयाप्ता महती बुद्धिर्भवतीमनुगच्छता ।
निशायां नष्टचन्द्रायां दुर्लभो मार्गदर्शकः ॥२१॥

मदनिका । तेण तुमं इमस्सिं कामदेवगेहे मुहुत्तअं चिट्ठ, जाव अज्जआए तुह आगमणं णिवेदेमि (६०) ।

---

मद०–(५७) त्वं तावदचोरः । सोऽप्यार्योऽनृणः । आर्यया स्वकोऽलंकार उपगतो भवति । प्राप्त इत्यर्थः ।

मद०–(५८) अपि(यि) उपनय । अन्यथातिसाहसम् ।

वस०–(५९) साधु मदनिके साधु । अभुजिष्ययेव मन्त्रितम् यथा कलत्रं मन्त्रयति तथा मन्त्रितमित्यर्थः । एतावत्पर्यन्तमि गवाक्षनिषण्णया वसन्तसेना(न)या श्रुतमनूदितं स्वगतमिति ज्ञेयम् [मयेति।] अनुष्टुप् ॥ २१ ॥

मद०–(६०) तेन त्वमस्मिन्कामदेवगेहे मुहूर्तं तिष्ठ यावदार्यायै तवागमनं निवेदयामि ।

---

१ ति B (d). २ अहं? A B (c) F. ३ अरिणो E. ४ आगद B (d). ५ ण्हुद B (d) ६ मअ° B (ad). ७ मामद० AB (c) D F. ८ तेण वि F B (ad) CJ. ९ मुहुत्त D. १० तुहागमण AB (bc) D, तवाग० B (d).

शर्विलकः। एवं भवतु।

मदनिका। उपसृत्य। अज्जए एसो क्खु चारुदत्तस्स सआसादो बम्हणो आअदो (६१)।

वसन्तसेना। हञ्जे तस्स केरओत्ति कधं तुमं जाणासि (६२)।

मदनिका। अज्जए अत्तकेरअं पि ण जाणामि (६३)।

वसन्तसेना। स्वगतं सशिरःकम्पं विहस्य। जुज्जदि जुज्जदि। प्रकाशम्। पविसदु (६४)।

मदनिका। जं अज्जआ आणवेदि। उपगम्य। पविसदु सव्विलओ (६५)।

शर्विलकः। उपसृत्य सवैलक्ष्यम्। स्वस्ति भवत्यै।

वसन्तसेना। अज्ज वन्दामि। समाविसदु अज्जो (६६)।

---

मद०–(६१) आर्ये एष खलु चारुदत्तस्य सकाशाद्ब्राह्मण आगतः।

वस०–(६२) हञ्जे तस्य कृत (?) इति कथं त्वं जानासि।

मद०–(६३) आर्ये आत्मनोर्थमपि (?) न जानामि।

वस०–(६४) युज्यते युज्यते। प्रविशतु।

मद०–(६५) यदार्याज्ञापयति। प्रविशतु शर्विलकः।

वस०–(६६) आर्ये(र्य) वन्दे। समाविशत्वार्यः।

---

१ अज्जअ्(द्?) BB (a). २ केरअं त्ति AB (c) DFJ. ३ वि AB (abcd) D, पि EK. ४ आणामि B B(a). ५ om. BCDK; जुज्जदि जुज्जदि AB (c). ६ अज्जा D H ७ om. AB (bcd) DEG.

शर्विलकः । सार्थवाहस्त्वां विज्ञापयति जर्जरत्वाद्गृहस्य दूरेक्ष्यमिदं भाण्डम्। तद्गृह्यताम् । इति मदनिकायाः समर्प्य प्रस्थितः ।

वसन्तसेना । अज्ज ममावि दाव पडिसंदेसं ताहिं अज्जो णेदु (६७)।

शर्विलकः । स्वगतम् । कस्तत्र यास्यति । प्रकाशम्। कः प्रतिसंदेशः ।

वसन्तसेना । पडिच्छदु अज्जो मदणिअं (६८) ।

शर्विलकः । भवति न खल्ववगच्छामि ।

वसन्तसेना । अहं अवगच्छामि।

शर्विलकः । कथमिव ।

वसन्तसेना । अहं अज्जचारुदत्तेण भणिदा । जो इमं अलंकारअं समप्पइस्सदि, तस्स तुए मदणिआ दादव्वा । ता सो ज्जेव एदं दे देदित्ति एव्वं अज्जेण अवगच्छिदव्वं (६९)।

वस०–(६७) आर्य ममापि तावत्प्रतिसंदेशं तत्रार्यो नयतु ।

वस०–(६८) प्रतीच्छत्वार्यो मदनिकाम् ।

शर्वि०–भवतीति संबोधनम् ।

वस०–(६९) अहमार्यचारुदत्तेन भणिता । य इममलंकारं सम-

१ दूरस्थ॰ AB (c) F, दुस्थ॰ D H. २ णेदु अज्जो BB (n). ३ अहमा॰ BD. ४ ॰णिआदव्वा B (a). ५ देदिवि AB (c), दे om. BDEGK; एदं देदि H. ६ एव्व B (b); एव्ड E. ७ ॰णिच्छदव्वं AB (c) F, ॰गच्छइदव्वं B (a); ॰गच्छिदव्वं B (b), ॰गैदव्वं D, मतव्य H.

**शर्विलकः ।** स्वगतम् । अये विज्ञातोऽहमनया । प्रकाशम् । साधु आर्यचारुदत्त साधु ।

गुणेष्वेव हि कर्त्तव्यः प्रयत्नः पुरुषैः सदा ।
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ २२ ॥

अपि च ।

गुणेषु यत्नः पुरुषेण कार्यो
न किंचिदप्राप्यतमं गुणानाम् ।
गुणप्रकर्षादुडुपेन शंभो-
रलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥ २३ ॥

**वसन्तसेना ।** को एत्थ पवहणिओ (७०) ।

प्रविश्य सप्रवहणः

**चेटः ।** अज्जए सज्जं पवहणं (७१) ।

---

पयिष्यति, तस्य त्वया मदनिका दातव्या । तस्य एवैतां ते ददातीत्येवमार्येणावगन्तव्यम् ।

[ गुणेष्वेवेति ।] अनुष्टुप् ॥ २२ ॥ इममेवार्थं भङ्ग्यन्तरेणाह । [गुणेषु यत्न इति ।] [उपेन्द्रवज्राच्छन्दः] ॥ २३ ॥

वस०–(७०) कोत्र प्रवहणिकः । प्रवहणं कर्णीरथ(थं) वहतीति प्रवहणिकः सारथिरित्यर्थः ।

चेटः–(७१) आर्ये सज्जं प्रवहणम् ।

---

१ om. BB (a), अए K. २ साध्वार्य B ; आर्य om. A B (bcd) DE; साधु चारुदत्त२ G. ३ गुणायुक्तो B (d). ४ °प्रकोरलंघितं लङ्घितमुत्तमाङ्गं AB (c) DF ; रलंघितमुत्तमाङ्गं B (b). ५ सज्ज H.

वसन्तसेना । हञ्जे मअणिए सुदिट्टं मं करेहि । दिण्णासि । आरुह पवहणं । सुमरेसि मं (७२) ।

मदनिका । रुदती । परिचिअम्हि अज्जआए (७३) ।

इति पादयोः पतति ।

वसन्तसेना । संपदं तुमं ज्जेव वन्दणीआ संवुत्ता । ता गच्छ । आरुह पवहणं । सुमरेसि मं (७४) ।

शर्विलकः । स्वस्ति भवत्यै । मदनिके

सुदृष्टः क्रियतामेष शिरसा वन्द्यतां जनः ।
यत्र ते दुर्लभं प्राप्तं वधूशब्दावगुण्ठनम् ॥ २४ ॥

इति मदनिकया सह प्रवहणमारुह्य गन्तुं प्रवृत्तः ।

---

वस०–(७२) हञ्जे मा(म)दनिके सुदृष्टां मां कुरु । दत्तासि । आरोह प्रवहणम् । स्मरसि माम् । स्मरिष्यसीत्यर्थः ।

मद०–(७३) परिच्युतास्म्यार्यायाः । इयं पञ्चमी ।

वस०–(७४) सांप्रतं त्वमेव वन्दनीया संवृत्ता । तद्गच्छ । आरोह प्रवहणम् । स्मरसि माम् ॥ (सांप्रतं त्वमेव वन्दनीया जातेत्युत्तरं वसन्तसेनया मदनिकाकृतपादपतनस्य दत्तमित्यवधातव्यम् । तवेदानीमभुजिष्यात्वेन वधूत्वं प्राप्तम् । अस्माकं तु कोटिपतित्वे ऐश्वर्येकनायकत्वेऽपि वेश्यापदवाच्यतैवेति भावः [सुदृष्ट इति ।] अनुष्टुप् । वधूशब्दवाच्यत्वरूपमवगुण्ठनम् । अन्यानवलोकनीयत्वात् । अन्यानवलोकनरूपमसूर्यंपश्या राजदारा इत्यादिसदृशमित्यर्थः ॥ २४ ॥

---

१ सुदिट्ठं AB (c); °दिट्ठे B (a). २ करेहि मं B B (a). ३ दिण्णसि A[B] (bc); दिण्णासि=दअम्हि B (c) ४ पवहणं B. ५ रुदन्ती B B (ad). ६ परिच्चअम्हि=°च्युतास्मि (आर्यायाः) AB(c) also F; परिच्चत्त° J; परित्यक्तास्मि B, परिच्च° K. ७ सुमरसि B. ८ भवत्यै मदनिके B. ९ °दृष्टः B (d); °दृष्टः B.

नेपथ्ये। कः कोऽत्र भोः। राष्ट्रियः समाज्ञापयति। एष खल्वार्यको गोपालदारको राजा भविष्यतीति सिद्धादेशप्रत्ययपरित्रस्तेन पालकेन राज्ञा घोषादानीय घोरे बन्धनागारे बद्धः। ततः स्वेषु स्वेषु स्थानेष्वप्रमत्तैर्भवद्भिर्भवितव्यम्।

शर्विलकः। आकर्ण्य। कथं राज्ञा पालकेन प्रियसुहृदार्यको मे बद्धः। कलत्रवांश्चास्मि संवृत्तः। आः कष्टम्। अथवा

इयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च।
संप्रति तु सुन्दरीणां शतादपि सुहृद्विशिष्टतमः॥ २९॥

भवतु। अवतरामि। इत्यवतरति।

मदनिका। साञ्जलिं बद्धा। एव्वं णेदं। ता परं णेदु मं अज्जउत्तो समीवं गुरुअणाणं (७९)।

शर्विलकः। साधु प्रिये साधु। अस्मच्चित्तसदृशमभिहितम्। चेटमुद्दिश्य। भैद्र जानीषे रेभिलस्य सार्थवाहस्योदवसितम्।

---

[इयमिदमतीवेति।] आर्याच्छन्दः॥ २९॥

मद०–(७९) एवं नेद(मिदम्।) तत् परं नयतु मामार्यपुत्रः समीपं गुरुजनानाम्।

शर्वि०–उदवसितं गृहम्।

---

१ °दारको D. २ °देश॰ प्रत्ययपरत्रस्तेन B. ३ राज्ञा पालकेन. B. ४ °दानीयघोर इव KB (a). ५ स्थित. AB (bcd) CD. ६ om. B (d). ७ अप्रमत्तमत्तै॰? AB (c) F; अप्रमत्तै B (d). ८ चास्मि AB (c). ९ om. AB (bcd) DEFK. १० °वत्त्वत्र° BCD. ११ अञ्जलिं बद्धा om. E. १२ °अणाणं A. १३ सदृशमभिहितम् B. १४ अपि B; अए B (a) K. १५ जानीषे H. १६ °हस्य गृहम् B H (a).

चेटः । अध इं (७६) ।

शार्विलकः । तत्र प्रापय प्रियाम् ।

चेटः । जं अज्जो आणवेदि (७७) ।

मदनिका । जधा अज्जउत्तो भणादि । अप्पमत्तेण दाव अज्जउत्तेण होदव्वं (७८) । इति निष्क्रान्ता ।

शार्विलकः । अहमिदानीम्

ज्ञातीन्विटान्स्वभुजविक्रमलब्धवर्णा-
न्राजापमानकुपितांश्च नरेन्द्रभृत्यान् ।
उत्तेजयामि सुहृदः परिमोक्षणाय
यौगन्धरायण इवोदयनस्य राज्ञः ॥ २६ ॥

अपि च ।

प्रियसुहृदमकारणे गृहीतं
रिपुभिरसाधुभिराहितात्मशङ्कैः ।

चेटः–(७६) अथ किम् ।

चेटः–(७७) यदार्य आज्ञापयति ।

मद०–(७८) यथार्यपुत्रो भणति । अप्रमत्तेन तावदार्यपुत्रेण भवितव्यम् ।

शार्वि०–[ज्ञातीनिति।] वसन्ततिलका छन्दः । सुहृद आर्यकस्याभीरस्य । चतुर्थचरणदृष्टान्तकथा बृहत्कथायामालोकनीया श्लोकार्थो नीतिरूप इति ज्ञेयम् ॥ २६ ॥

१ नियतमाम् BB (a). २ निष्क्रान्ता K. ३ °धरामदान् DE. ४ थागन्ध° DE

सरभसमभिपत्य मोचयामि
स्थितमिव राहुमुखे शशाङ्कबिम्बम् ॥ २७ ॥

इति निष्क्रान्तः ।

प्रविश्य ।

चेटी । अज्जए दिट्ठिआ वड्ढसि । अज्जचारुदत्तस्स सआसादो बम्हणो आअदो (७९) ।

वसन्तसेना । अहो रमणीअदा अज्जं दिवसस्स । ता हञ्जे सादरं बन्धुलेण समं पवेसेहि णं (८०)

चेटी । जं अज्जआ आणवेदि (८१) । इति निष्क्रान्ता ।

विदूषको बन्धुलेन सह प्रविष्टः ।

---

[प्रियेति ।] पुष्पिताग्राच्छन्दः । प्रियसुहृदमार्यकम् ॥ २७ ॥

चेटी–(७९) आर्ये दिष्ट्या वर्धसे । आर्यचारुदत्तस्य सकाशाद्ब्राह्मण आगतः ।

वस०–(८०) अहो रमणीयताद्य दिवसस्य । तद्धञ्जे सादरं बन्धुलेन समं प्रवेशयैनम् ।

चेटी–(८१) यदार्याज्ञापयति । बन्धुला अत्रैवाङ्के वक्ष्यमाणलक्षणा बोध्याः । विदूषकोऽयं मैत्रेय एव रत्नावला(लीं) दातुमागत इति स्मत्तर्व्य(र्तव्य)म् ।

---

१ °मभिपत्य G. २ वड्ढसे B (a). ३ अज्ज om. B (a). ४ °दत्तसआसादो B (b) E. ५ रमणीअदा D. ६ अज्जदिवसस्स B. ७ बन्धुलेण B (ad) K. ८ पवेसेहि DFH. ९ प्रविश्य B (a).

विदूषकः । ही ही भोः । तवचरणकिलेसविणिज्जिदेण रक्खसराओ रावणो पुप्फकेण विमाणेण गच्छदि । अहं उण बम्हणो अकिदतवचरणकिलेसो वि णअरणारीजणेण गच्छामि (८२) ।

चेटी । पेक्खदु अज्जो अम्हकेरकं गेहदुआरं (८३) ।

विदूषकः । अवलोक्य सविस्मयम् । अहो सलिलसित्तमज्जिदकिदहरिदोवलेवणस्स, विविहसुअंधकुसुमोवहारचित्तलिदभूमिआभाअस्स, गअणतलालोअणकोदूहलदूरुण्णामिद-

---

विदू०–(८२) ही ही भोः इत्याश्चर्येऽव्ययम् । तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावणः पुष्पकेण(ग) विमानेन गच्छति । अहं पुनर्ब्राह्मणोऽकृततपश्चरणक्लेशोऽपि नगरनारीजनेन गच्छामि । तपश्चरणेत्यादिना पुष्पकस्य स्वाधीनत्वं ध्वन्यते । नगरनारीजनेन वेश्याजनेन सह गच्छामीत्यर्थः । इदं सर्वं विदूषकत्वादुपहसतीति बोध्यम् ।

चेटी–(८३) प्रेक्षतामार्योऽस्माकं कृतं गेहद्वारम् ।

विदू०–(८४) अहो सलिलसिक्तमार्जितकृतहरितोपलेपनस्य, कृतगोमयोपलेपनस्येत्यर्थः । विविधसुगन्धकुसुमोपहारचित्रितभूमिकाभागस्य, गगनतलालोकनकौतूहलदूरोन्नामितशीर्षस्य, उच्छ्रायप्रकर्ष-

---

१ भो B २ °राओ D H ३ रावणा D H ४ अ र किद? G ५ णअरणारी K ६ अजणा B (b) M ७ °केरके AB (bc) F ८ °दुआरअं B B (a) ९ विलेवण B B (a) १० °मज्जिद K ११ °किरिद° F (a) ; किदरिदोव B (b) १२ विविध B B (d) १३ सुअंधि DH १४ सअं om सअंकुसुमपिञ्ज° B १५ चित्तलिद=चित्रलिखित Com K, चित्तलिद F H १६ भूमिभाअअ B (a) भूमिभाअस्स J, भूमाअस्स K १७ कोदूहल B (bd) १८ दुरुण्णमिद AB (c), दुरुण्णामिद B (ab1), दूरुण्णमिद D H

सीसस्स, दोलाअमाणोवलंबिदेरावणहत्थब्भमाइदमल्लिआदामगुणालंकिदस्स, समुच्छिददन्तिदन्ततोरणावभासिदस्स, महारअणोवराअसोहिणा पवणबलंदोलणाललन्तचञ्चलग्गहत्थेण इदो एहित्ति वाहरन्तेण विअ मं सोहग्गपडाआणिवहेणोवसोहिदस्स, तोरणधरणत्थंभवेदिआणिक्खित्तसमुल्लसन्तहरिदचूदपल्लवललामफलिहमङ्गलकलसाभिरामोहअपासस्स, महासुरवक्खत्थलदुब्भेज्जवज्जणिरन्तरपडिबद्धकणअकवाडस्स,

---

दोलायमानावलम्बितैरावणहस्तभ्रमायितमल्लिकादामगुणालंकृतस्य, समुच्छ्रितदन्तिदन्ततोरणावभासितस्य, महारा(र)त्नोपरागोपशोभिना। महारजनं-कुसुम्भम्। महारत्नोपरागोपशोभिनेति वा। पवनबलान्दोलनाललच्चञ्चलाग्रहस्तेन प्रबलस्य बलेन वेगेनान्दोलना कम्पस्तया ललच्चलदत एव चञ्चलं हस्ताग्रं यस्य तेनेत्यर्थः। इत एहीति व्याहरतेव मां सौभाग्यपताकानिवहेनोपशोभितस्य, तोरणधरणस्तम्भवेदिकानिक्षिप्तसमुल्लसद्धरितचूतपल्लवललामस्फटिकमङ्गलकलशाभिरामोभयपार्श्वस्य, महासुरवक्षःस्थलदुर्भेद्यवज्रनिरन्तरप्रति-

---

१ दोलाय° ABK. २ °वलंबिदे F. ३ देरावण BDH. ४ भ्रमाविद B; भमाभद B (bd) ?G, धमाभद E; भ्रमाभद K. ५ °लङ्कदस्स K. ६ समुद्दद-न्ति° A; °द्द? C. E; समुत्तददन्ति ? B (b); समुच्छिद H. ७ राग AB (c) DE; राओवसोहिणा K. ८ पवण......लणा. om. B (a); पवल D. ९ चंचलाग्ग° K. १० इदो इदो B(d). ११ °हेणो ज्जव ? B (b). १२ धे.रण° F. १३ ध्धरण AB (c); धरणा B (a); ध्धरण B (b); द्धरण F. १४ थंभ H B (a) CDEFG; थंभ K. १५ फलिह BCDFGK. १६ कदस ? B (a); कलसाराभो G. १७ इव B (a). १८ वासस्स B B (a); वास्सस्स C; पासस्स DH; वासस्स EFGK. १९ णिब्भेज्ज B (a), दुज्जेश्वरज्ज वलवडम° K.

दुग्गदजणमणोरहाआसकरस्स, वसन्तसेणाभवणदुआरस्स सस्सिरीअदा । जं सच्चं मज्झत्थस्स वि जणस्स बलाहिट्टिं आआरेदि (८४) ।

चेटी । एदु एदु इमं पढमं पओट्ठं पविसदु अज्जो (८५)।

विदूषकः । प्रविश्यावलोक्य च । ही ही भोः । इधे वि पढमे पओट्ठे, ससिसङ्खमुणालसच्छाहाओ, विणिहिदचुण्णमुट्ठिपण्डुराओ, विविहरअणपडिबद्धकञ्चणसोवाणसोहिदाओ,

---

बद्धकनककपाटस्य, दुर्गतजनमनोरथायाप(या)सकरस्य, वसन्तसेनाभवनद्वारस्य सश्रीकता । यत्सत्यं मध्यस्थस्यापि जनस्य बलाद्दृष्टिमाकारयति । मध्यस्थस्योदासीनस्य । रागे(ग)द्वेषशून्यस्येत्यर्थः । मित्रशत्रुमध्यस्यात्मकं जगत् । तत्र मध्यस्थः क्वापि न प्रवर्तत इति बोध्यम् । एवं सुन्दरं द्वारं यन्मध्यस्थस्यापि मनोहारि किं पुनर्वाच्यगन्यस्येतीति भावः । इति द्वारवर्णनम् ।

चेटी—(८५) एतु एत्विमं प्रथमं प्रकोष्ठं प्रविशत्वार्यः ।

विदू०—(८६) शशिशङ्खमृणालसच्छाया निनिहितचूर्णमुष्टिपाण्डुरा विविधरत्नप्रतिबद्धकाञ्चनसोपानशोभिताः प्रासादपङ्क्तयः । भ-

---

१ दुग्गअ BCDEGK. २ °यत E. ३ °आरस्स CDEK. ४ मुत्र B (a) ५ दुआरआस्स B B (२). ६ सस्सिरिअदा H. ७ मज्ज° AB (bc), मज्झ H ८ बला हिट्टिं B (हिट्टिं B (a). ९ एदु एदु om. B B (a) K; एद इमं B (हिं एदु इमं E. १० पढुमं G. ११ अवलोक्य च om. B B (ad) K. १२ भो F. १३ इध ...ओट्ठे om. B B (ad). १४ सच्छाओ AB (c), सच्छाआओ B (c). सुच्छाआओ B (b). सच्छाओ B (d) E, सच्छाहो F, सच्छाआओ G, सच्छाओ K. १५ मुट्ठि B (d). १६ पण्डुराओ BCEK, पण्डराओ D.

पासादवेन्तिओ, ओलम्बिदमुत्तादामेहिं फलिहवादाअणमुहचन्देहिं णिज्झाअन्ती विअ उज्जइणिं । सोत्तिओ विअ सुहोवविट्ठो णिद्दाअदि दोवारिओ । सदहिणा कलमोदणेण पलोहिदा ण भक्खन्ति वाअसा वलिं सुधासवण्णदाए । आदेसेदु भोदी (८६) ।

चेटी । एदु एदु अज्जो । इमं दुदिअं पओट्ठं पविसदु अज्जो (८७) ।

विदूषकः । प्रविश्यावलोक्य च । ही ही भोः । इध वि दुदिए पओट्ठे पज्जन्तोवणीदजवसवुसकवलसुपुट्ठा तेल्लभ-

वलम्बितमुक्तादामभिः स्फटिकवातायनमुखचन्द्रैर्निर्ध्यायन्तीवा(घो)-ज्जयिनीम् । निर्ध्यायन्ति पश्यन्तीत्यर्थः । श्रोत्रिय इव सुखोपविष्टो निद्राति दौवारिकः । सदध्ना कलमोदनेन प्रलोभिता न भक्षयन्ति वायसा वलिं सुधासवर्णतया । सुधा चूर्णम् । 'सुधा लेपो मृतं स्नुहि' इत्यमरः । आदिशतु भवती ।

चेटी—(८७) एतु एत्वार्यः । इमं द्वितीयं प्रकोष्ठं प्रविशत्वार्यः ।

विदू०—(८८) इहापि द्वितीयस्मिन्प्रकोष्ठे । पर्यन्तोपनीतयवसबुसकवलसुपुटा घृताभ्यक्तविषाणा बद्धाः प्रवहणबलीवर्दाः । 'प्रव-

१ °वन्तीओ B, पासा... ओओ om. H (d); पन्विओ D; पंक्तिओ F २ फलिह° BCDFGK. ३ °अन्देहिं BDE, °हि K; मुहुअ° B (d). ४ णिज्झाअन्ती AB (c) G; णिज्झाअन्ति B (b) EF. ५ णिद्दाअदि सुहो &c B (a), सदाहिणा B (a); संदणा B (b); सदहिण ? H. ६ कलमोदणेण (=कलमोदकेन) AB (c) F; कलमोदपण (=कलमोदकेन ?) DH, कदमोदणेण K. ७ भक्खन्ति AB (bc) E. ८ वाअसा BCD. ९ सुदासवण्णदाए B (a). १० इमंपि B (d), इमंपि K. ११ दुदियपदं तुं K. १२ पविस्य दृष्ट्वा च H. १३ भो H. १४ दुदियपओट्ठे AB (c). १५ °वगद B (d). १६ बुसकवलसु &c. G, बुसकवलण K. १७ सुपुट्ठा or ट्ठा ? F.

ण्णिदाविसाणा वद्धा पवहेणवइल्ला । अअं अण्णदरो अवमाणिदो विअ कुलीणो दीहं णीससदि सेरिहो । इदो अ अवणीदजुज्झस्स मल्लस्स विअ मद्दीअदि गीवा मेसस्स । इदो इदो अवराणं अस्साणं केसकप्पणा करीअदि । अअं अवरो पाडच्चरो विअ दढबद्धो मन्दुराए साहामिओ । (अन्यतोऽवलोक्य ।) इदो अ कूरघुअतेल्लमिस्सं पिण्डं हत्थी पडिच्छावीअदि मेत्तपुरिसेहिं । आदेसेदु भोदी (८८) ।

---

सं तृणमर्जुनम्' इत्यमरः । अयमन्यतरोऽपमानित इव कुलीनो दीर्घं निःश्वसिति सैरिभो महिषः । इतश्चापनीतयुद्धस्य मल्लस्येव गृह्यते ग्रीवा मेषस्य । इत इतोऽपरेषामश्वानां केशकल्पना क्रियते । 'कल्पना सज्जना समे' इति कोशः । संस्कारैः केशप्रसाधनमित्यर्थः । अयमपरः पाटचर इव दृढबद्धो मन्दुरायां शाखामृगः । पाटचरश्चौरः । 'वाजिशाला तु मन्दुरा' इत्यमरः । शाखामृगो वानरः । इतश्च भक्तघृतमिश्रं पिण्डं [हस्ती] पडिच्छावीअदि प्रतिग्राह्यत इत्यर्थः । मात्रपुरुषैः । कूरेति भक्तेत्यर्थः । तेल्लेति घृतेत्यर्थः । मात्रेति महामात्रेत्यर्थः । हस्तिपकैरित्यर्थः । आदिशतु भवती ।

---

१ विसाणबद्धा AB (c) D. २ पवहणा H (a); पवहण del च B (d) ३ कुलिणो AB (c) F. ४ सेरिहो B (ad) ५ जुज्जस्स AB (bc) EFG. ६ मल्लविअ B (a) ७ गीवा D. ८ अअ च K. ९ दढ बद्धो B (a) K, दिढबद्धो H १० °मिअओ AB (bc) D ११ om. BEK. १२ कूरन्धिअ B, कूलन्धिअ B (a), कूरधिअ B (b), कूरधिअ॰ ॰धिअ B (d); कुरडिअ G, कूर घिअं K. १३ पडिच्छावीअइ मेढ pr. m. The letters इमे changed to दि add marg. अदिमे-य B (d); पइच्छा° H १४ अ॰ दिमेत्य B (a), महामत्त D, मत्त or त्थ H. १५ पुरुसेहिं AB (bc) EFG (H) १६ आदिसेदु DF.

चेटी। एदु एदु अज्जो। इमं तइअं पओट्ठं पविसदु अज्जो (८९)।

विदूषकः। प्रविश्य दृष्ट्वा च। हीं हीं भो। इध वि तइए पओट्ठे इमाइं दाव कुलउत्तजणोववेसेणणिमित्तं विरइदाइं आसणाइं। अद्धवाचिदो पासअपीठे चिट्ठइ पोत्थओ। एसो अ मणिमअसारिआसहिदो पासअपीठो। इमे अ अवरे मअणसन्धिविग्गेहचदुरो विविहवण्णिआविलित्तचित्तफलअग्गहत्था इदो तदो परिब्भमंति गणिआ वुड्ढविडा अ। आदेसेदु भोदी (९०)।

---

चेटी–(८९) एतु एत्वार्यः। इमं तृतीयं प्रकोष्ठं प्रविशत्वार्यः।

विदू०–(९०) इहापि तृतीयस्मिन्प्रकोष्ठ इमानि तावत्कुलपुत्रजनोपवेशननिमित्तं विरचितान्यासनानि। अर्धवाचितः प्राशकपीठे मञ्चे इत्य[र्थः]। तिष्ठति पुस्तकः। एतच्च मणिमयसारिकासहितं पाशकपीठम्। सारी अक्षक्रीडागुटिका। पाशा अक्षाः। इमे चापरे मदनसंधिविग्रहचतुरा विविधवर्णिकाविलिप्तचित्रफलकाग्रहस्ता इतस्ततः परिभ्रमन्ति गणिका वृद्धविटाः [च]। आदिशतु भवती।

---

१ तईए AB (abc) E. २ कुलवुत्त° D H. ३ वेसणाणिमित्ताइं H (a). ४ अध्व० AB (c) F; अध or व H. ५ पासाअपीवि ? B (b); वासपीठे (=व्यासपीठे) D H. पासाअपीठे E. ६ चिट्ठदि B B (a) D; °दी H. ७ एदअ AB (bc); एसोअ om. D; एदंअ DFG; एदं E. ८ साहीणमणि० B; साहीणमणि H (a), सारीणो मणि° B (d); साहीणं० K. ९ °सहिदं AB (bc) DEFGK. १० °पीठं AB (bc) DEFGK. ११ विग्गही B (a). १२ °चदुरा B (d). १३ विलित्तविचित्त B (a), विचित्त E. १४ फलअ-अग्ग० AB (c) D; फलहअअग्ग० B (b) EG; फलहअग्ग० B (d). १५ °ब्भमंदि D परिभमंति E. ब्भमंदि H. १६ वुड्ढ० D, वुड्ढ K. १७ om. AB (bcd) DE. १८ भोदि B (d).

चेटी । एदु ऐदु अज्जो । इमं चेउट्टं पओट्ठं पविसदु अज्जो (११) ।

विदूषकः । प्रविश्यावलोक्य च । ही ही भो । इध वि चेउट्ठे पओट्ठे जुवदिकरताडिदा जलधरा विअ गम्भीरं णदन्ति मुरआ, क्षीणपुण्णाओ विअ गअणादो तारआओ णिवडंति कंसतालआ, मेहुअरविरुअमहुरं वज्जदि वंसो । इअं अवरा ईसापणअकुविदकामिणी विअ अंकारोविदा कररुहपरिमसिरेण सारिज्जदि वीणा । इमाओ अवराओ कुसुमरसमत्ताओ विअ महुअरिओ अदिमहुरं पगीदाओ गणिआदारिआओ णच्चीअन्ति, णेट्टअं पठीअन्ति, ससिंगारओ । ओवग्गिदा

चेटी–(११)एतु एत्वार्यः। इमं चतुर्थप्रकोष्ठ(ष्ठं)प्रविशत्विहा(?)र्यः।

विदू०–(१२) इहापि चतुर्थे प्रकोष्ठे युवतिकरताडिता जलधरा इव गम्भीरं नदन्ति मुरजा मृदङ्गाः इ०। क्षीणपुण्या इव गगनात्तारका निपतन्ति कांसतालाः । मधुकरविरुतमधुरं वाद्यते वंशः। इयमपरेर्ष्याप्रणयकुपितकामिनीवाङ्कारोपिता कररुहपरिमर्शेन सार्यते वीणा । इमा अपराः कुसुमरसमत्ता इव मधुकर्योतिमधुरतरमगीता गणिकादारिका नृत्य(नर्त्य)न्ते नाटयं पथ(पाठ्य)ते (न्ते) सशृङ्गाराः

१ om. B (d). २ चउ-थं B (ab), चवुड्ड D. ३ om. B (bd). ४ पविसदु इह AB (cd) EG. ५ भो D. ६ इत्थावि H. ७ चउत्थे B (ab); चवुड्डे D ८ जुअदि B (a), जुवदी D. ९ °धारा B (d) १० मुरंआओ K. ११ कि or झिण्ण B (d) खीण॰ DH. १२ गगणादो D १३ कास॰ B (d) १४ महुर B (a). १५ विरुअं विअ K १६ मुहरं DH. १७ एसा पणअ K. १८ परिमासेण AB (bc) pr m. / (d) DEFG १९ सारिज्जदि H २० °अरीओ B. २१ °महुरअर AB (bc) DEFGK २२ णच्चीअदि BFG; णचीअदि D H, णचाअदि E. २३ णट्टअं D. णट्टं H. २४ पठीअदि BEFGK. पअट्टीअदि B (a). पट्टि or ढि अदि D H. २५ ससिंगारं BK; °गाराओ D H, समिंगारओ J. २६ ओवग्गदा AB(c), ओवग्गिदा CD.

गवक्खेसु वादं गेह्णन्ति सलिलगग्गरीओ । आदिसेदु भोदी (९२) ।

चेटी । एदु एदु अज्जो । इमं पञ्चमं पओट्ठं पविसदु अज्जो (९३) ।

विदूषकः । प्रविश्य दृष्ट्वा च । ही ही भो । इध वि पञ्चमे पओट्ठे अअं दरिद्दजणलोहुप्पादणअरो आहरइ उवचिदो हिंगुतेल्लगन्धो । विविहसुरहिधूमुग्गारेहिं णिच्चसंताविज्जमाणं णीससदि विअ महाणसं दुवारमुहेहिं । अधिअं उस्सुआवेदि मं साहिज्जमाणबहुविहभक्खभोअणगंधो । अअं

(सशृङ्गारं) । अपवर्जिता गवाक्षेषु वातं गृह्णाति(न्ति) सलिलगर्गर्यः । आदिशतु भवती ।

चेटी–(९३) एत्वेत्वार्यः । इमं पञ्चमं प्रकोष्ठं प्रविशत्वार्यः ।

विदू°–(९४) इहापि पञ्चमे प्रकोष्ठेऽयं दरिद्रजनलोभोत्पादनकर आहरत्युपचितो हिङ्गुतैलगन्धः । आ...समन्ताद्धरति–वातीत्यर्थः । विविधसुरभिधूमोद्गारैर्नित्यं संताप्यमानं निःश्वसितीव महानसं द्वारमुखैः । अधिक(कं)मुत्सुकावेदि रोमाञ्चयतीत्यर्थः । उत्सुकयतीति वार्थः । माम् । साध्यमानबहुविधभक्ष्यभोजनगन्धः । भोजनं व्यञ्जनम् । करणे ल्युट् । भुज्यतेऽनेनेति भोजनम् । व्यञ्जनमिति व्युत्पत्तेः । अतो

१ गवक्खेसु D. २ गेण्हति AB (c) ; गेण्हदि D. ३ गग्गरिओ D. ४ भोदि D. ५ भो D. ६ पउट्ठे K. ७ अअवि K. ८ दलिद° BCFJK ९ °प्पादणकरो AB (bcd) HK लोहुप्पादणकरो E ; भवप्पादणकरो K. १० आहरइ H (a). ११ उपचिदो K. १२ धूमुग्गरेहिं AB (bc) CDFJ , धूमुग्गा° B (a) , धमुग्गा॰ E १३ संताविज्जमाणि AB (c); संतप्पिज्ज॰ D. H १४ महानसं DF. १५ दुआर B B (ad) १६ उआसावेदि B, ओआसावेदि H (a), उददसावेदि B (d) pr. m , उगुआवेदि D H ,उस्सुआवेदि FG. १७ साहिज्ज॰ B (d), संसाहिज्ज ? K

अवरो पडच्चरं विअ पोट्टिं[1] धोआदि रूपिदारओ[2] । बहुवि[3]हाहारविआरं उवसाहेदि सूवआरो । वज्झन्ति मोदआ । पच्चं[4]तिअ[5] अपूवआ[6] । आत्मगतम् । अवि दाणि इह वड्डिअं[7] भुञ्जसुत्ति[8] पादोदअं लहिस्सं । अन्यतोवलोक्य च[9] । इदो गन्धव्व[10]सुरगणेहिं विअ विविहालंकारसोहिदेहिं गणिआजणेहिं बन्धुलेहिं अ[11] ज सव्वं सग्गीआदि[12] एदं गेहं । भो के तुम्हे बन्धुला णाम (९४)।

---

न पौनरुक्त्यमिति ध्येयम् । अयमपरः पटच्चरमिव पोट्टिं हतपशूदरये(पे)शि धावति रूपिदारकः । पटच्चरं जीर्णवस्त्रमिवेत्युपमा । अनेकाधारशोणिताभ्यामुपहतत्वाद्धावति प्रक्षालयतीत्यर्थः । रूपिदारको रूपशब्दः पशुपचनस्तत्संबन्धाद्रूपी खटिकः । स एव वैतंसिकसौनिकपदाभ्यामुच्यते । सूना हिंसा प्रयोजनं यस्य, सूनया हिंसया चरति जीवति वा स सौनिको मांसविक्रेतृजातीयः । तस्य बालक इत्यर्थः । अथवा रूपी पशुसङ्घस्तस्य दारकश्छेदक इत्यपि । बहुविधाहारविकारमुपसाधयति सूपकारः । बध्यन्ते मोदकाः । पच्यन्ते चापूपकाः । अपीदानीमिह वड्ढिअं परिविष्टम् । भुङ्क्ष्वेति पादोदकं लप्स्ये । इतः अत्रेत्यर्थः । गन्धर्वाप्सरोगणैरिव विविधालंकारशोभितैर्गणिकाजनैर्बन्धुलैश्च यत्सत्यं स्वर्गायत एतद्गेहम् । भोः के यूयं बन्धुला नाम ।

---

१ पोट्टिं ? K. २ रूपिदारिओ AB (bc) Γ, सूपि० D H ३ विहार H (a) Followed by अन्यतोवलोक्य H (a) the intervening syllables or matter om ; ४ पच्चन्ति च AB (cd) EFG, पचान्ती K ५ om AB H (abcd) CD and many others ६ पूवआ B without अ of course अ पूवआ CD, पुवअ E, पूवआ G, अपूअआ K ७ वड्डिअ AB (c), वाड्डिअ B (b); वाड्डिअं B (d), परिविड्डिअ DH, वड्डिअ ? K ८ भुञ्जसु° AB (cd) F, भुञ्जसु° B (b) ९ om B B (a) D १० °च्छरउर (=°वाप्सरो) H H. ११ अ ज om AB (c) Γ, ज om. D H, अज्ज सव्व K १२ सग्गाआदि BDEHK, सग्ग अति B (d)

बन्धुलाः । वयं खलु

परगृहललिताः परान्नपुष्टाः
परपुरुषैर्जनिताः पराङ्गनासु ।
परधननिरता गुणेष्ववाच्या
गजकलभा इव बन्धुला ललामः ॥२८॥

विदूषकः । आदेसेदु भोदी (९५) ।

चेटी । एदु एदु अज्जो । इमं छट्ठं पओट्ठं पविसदु अज्जो (९६) ।

विदूषकः । प्रविश्यावलोक्य च । ही ही भो । इधं वि छट्ठे पओट्ठे अमुं दाव सुवण्णरअणाणं कम्मतोरणाइं णीलरअणविणिक्खित्ताइं इन्दाउहट्ठाणं विअ दरिसअन्ति ।

बन्धु०–[परगृहेत्यादि ।] लक्षणं बन्धुलानाम् । गुणेष्ववाच्या अनभिधानीयगुणाः । वागगोचरगुणा इत्यर्थः । यथा गजकलभाः क्षितिपतिभवनेषु विलसन्ति तथा वयं वेश्यावेश्मसु ललामो विलसाम इत्यर्थः । लड विलासे धातुः । डलयोरैक्यं प्रसिद्धम् । पुष्पिताग्राछन्दः ॥२८॥

विदू०–(९५) आदिशतु भवती ।

चेटी–(९६) एत्वेत्वार्यः । इमं षष्ठं प्रकोष्ठं प्रविशत्वार्यः ।

विदू०–(९७) इहापि षष्ठे प्रकोष्ठेऽमूनि तावत्सुवर्णरत्नानां कर्मतोरणानि नीलरत्नविनिक्षिप्तानीन्द्रा(न्द्रा)युधस्थानमिव दर्शयन्ति ।

१ व अं? K. वअं ? K. २ कर्णेऽत्र° B (d). ३ ललामा B (a) Sec. m. B (d) K, ललामः विलसामः B (b). ४ om AB (c) F. ५ एदं B (a) E. ६ पोट्ठम् H (a). ७ om. H (d). ८ मोः D. ९ इह वि DH. १० पोट्ठे B (a). ११ अअ AB GK; अंअं H (b); अमुइं D H. १२ सुवण्णरअकम्मणणातोर° B (a). १३ रअण्णणं B (d). १४ कम्मतोरणाइं B, तोलणाइं K. १५ °विणिक्खित्ताइं H (a), °विणिक्खित्ताइं B (b). १६ एदं इह° G १७ दरिसआन्ति B (a); दरिसेन्ति B (b), दरिसआन्ति D, दरिसेन्ति EG, दरिसअति F, दरिसन्ति K.

वेदुरिअमोत्तिअपवालपुप्फराअइन्दणीलक्कक्केतरअपउमराअमरगअपहुदिआइं रअणविसेसाइं अण्णोण्णं विआरेन्ति सिप्पिणो। वज्झन्ति जादरूवेहिं माणिक्काइं। घडिज्जन्ति सुवण्णालङ्कारे। रत्तसुत्तेण गत्थीअन्ति मोत्तिआभरणाइं। घंसीअन्ति धीरं वेदुरिआइं। छेदीअन्ति सङ्खआ। साणिज्जन्ति पवालआ। सुक्खविअन्ति ओलंविदकुङ्कुमपत्थरा। सोलीअदि सेलज्जेअं।

[ वैदूर्यमौक्तिकप्रवालकपुष्परागेन्द्रनील(ल)कर्केतरकपद्मरागमरकतप्रभृतीन्रत्नविशेषानन्योन्यं विचारयन्ति शिल्पिनः]। प्रवालककर्केतरे मणिविशेषौ। बध्यन्ते जातरूपैर्माणिक्यानि। घट्यन्ते सुवर्णालंकाराः। रक्तसूत्रेण ग्रथ्यन्ते मौक्तिकाभरणानि। घृष्यन्ते धीरं वैदूर्याः छिद्यन्ते शङ्खाः। साणिज्जन्ति शाणचक्रेषु घृष्यन्त इत्यर्थः। यथा पेक्षितास्तथा शाणघर्षणेन निर्मीयन्त इति यावत्। प्रवालका विद्रुमाः शोष्यन्त आर्द्रकुङ्कुमप्रस्तराः। प्रस्तरः कुङ्कुमाधारचर्मपुट इत्याहुः

१ वेदालिअ BDF, वेदलिय G, वैदूर्यनीड K २ मोत्तिअवाल B (a) ३ पवाल B (b); °वालअ E K. ४ पुस्सराअ AB (c) EFK, पुप्प° B (a), पुस्स B (b) पुप्र B (d). ५ °कक्केरअ° BCGK. ६ पदम॰ A B (c) F; पदुम॰ B (a) पदम B (d), पदुम° D H; ७ विसेसाहिं B (a) ८ अण्णोण्णं B. ९ सिप्पिणो AB (पc). १० घडिज्जन्ति pr. m B (d). ११ °कारा रत्तसुत्तेण C १२ रत्त B (ab). १३ सुत्तण vol सुत्तएण B (a). १४ गथीअन्ति J. १५ घसीअन्ति F, घासी H. १६ धीर J. १७ वेदुरिआइं AB (bc) DEG. १८ साणीज्जन्ति B (d) १९ सुक्खवीअन्ति B B (ab l) F; °विअन्ति EJ; सुक्खीअन्ति K. २० अविद A B (c) F; अर॰ DH; ओअविद BK. २१ कुम AB (bc) F; कुङ्कुम B (d); कुं H. २२ सालिज्जदि B B (a); सालईदि vol. सालीअदि B (d), सालीअदि J. २३ सेलज्जअं AB (c) DFG.

विस्सोणीअदि चंदणरसो। संजोईअन्ति गन्धजुत्तीओ। दीअदि गणिआकामुकाणं सकप्पूरं तम्बोलं। अवलोईअदि सकडक्खअं। पअट्टदि हासो! पिआअदि अ अणवरअं ससिक्कारं मइरा। इमे चेडा इमो चेडिआओ इमे अवरे अवधीरिदपुत्तदारविता मणुस्सा आसवकरआपीदमदिरेहिं गणिआजणेहिं जे मुक्का ते पिअन्ति। 405
आदिसेदु भोदी (१७)।

चेटी। एदु एदु अज्जो। इमं सत्तमं पेओट्ठं पविसदु अज्जो (१८)।

---

सालीअदि सार्यते। सेलज्जअं कस्तूरिका। विस्साणीअदि। विशेष(षे)ण घृष्यत इत्यर्थः। चन्दनरसः। संयोज्यन्ते गन्धयुक्तयः। दीयते गणिकाकामुकयोः सकर्पूरं ताम्बूलम्। अवलोक्यते सकटाक्षम्। प्रवर्तते हासः। पीयते चानवरतं ससीत्कारं मदिरा। इमे चेटा इमाश्चेटिका इमेपरेऽवधीरितपुत्रदारवित्ता मनुष्या आसवकरकापीतमदिरैर्गणिकाजनैर्ये मुक्तास्ते पिबन्ति(पीयन्ते)। अयमभिप्रायः। आदिशतु भवती।

चेटी—(१८)एत्वेत्वार्यः। इमं सप्तमं प्रकोष्ठं प्रविशत्वार्यः।

---

१ विस्सारीअदि H (d). २ कामुआणं B B (a) D. ३ तोंबोलअं H (a). ४ अपवट्टदि DH; पअट्टअदि K. ५ वीअदिअ AB (c) F, पिव्वीअदि H (b); पिअदि H; विट्ठीअदि अं? E. ६ om: B B (ad). ७ अणवअं B (a). ८ ससिक्कारं K ९ मदिरा BB (a). १० चेडाओ DEF. ११ इमे EF; इमाओ K. १२ पुत्तदारा॰ B (d). १३ °करआ पीद &c. B. १४ °जणे (om हिं) B (d). १५ marg. H (d); जणेहिमुक्काति K. १६ पीअन्ति B (a); पीअदि H. १७ पओट्ठअं B (a).

विदूषकः । प्रविश्यावलोक्य च । ही ही भो । इध वि सत्तमे पओट्ठे सुसिलिट्ठविहंगवाडीसुहणिसण्णाइं अण्णोण्णचुम्बणपराइं सुहं अणुभवन्ति पारावदमिहुणाइं । दहिभत्तपूरिदोदरो बम्हणो विअ सुत्तं पढदि पंजरसुओ । इअं अवरा सामिसंमाणणालद्धपसरा विअ घरदासी अधिअं कुरुकुरायदि मदणसारिआ । अणेअफलरसास्सादपहुट्ठकण्ठा कुम्भदासी विअ कूअदि परउट्ठा । आलम्बिदा णागदंतेसु पञ्जरपरम्पराओ । जोधीअंति लावआ । आलवीअन्ति पञ्जरकविञ्जला । पेसीअन्ति पञ्जरकवोदा ।

---

विदू०—(९९)इहापि सप्तमे प्रकोष्ठे सुश्लिष्टविहङ्गवाटीसुखनिषण्या(ण्णा)न्यन्योन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि । विहङ्गवाटी कपोतपालिका सैव विटङ्कम् । दधिभक्तपूरितोदरो ब्राह्मण इव सूक्तं पठति पञ्जरशुकः । सूक्तं ऋक्समुदायः । शोभनोक्तं च । इयमपरा स्वामिसंमाननालब्धप्रसरेव गृहदास्यधिकं कुरुकुरायते मदनसारिका । मैनेति प्रसिद्धा । अनेकफलरसास्वादप्रहृष्टकण्ठा कुम्भदासीव कूजति परपुष्टा । कोकिलेत्यर्थः । अवलम्बिता नागदन्तेषु पञ्जरपरंपराः । नागदन्ताः - सर्वदास्थानसदनपुरोभागाधःप्रदेशाः । स्वार्थे कः । योध्यन्ते लावकाः । आलाप्यन्ते पञ्जरकपिञ्जलाः ।

---

१ भो D २ इधवि H ३ अण्गेण H ४ सुहमणु० BDK ५ भवन्दि D, भोदि K. ६ पारावअ B B (a) ७ °दरोविअ बह्मणो B B (a) ८ दहि om: K ९ मदै B (d) १० पन्ढदि AB (cd) D, पढदि B (b); पडदि K ११ सामि om K. १२ °पसरा CDJ. १३ गृहदासी B (a), घरादासी B (b) १४ °राअदि BDEK, कुकुरुकुराअदि B (a), कुरुकुराधिदि H १५ मअण° B B (a) १६ °प्फल AB (c), °फुल्ल B(a), °प्फुल B (b)L १७ °साद BK १८ पहुट्ठ० AB (c), पहुट्ठ B (b), पहु० DH, पहुट्ठ (=पहृष्ट) K १९ कूअदि E २० भरपुट्ठा BB (a) K, परवुट्ठा D २१ णागदंतेसु B (a) २२ जीधीअन्ति E २३ लावआ AB (c), लावआओ K २४ आलविअन्तिAB (bc) °विअन्ति B (d), आलवीअन्ति K २५ °कविञ्जरकवोदा om rel AB (c) F, कविञ्जलकवोदा D H, °कविञ्जली B (ad) कविञ्जलाओ K २६ °कवोदआ B, कवोदाओ K.

इदो तदो विविहमणिचित्तलिदो विअ अअं सहरिसं णच्चन्तो रविकिरणसन्तत्तं पक्खुक्खेवेहिं विधुवेदि विअ पासादं वरमोरो। अन्यतोवलोक्य। इदो पिण्डीकिदा विअ चन्दपादा पदगदिं सिक्खन्ता विअ कामिणीणं पच्छादो परिब्भमन्ति राअहंसमिहुणो। एदे अवरे वुड्ढमहल्लका विअ इदो तदो सञ्चरन्ति घरसारसा। ही ही भो। पसारणं किदं गणिआए णाणापक्खिसमूहेहिं जं सच्चं क्खु णन्दणवणं विअ मे गणिआघरं पडिभासदि। आदेसेदु भोदी (११)।

गौरास्तित्तिरय इत्यर्थः। प्रेष्यन्ते पञ्जरकपोताः। योद्धुमिति शेषः। इतस्ततो विविधमणिचित्रित इवायं सहचरीसहितः सहर्षं नृत्यन्नविकिरणसंतप्तं पक्षोत्क्षेपैर्विधुवतीव प्रासादं गृहमयूरः। इतोत्र सप्तम्यर्थे तसिल्। इतः पिण्डीकृता इव चन्द्रपादाः पदगतिं शिक्षन्तीव (शिक्षमाणा इव) कामिनीनां पश्चात्परिभ्रमन्ति राजहंसमिथुनानि। शिक्षन्तीति (माणानीति) बहुवचनं मिथुनविशेषणम्। एतेपरे-वुड्ढमहल्लका (वृद्धभेदा इत्यर्थः)। इवेतस्ततः संचरन्ति गृहसारसाः। ही हीत्याश्चर्यं इत्युक्तम्। प्रसारणं कृतं गणिकाया नानापक्षिसमूहैर्यत्सत्यं खलु नन्दनवनमिव मे गणिकागृहं प्रतिभासते। आदिशतु भवती।

१ om. AB (c) २ चित्तलिदो AB (c); चिच्चित्तिदो DH; चित्तलिदो F. ३ करण H (ab). ४ संतत्त E. ५ पक्खवखे (=पक्षक्षे) AB (c) DF, ६ च add H. ७ पिण्डीकिदा AB (bc). ८ सिक्खन्ति (=शिक्षन्ति) D. सिक्खंती H. ९ पच्छदो B (b), पत्तादो AB (c); पत्तादो विअ F. १० परिब्भमन्ति H (ab); परिभमन्ति B (d). ११ मिहुणाइं DHK. १२ वुड्ड AB (ac); वुड्ढ H. १३ तदो तदो H (b). १४ °सारिआ H; सारसाओ K. १५ भो: AB (abcd) DF. १६ पसारणं AB (bc), in marg. B (d) FG. १७ णाणा पक्खि &c. J. १८ खु H. १९ °हरं B (b) EK, २० पडिहादि B, पडिभमादि B (b), पडिभासादि C, पडिभादि D.

चेटी । ऐदु अज्जो । इमं अट्टमं पओट्ठं पविसदु अज्जो (१००) ।

विदूषकः । प्रविश्यावलोक्य च । भोदि को एसो पट्टपावारअपाउदो अधिअदरं अच्चब्भुदपुणरुत्तालङ्कारालंकिदो अंगभंगेहिं परिक्खलन्तो इदो तदो परिब्भमदि (१) ।

चेटी । अज्ज एसो अज्जआए अअं भादा भोदि (२) ।

विदूषकः । केत्तिअं तवच्चरणं कदुअ वसन्तसेणाए भादा भोदि । अधवा मा दाव जदि वि एसो उज्जलो सिणि

---

चेटी—(१००) एत्वार्यः । इममष्टमं प्रकोष्ठं प्रविशत्वार्यः । अत्र एत्वेत्वेति न वीप्सा । प्रकोष्ठमर्यादा समाप्तेरभ्यन्तरगृहस्यागतत्वेन गन्तव्यस्य प्रकोष्ठान्तरस्य विरहाच्चेति ध्येयम् ।

विदू०—(१) भवति हे । क एष पट्टप्रावारकप्रावृतोधिकतरमत्यद्भुतपुनरुक्तालंकारालंकृतोङ्गभङ्गैः परिस्खलन्नितस्ततः परिभ्रमति ।

चेटी—(२) आर्य एष आर्याया अयं भ्राता भवति । वक्तव्याः कौतूहलानन्दसंभ्रमैरेषोयमिति पुनरुक्तिः परिहरणीया ।

विदू०—(३) कियत्तपश्चरणं कृत्वा वसन्तसेनाया भ्राता भवति । अथवा मा दावेति आर्षभेदः । मा तावदयमेव उ-

---

१ एदु एदु B B (bd) DH. २ अट्ठमपवोट्ठं K. ३ om. B (d). ४ पावार del अ B (d). ५ आधिअदं B (b). ६ अच्चंभुद F; अच्चभुद K. ७ पुण्णरुत्ता E ८ °लंकारलंकिदो CDEJ. ९ °लंकिदो दि अङ्ग° B (b). १० om. B B (a) C. ११ केत्तिकं B (a). १२ भोदी ! H.

ह्नो अ सुअन्धो अ। तहं वि मेसाणवीधीए जादो विअ चम्पअरुक्खो अणहिगमणीओ लोअस्स। अन्यतोवलोक्य। भोदि एसा उण का फुल्लपावारअपाउदा उवाणहजुअलणिक्खित्ततेल्लचिक्कणेहिं पादेहिं उच्चासणे उवविट्ठा चिट्ठदि (३)।

चेटी। अज्ज एसा क्खु अम्हाणं अज्जआए अत्तिआ(४)।

विदूषकः। अहो से करंडडाइणीए पोट्टविस्थारो। ता किं एदं पवेसिअ महादेवं विअ दुआरसोहा इहं घरे णिम्मिदा (५)।

---

ज्ज्वलः स्निग्धश्च सुगन्धश्च [तथापि श्मशानवीथ्यां जात इव चम्पकवृक्षोनभिगमनीयो लोकस्य] ॥२१॥ भवत्येषा पुनः का पुष्पप्रावारकप्रावृतोपानद्युगलनिक्षिप्ततैलचिक्कणैः(णाभ्यां) पादैः(दाभ्यां)रुच्चासन उपविष्टा तिष्ठति। [सूक्ष्मसूत्रपुष्पाणि कृत्रिमाणि यत्र भवन्ति स पटः पुष्पपट इति प्रसिद्धः। पादैरित्युपलक्षणे तृतीया]।

चेटी—(४) आर्य एषा खल्वस्माकमार्याया अत्तिआ माता। (आर्या वसन्तसेना।

विदू०—(५) अहोस्या अपवित्रडाकिन्या उदरविस्तारः। तत्किमेतां प्रवेश्य महादेवमिव द्वारशोभेह गृहे निर्मिता। करट्ट कारटेति भाषा महाराष्ट्री। अपवित्राशाशनपरद्विजाती प्रवर्तते कारट ब्राह्मणः इतिवत्। पेट्टेत्यपि। महादेवमिव एतां वसन्तसेनाजननीं प्रवेश्य पश्चाद्द्वाराणि निर्मितानीत्यर्थः। अन्यथा कुम्भकर्णादिवदन्ति(ति)-

---

१ ह्मोअ J. २ तहवि फुल्लपावार पाउदा उवाणहजुवलणिक्खिओ अपाहि &c. B (a). ३ पमसाण्ण AB (c); पमसाण F; ङमसाण B (b). ४ वीधीए AB (c); विधीए D, विथिए H. ५ °वलोक्य च H. ६ एषा A B (c) F, एषां H. ७ °फुल..... जुअलणि° B (a); कापाददा marg फुल्लपावार B (d); पुष्फपावारअ D H. ८ पु B. ९ करड्डाइणीए BCFG; °डाथिणीए B (a), कारड्डाइ° H (b); केरडडाणीए L; करडदाइणीए H; करड K. १० इहु A B (c). ११ घरेमि H.

चेटी । हदास मा ऐव्वं उवहस अम्हाणं अत्तिअं । एसा क्खु चाउत्थिएण पीडीअदि (६) ।

विदूषकः । सपरिहासम् । भअवं चाउत्थिअ, एदिणा उवआरेण मं पि बम्हणं आलोएहि (७) ।

चेटी । हदास मरिस्ससि (८) ।

विदूषकः । सपरिहासम् । दासीए धीए वरं ईदिसो सूणपीणजंढरो मुदो ज्जेव्व (९) ।

सीहुसुरासवमत्तिआ एओवत्थं गदा हि गत्तिआ ।
जइ मरइ एत्थ अत्तिआ भोदि सिआलसहस्सजत्तिआ ॥२१॥

भोदि किं तुम्हाणं जाणवत्ता वहन्ति (१०) ।

---

स्थूलशरीराया अस्याः पुनरेभिर्द्वारैरस्मिन्गृहे प्रवेशो नैव स्यादिति परमाशयः ।

चेटी–(६) हताश मैवमुपहसास्माकमत्तिकां मातरम् । एषा खलु चातुर्थिकेन पीड्यते ।

विदू०–(७) भगवंश्चातुर्थिक, एतेनोपचारेण मामपि ब्राह्मणमालोकय ।

चेटी–(८) हताश मरिष्यसि ।

विदू०–(९) दास्याः पुत्रि वरमीदृशः शूनपीनजठरो मृत एव । [सीहुसुरेति] (१०) सीधुसुरासवमत्ता एतादृशावस्थां गता हि

---

१ हा हदास K. २ एव A. ३ उवविखव B H (ad), उवविवद K. ४ अत्ति B B (ad) K. ५ खु B. ६ पीडिअदि H ७ आ दासीए B B (a). ८ वि D ९ इदिसो A B (bc) C J १० om °जढरो A B (cd) D ११ एआ B (d) १२ हि सा K १३ गत्तिअ A B (bcd), भत्तिआ B C J, अत्तिआ १४ मरदि A B (bcd) D E F G K. १५ सआल B (a) १६ पजत्तिआ B पज्जत्तिआ K. १७ आणवत्ता B (abd) I K, जाणवत्ता C F, जाणवत्ताइं D

चेटी। अज्ज णहि णहि (११)।

विदूषकः। किं वा एत्थ पुच्छिअदि। तुम्हाणं क्खु पेम्मणिम्मलजले मअणसमुद्दे त्थणणिअम्बजहणा ज्जेव्व जाणवत्ता मणोहरणा। एव्वं वसन्तसेणाए बहुवुत्तन्तं अट्ठपओट्ठं भवणं पेक्खिअ जं सच्चं जाणामि एक्कत्थं विअ तिविट्ठअं दिट्ठं। पसंसिदुं णत्थि मे वाआविहवो। किं दाव गणिआघरो अहवा कुबेरभवणपरिच्छेदो त्ति। कहिं तुम्हाणं अज्जआ (१२)।

---

गत्तिभा अतिवृद्धेत्यर्थः। यदि म्रियतेऽत्र माता भवति शृगालसहस्रयात्रा ॥२१॥ हि भवति कि (किं) युष्माकम् [यानपात्राणि वहन्ति]।

चेटी—(११) आर्य नहि नहि।

विदू०—(१२) किं वात्र पृच्छ्यते। [युष्माकं खलु प्रेमनिर्मलजले मदनसमुद्रे स्तननितम्बजघनान्येव [यानपात्राणि मनोहराणि]। एवं वसन्तसेनाया बहुवृत्तात(न्त)मष्टप्रकोष्ठं भवनं प्रेक्ष(क्ष्य) यत्सत्यं जानाम्येकस्थम्। एकत्र स्थितमित्यर्थः। इव त्रिविष्टपं दृष्टम्। प्रशंसितुं नास्ति मे वाचाविभवः। किं तावद्गणिकागृहमथवा कुबेरभवनपरिच्छद इति। परिच्छदो विस्तारः। कुत्र युष्माकमार्या।

---

१ पुच्छीआदि H. २ णिम्मल om. B B (a). ३ त्थणणीअं वजहणा A B (c), °थण B (d); °णीअंव B; ४ एव B; एव्व E F. ५ आणवत्ताई D H, जाणवत्ता E K. ६ मणहरणा B B (a); मणहरणाइं D H. ७ एवं B. ८ बहुवुत्तं ~ (a) D. ९ अट्ट पओ° H. १० पओट्ठभवणं A B (c). ११ एत्थे B (a) K, एकत्थं del क B (d). १२ °ति वि; also विट्ठ(ट्ठं) अं B B (abd) D E G H K. १३ गणिआघरो A B (c), °हरो B E G K; गणिहरो B (b). १४ आदु B C D E K. १५ भवणा B (a). १६ परिच्छेदो AB (c) CDJ, पडिच्छंदो BE; °च्छेदो B (b); परिच्छंदो B (b) K.

चेटी । अज्ज एसा रुक्खवाडिआए चिट्ठदि । ता पविसदु अज्जो (१३) ।

विदूषकः । प्रविश्य दृष्ट्वा च । हीं ही भो । अहो रुक्खवाडिआए सस्सिरिअदा । अच्छरीअकुसुमा जत्थ रोविदा अणेअपादवा णिरन्तरपादवतलणिम्मिदा जुवदिजणजहणप्पमाणा पट्टदोला सुवण्णजूधिआसेहालिआमालईमल्लिआणोमालिआकुरवआअदिमोत्तअप्पहुदिकुसुमेहिं सअं णिवडिदेहिं जं सच्चं लहुं करेदि विअ णन्दणवणस्स सस्सिरीअदं । अन्यतोवलोक्य ।

---

चेटी–(१३) आर्य एषा वृक्षवाटिकायां तिष्ठति । तत्प्रविशत्वार्यः ।

विदू०–(१४) अहो वृक्षवाटिकायाः सश्रीकता । अच्छरीति(?)कुसुमा यत्र रोपितो(ता अ)नेकपादयां(पा) निरन्तरपादपतलनिर्मिता युवतिजनजघनप्रमाणा पट्टदोला सुवर्णयूथिकाशेफालिकामालतीमल्लिकानवमालिकाकुरवकातिमुक्तकप्रभृतिकुसुमैः स्वयं निपतितैर्यत्सत्यं लघूकरोतीव नन्दनवनस्य सश्रीकताम् । [हतश्चोदयत्सूर्यसमप्रभैः कमलरक्तोत्पलैः संध्यायत इव दीर्घिका । वापीत्यर्थः । अपि च । [एषो(ष)इति ।]

---

१ ही ही भो अहो om G २ भो D. ३ सरिगरीअदा B B (a) ४ अच्छरिअ, (=आश्चर्य) D H ५ कुसुमपत्थारारो° B ६ °रोविदा अणेअ C J ७ बादवा, वादवा &c A B (bcd) D F. ८ णिर-तर° K ९ तले D १० °णिमित्ता B (a) ११ जुवति A B (b) K, जुअदि B, जूवति F. १२ पमाणा B D E K १३ पट्टदोलो H, पट्टदोला K १४ जूहिआ B D E F, जूसहिआ K १५ सेफालिआ B, सहोलिआ B (b) १६ णोवमालिआ° B (a), णोमालिअ J १७ कुरवअ B (a) K, कुरकआदि° B (b), कुरवआदि० E. १८ °मेनग B (d). १९ पहुदि B (ad) D २० सअ E २१ सच्च K २२ लहुइ B, लहुइ B (ad) K, गुई B (b), वहुइ E, लहु इ G २३ णदणस्स K. २४ वणसरिसरीभकदं B (b), सरीअदं D H

इदो अ उदअन्तसूरसमप्पहेहिं कमलचोप्पलेहिं संझाअदि विअ दीहिआ ।

अवि अ ।

एसो असोअवुच्छो णवणिग्गअकुसुमपल्लवो भादि ।
सुहडो व्व समरमज्झे घणलोहिदपङ्कचच्चिक्को ॥२०॥

भोदि ता कहिं तुम्हाणं अज्जआ (१४) ।

चेटी । अज्ज ओणमेहि दिट्ठिं । पेक्ख अज्जअं (१५) ।

विदूषकः । दृष्ट्वोपसृत्य । सोत्थि भोदीए (१६) ।

वसन्तसेना । अये मैत्रेयः । उत्थाय । स्वागतम् । इदमासनम् । अत्रोपविश्यताम् ।

विदूषकः । उवविसदु भोदी (१७) । उभावुपविशतः ।

---

आर्याच्छन्दः । एषोऽशोकवृक्षो नवनिर्गतकुसुमपल्लवो भाति । सुभट इव समरमध्ये घनलोहितपङ्कचर्चिकः । चर्चिका चर्चा ॥ २० ॥ भवति हे । तत्कुत्र युष्माकमार्या ।

चेटी–(१५) आर्य अवनमय दृष्टिम् । पश्यार्याम् ।

विदू०–(१६) स्वस्ति भवत्यै ।

विदू०–(१७) उपविशतु भवती ।

---

१ समप्पिदेहिं K. २ °च्चोप्पलेहिं B (a), च्चोपलेहिं D. ३ सञ्झाअदि K. ४ दिहिआ A B (c). ५ अविअ om. B H (a) ६ वच्छो B (d). ७ णिग्गम CDJ. ८ पल्लवो D H. ९ सुभडो D H १० भोदु AB (bc) CDJ. ११ om. B (b) १२ ओणामेहि K. १३ दिट्ठिअ AB (bcd) DEFK. १४ The whole speech om. G. १५ (संस्कृतम् अ य ) before अये D H. but H has अं ; अंप B (a). १६ मेत्तय AB (bc) F १७ Whole speech om G.

वसन्तसेना । अपि कुशलं सार्थवाहपुत्रस्य ।

विदूषकः । भोदि कुसलं (१८) ।

वसन्तसेना । आर्य मैत्रेय अपीदानीम्

गुणप्रवालं विनयप्रशाखं
विश्रम्भमूलं महनीयपुष्पम् ।
तं साधुवृक्षं स्वगुणैः फलाढ्य
सुहृद्विहङ्गाः सुखमाश्रयन्ति ॥ ३१ ॥

विदूषकः । स्वगतम् । सुट्ठु उवलक्खिदं दुट्ठविलासिणीए । प्रकाशम् । अध इं (१९) ।

वसन्तसेना । अये किमागमनप्रयोजनम् ।

विदूषकः । सुणादु भोदी । तत्तभवं चारुदत्तो सीसे अञ्जलिं कदुअ भोदिं विण्णवेदि (२०) ।

वसन्तसेना । अञ्जलिं बद्ध्वा । किमाज्ञापयति ।

---

विदू०–(१८) हे भवति कुशलम् ।

वस०–गुणप्रवालमिति । पद्यं स्पष्टम् । सावयवरूपकमलंकारः । उपजातिश्छन्दः ॥ ३१ ॥

विदू०–(१९) [सुष्ठु] उपलक्षितं दुष्टविलासिन्या । अथ किम् ।

विदू०–(२०) शृणोतु भवती । तत्रभवांश्चारुदत्तः शीर्षेऽञ्जलिं कृत्वा भवतीं विज्ञापयति ।

---

१ Whole speech om. G २ अयि AB (c) F, अये D ३ कुशल CDIG HJ. ४ om AB (bc) DFK, add marg B (d). ५ सुट्ठु D, उट्ठु F. ६ अम K ७ किमाकस्मिकाग० G ८ सीसेष AB B (aed) ९ भदीं १० विण्णव दे K

विदूषकः । मए तं सुवण्णभण्डअं विस्सम्भादो अत्तण-केरकेत्ति कदुअ जूदे हारिदं । सो अ सहिओ राआवच्छआरी ण आणिआदि कहिं गदो त्ति (२१) ।

चेटी । अज्जए दिट्ठिआ वड्ढसि । अज्जो जुदिअरो संवुत्तो (२२) ।

वसन्तसेना । स्वगतम् । कधं चोरेण अवहदं पि सोण्डीरदाए जूदे हारिदंत्ति भणादि । अदो ज्जेव्व कामीअदि (२३)।

विदूषकः । ता तस्स कारणादो गेण्हदु भोदी इमं रअणावलिं (२४) ।

वसन्तसेना । आत्मगतम् । किं दंसेमि तं अलङ्कारअं । विचिन्त्य । अधवा ण दाव (२५) ।

---

विदू०–(२१) मया तत्सुवर्णभाण्डं विश्रम्भादात्मनः कृत (?) इति कृत्वा द्यूते हारितम् । स च सभिको राजावश्य(?)कारी न ज्ञायते कुत्र गत इति ।

चेटी–(२२) आर्य(र्ये) दिष्ट्या वर्धसे । आर्यो द्यूतकरः संवृत्तः ।

वस०–(२३) कथं चौरेणापहृतं शौण्डीरतया द्यूते हारितमिति भणति । अत एव काम्यते ।

विदू०–(२४) तत्तस्य कारणाद्गृह्णातु भवतीमां रत्नावलीम् ।

वस०–(२५) किं दर्शयामि तमलंकारम् । अथवा न तावत् ।

---

१ मये B (a). २ वीसंभादो BB (ad); om. E. ३ °केरित्ति B (a). ४ सहीओ B (a). ५ राआव(व)त्थआरी BD; Joined to असहिओ one word K, राअवात्थआरी CJ; राआवच्छआरी del च्छा add marg. त्थ B (d). ६ आ-णीअदि B. ७ वड्डतिसि B (b). ८ जुदअरो B E. ९ om E. १० om. AB (bcd) DEGK; वि B (a). ११ Before चोरेण BB (a). १२ °देत्ति BDK, हारिदेत्ति E. १३ भोदि D. १४ एदं AB (bcd). १५ om. B B (a).

**विदूषकः** । किं दाव ण गेण्हदि भोदी ऐदं रअणावलिं (२६) ।

**वसन्तसेना** । विहस्य सखीमुखं पश्यन्ती । मित्तेअ कथं ण गेण्हिस्सं रअणावलिं । इति गृहीत्वा पार्श्वे स्थापयति । स्वगतम् । कधं झीणकुसुमादो वि सहआरपादवादो मअरन्दबिन्दुओ णिवडन्ति । प्रकाशम् । अज्ज विण्णवेहि तं जूदिअरं । मम वअणेण अज्जचारुदत्त अहं पि पदोसे अज्जं पेक्खिदुं आअच्छामित्ति (२७) ।

**विदूषकः** । स्वगतम् । किं अण्णं तेहिं गदुअ गेण्हिस्सदि । प्रकाशम् । भोदि भणामि । स्वगतम् । णिअत्तीअदु इमादो गणिआपसङ्गादोत्ति (२८) । इति निष्क्रान्तः ।

---

विदू०—(२६) किं तावन्न गृह्णाति भवत्येतां रत्नावलीम् ।

वस०—(२७) मैत्रेय कथं न ग्रहीष्यामि रत्नावलीम् । कथं क्षीणकुसुमादपि सहकारपादपान्मकरन्दबिन्दवो निपतन्ति । आर्य विज्ञापय तं द्यूतकरम् । मम वचनेनार्यचारुदत्तमहमपि प्रदोषे आर्यं प्रेक्षितुमागमिष्यामीति ।

विदू०—(२८) किमन्यत्तत्र गत्वा ग्रहीष्यति । हे भवति भणामि । निवर्ततामस्माद्गणिकाप्रसङ्गादिति ।

---

१ इम° B २ om DH ३ झिण D H खीण K ४ दवि looks like क्षेवि K ५ सहिरपाद° B (a) सहआर-पाद°? K ६ मकरद H (d) A ७ विदवो B (d) ८ विण्णवेह AB (bcd) DEGK ९ जूदअर D १० मह B (a) ११ वि AB (bcl) १२ आगमिस्सामित्ति AB (cd) DEIG आगमिस्साम? B (b) °गमिस्सामिति K १३ ताहिं B (a) १४ गाण्हस्सदि D १५ भो (a) १६ भिणिअ° B (1) णीअत्ति° AB (c), णिवत्तिअदु D णावअत्ति° १७ om GJ

वसन्तसेना । हञ्जे गेण्ह एदं अलङ्कारअं । चारुदत्तं अहिरमिदुं गच्छम्ह (२९) ।

चेटी । अज्जए पेक्ख पेक्ख । उण्णमादि अकालदुद्दिणं (३०) ।

वसन्तसेना ।

उदयन्तु नाम मेघा भवतु निशा वर्षमविरतं पततु ।
गणयामि नैव सर्वं दयिताभिमुखेन हृदयेन ॥ ३२ ॥

हञ्जे हारं गेण्हिअ लहुं आअच्छ (३१) ।

इति निष्क्रान्ताः सर्वे ।

॥ मदनिकाशर्विलको नाम चतुर्थोऽङ्कः ॥

---

वस०–(२९) हञ्जे गृहाणैतमलंकारम् । चारुदत्तमभिरन्तुं गच्छामः(वः) ।

चेटी–(३०) आर्ये पश्य पश्य । उन्नमत्यकालदुर्दिनम् ।

वस०–[उदयन्तु नामेति] आर्याछन्दः । अत्र चारुदत्तानुरागः परमार्थः। अत्र उन्नमत्यकालदुर्दिनमिति चेटीवचनेन उदयन्तु नाम मेघा इति वसन्तसेनावाक्येन चाव्यवहितमेव पञ्चमाङ्कादौ वर्षर्तुवर्णनावतारः सूच्यते। स चायं वर्षर्तुवर्णनावतारः पूर्वं 'पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः । गौरी भुजलता यत्र विद्युल्लेखेव राजते॥' इति नान्द्यामेव कृत इति ध्येयम् ॥३२॥

वस०–(३१) हञ्जे हारं गृहीत्वा लघ्वागच्छ ।

इति मृच्छकटिकप्रकरणव्याख्यायां श्रीलल्लादीक्षितसंख्यावता श्रमेण महता निर्मितायां मदनिकाप्रदानं नाम चतुर्थोऽङ्कः ॥ ४ ॥

---

१ दुद्दिणिAB (c) २ संस्कृतमाश्रित्य before उद० D, संस्कृत° H, उदयन्ति B (a). ३ वर्णमवि° ? H. ४ हृदयेनै H. ५ लहुलहु BK; लहु H (b) DH; ६ नि क्रान्ता· K. ७ Before मद° B has इति मृच्छकटिकाया; D and H have मृच्छकटिकप्रकरणे चतुर्थोंक ; EK have मदनिकाशर्विलकश्चतुर्थोंक, मदनिकाप्रदानं Com.

# पञ्चमोऽङ्कः ।

ततः प्रविशत्यासनस्थः सोत्कण्ठश्चारुदत्तः ।

चारुदत्तः । ऊर्ध्वमवलोक्य । उन्नमत्यकालदुर्दिनम् । यदेतत्

आलोकितं गृहशिखण्डिभिरुत्कलापै-
  र्हंसैर्यियासुभिरपाकृतमुन्मनस्कैः ।
आकालिकं सपदि दुर्दिनमन्तरिक्ष-
  मुत्कण्ठितस्य हृदयं च समं रुणद्धि ॥ १ ॥

( इदानीमनुपदमेवास्मिन्नङ्के चतुर्थे विदूषकं प्रति वसन्तसेनाया गच्छ (च्छ) चारुदत्ताय सायं मदागमनं निवेदयेति वाक्येन सूचितः प्रवेशः प्रकरणनायकस्य चारुदत्तस्येति बोध्यम् । तथाचोक्तं दशरूपके—'प्रवेशचूलिका चैव तथा विष्कम्भकोपरः । अङ्कावतारोऽङ्कमुखमर्थोपक्षेपपञ्चकम् ॥' इति । पञ्चानाममीषामर्थोपक्षेपकानां(णां) लक्षणानि सोदाहरणानि तत्रैव स्पष्टानि । प्रवेशयतीति प्रवेशः । पचाद्यच् । अधमपात्रप्रयोज्यः प्रवेशकः । अत्र ण्वुल् । तदुक्तम्—'भृत्यवर्गकथावद्य कर्तव्यस्तु प्रवेशकः । अन्तर्जवनिकासंस्थैस्तथा मागधबन्दिभिः ॥ अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका । विष्कम्भस्तु द्विधा सोयं शुद्धः संकीर्ण एव च । शुद्धो मध्यमपात्रेण संकीर्णो मध्यमाधमैः ॥' इति । [इ]दमुक्तमिह किंचिदुद्देशत इति ज्ञेयम् । अस्मिन्नङ्के तावदा समाप्ति वर्षर्तुवर्णनं चारुदत्तेन वसन्तसेनया च विटेन च यथायथं क्रियते । तदिदं वसन्तसेनाचारुदत्तयोरन्योन्यानुरागोद्दीपन

१ °लाकय च H. २ °रुपाकृत G. ३ मन्तरिक्ष BB (abd), °रीक्ष J.

अपि च ।

मेघो जलार्द्रमहिषोदरभृङ्गनीलो
विद्युत्प्रभारचितपीतपटोत्तरीयः ।
आभाति संहतबलाकगृहीतशङ्खः
खं केशवोऽपर इवाक्रमितुं प्रवृत्तः ॥ २ ॥

अपि च ।

केशवगात्रश्यामः कुटिलबलाकावलीरचितशङ्खः ।
विद्युद्गुणकौशेयश्चक्रधर इवोन्नतो मेघः ॥ ३ ॥

---

विभावत्वेनावतरतीति ध्येयम् । तत इति । सोत्कण्ठो वसन्तसेनाविषयकोत्कण्ठासहितश्चारुदत्तः । यदेतदिति । एतद्विप(य)ति दृश्यमानं यद्दुर्दिनं मेघाच्छन्नं दिनं तदालोकितमित्यादि श्लोकार्थाभिन्नमिति शाब्दबोधः । [आलोकितामिति ।] वसन्ततिलकाछदः(न्दः) । अपाकृतमपकारमिव मत्वा स्थितमित्यर्थः । अकालेऽसमये भयमाकालिकम् । दुर्दिनं कर्तृ । गगनं विरहिजनहृदयं च सहैव व्याप्नोतीति सहोक्तिरलंकारः ॥ १ ॥ [मेघ इति ।] निरुक्तं छन्दः । जलार्द्रमहिषस्योदरं भृङ्गश्च तद्वन्नीलः । गजमहिषादीनां स्वतः श्यामत्वेऽपि जलार्द्रतायामतिश्यामता दृश्यते । तत्राप्युदरदेशेऽधिकतरेति द्रष्टव्यम् । संहताः पुजी(ञ्जी)भूताः । बलाका बकाः । बलाकाशब्दः पुंलिङ्गत्वाभिमतः । अपरः केशवो वामनावतारः श्रीहरिर्यथा तथा खं गगनमाक्रमितुं प्रवृत्तः सन् रराज इति शेषः । अत्र पूर्णोपमालंकारः ॥ २ ॥ इममेवार्थमार्यावृत्तेन आह । [केशवगात्रेति ।] स्फुटा-

---

१ विद्युद्गुण K.

एता निषिक्तरजतद्रवसंनिकाशा
धारा जवेन पतिता जलदोदरेभ्यः ।
विद्युत्प्रदीपशिखया क्षणनष्टदृष्टा-
श्छिन्ना इवाम्बरपटस्य दशाः पतन्ति ॥ ४ ॥
संसक्तैरिव चक्रवाकमिथुनैर्हंसैः प्रडीनैरिव
व्याविद्धैरिव मीनचक्रमकरैर्हर्म्यैरिव प्रोच्छ्रितैः ।
तैस्तैराकृतिविस्तरैरनुगतैर्मेघैः समभ्युन्नतैः
पत्रच्छेद्यमिवेह भाति गगनं विश्लेषितैर्वायुना ॥ ५ ॥
एतत्तद्धृतराष्ट्रचक्रसदृशं मेघान्धकारं नभो
हृष्टो गर्जति चातिदर्पितबलो दुर्योधनो वा शिखी ।

र्थम् ॥ ३ ॥ [एता इति ।] शिखया ज्वालया ॥ ४ ॥ [संसक्तैरिवेति ।] इमानि चत्वार्युपमानानि वायुना वियतीतस्ततश्चलितानां जलदानामिति ज्ञेयम् । संसक्तैर्मिलितैः । प्रडीनैरुड्डीनैः । व्याविद्धैः समुद्रक्षोभादितस्तत उत्क्षिप्तैः । प्रोच्छ्रितैरुच्चैरित्यर्थः । मीनानां चक्रं समूहो मकराश्च । तैस्तैस्तत्तद्दिग्भागस्थितैः । आकृतिभिः स्वस्वस्वरूपैः । विस्तृतैर्विस्तारवद्भिः(?) । अनुगतैर्मिलितैः । समभ्युन्नतैश्च । वायुना विश्लेषितैर्वियोजितैरितस्ततो विचलितैरिति यावत् । मेघैरिव गगनम् । इहैतद्भूतलोर्ध्वदेशावच्छिन्नम् । प(प)त्रच्छेद्यं चित्रमिव भातीत्यन्वयः । चित्रमिव विचित्रं शोभत इत्यर्थः ।—पत्रच्छेद्यमिति पदमालेख्यापरपर्यायस्य चित्रपदार्थस्य वाचकं रूढम् ॥ ५ ॥ [एतदिति ।] धृतराष्ट्रचक्रं कौरवसैन्यं तेन सदृशं नभः । सादृश्यं चानयोराभू(?)वियन्मण्डलमन्धकारकारित्वेन विनष्टचन्द्रार्कतया च

१ दष्टा A B (c). २ अ कृत B (d) ३ अनुमतै corr. B (d). ४ गगा A BB (c) C F ५ विश्लेषित वा॰ BB (a). ६ च्चव॰ G k.

अक्षद्यूतजितो युधिष्ठिर इवाध्वानं गतः कोकिलो
हंसाः संप्रति पाण्डवा इव वनादज्ञातचर्यां गताः॥६॥

विचिन्त्य । चिरः खलु कालो मैत्रेयस्य वसन्तसेनायाः सकाशं गतस्य । नाद्याप्यागच्छति ।

प्रविश्य

विदूषकः । अहो गणिआए लोभो अदक्खिणदा अ जदो णं कधा वि कदा अण्णा । अणाअरेण ज्जेव्व अभणिअ किंपि एव्वमेव्व गहिदो रअणावली । एत्तिआए ऋद्धीए णं तेए

बोध्यम् । द्यू शब्द इवार्थे । दुर्योधन इवेत्यर्थः । शिखी मयूरः । अध्वानः शब्दः अध्वानः शब्दाभावस्तं मौनं गतः कोकिलः । युधिष्ठिरोपि अध्वानं पन्थान[म्] । वनादिति ल्यब्लोपे कर्मणि पञ्चमी । वनं प्राप्येत्यर्थः । अज्ञानचर्याम् । पाण्डवपक्षे महाभारते विराटपर्वणि पाण्डवानामज्ञातचर्या स्फुटैव । हंसपक्षे हंसानां वर्षर्तावभावादज्ञातचर्या ज्ञातव्या ॥ ६ ॥

विदू०—(१) अहो गणिकाया लोभोऽदक्षिणता चानुदारता । यतो न कथा कृतान्या । अनादरेणैवाभणित्वा किमप्येवमेव गृहीता रत्नावली । कथा कथं हारितं हेमभाण्डमित्यादिका नैव कृतेत्यर्थः । एतावत्या ऋद्ध्या न तयाहं भणितः । आर्य मैत्रेय विश्राम्यतु गल्लकेन

१ °वात्म्यं A B (c) D F. २ °घर्षं A B (c) D F. ३ आहो H. ४ लोभो अ दक्खि° B ५ °जणे F; अदोष K. ६ न A B (c) F, om D; अण्णा कधा वि ण कदा B B (a). ७ कधा वि or वि C also B. ८ किदा D H. ९ अण्णाअणाअरेण (= अन्यायनागरेण &c) H ? K. १० अणादरेण B H (ad). ११ किञ्चि B B (a); किं वि or वि D E F G K. १२ एव्वमेव B (a) D H. १३ °गहिदा B (a). १४ रिद्धीए B also H which has रिन्निए. १५ om: B B (a). १६ ताए B (d).

अहं भणिदो । अज्ज मित्तेअ वीसमीअदु गद्धकेण पाणीअं पिबिअ गच्छीअदु त्ति । ता मा दाव दासीए धीआए गणिआए मुहं पि पेक्खिस्सं । सनिर्वेदम् । सुट्ठु क्खु वुच्चेदि । अकन्दसमुत्थिदा पउमिणी, अवंचओ वाणिओ, अचोरो सुवेण्णआरो, अकलहो गामसमागमो, अलुद्धा गणिआ त्ति । दुक्करं एदे संभावीअन्ति । ता पिअवअस्सं गदुअ इमादो गणिआपसंगादो णिवेत्तावेमि । परिक्रम्य दृष्ट्वा । कधं पिअवअस्सो रुक्खवाडिआए उवविट्ठो चिट्ठदि । ता जाव उवसप्पामि । उपसृत्य । सोत्थि भो ते । वड्ढदु भवं (१) ।

पानीयं पीत्वा गम्यतामिति । तन्मा तावद्दास्याः पुत्र्या गणिकाया [मुखमपि द्रक्ष्यामि] । कश्चिदेतावत्युक्तितेति कटाक्ष इति भावः । सुष्ठु खलूच्यते । अकन्दसमुत्थिता पद्मिनी, अवञ्चको वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः, अलुब्धा गणिकेति । दुष्करमेते संभाव्यन्ते । एते पद्मिन्यादयः पदार्था अकन्दोत्थिताः संभाव्यन्ते । परंत्वलुब्धा गणिकेत्यसंभाव्यमेवेति भावः । तत्प्रियवयस्यं गत्वास्माद्गणिकाप्रसंगान्निर्व(व)र्तयामि । कथं प्रियवयस्यो वृक्षवाटिकायामुपविष्टस्तिष्ठति । तद्यावदुपसर्पामि । स्वस्ति भो ते । वर्धतां भवान् ।

१ एवं पि for अहं B, एव्व वि B (a), om: B (b). २ अे अज्ज B. ३ वितमीअदु B (d). ४ गअक्केण B; गलड्ढेण B (a); गअड्ढेण Corr. मअकेण B (d); मभिकेण B H. ५ पाणिअं BB (a) EH. ६ marg add before पिबिअ वि विबिअ J. B (d). ७ पिबीअदु त्ति B; पिबिअ गच्छी० pr. m. del गच्छी B (d) ८ दासीएधीआए om: G. ९ 'मुहं ... ... सनिर्वेदम्' om: AB (bcd) DEFK; मुहं वि B (a); मुहं पेक्खिस्सं सनिर्वेदं marg. B (d). १० सट्ठु F. ११ वुच्चदि H; उच्चदि K. १२ पउमिणी AB (bcd) DEK. १३ सुवण्णकारो B (d), सुवण्णआरो E. १४ अकलहो K. १५ °समागमो K. १६ गणिआ B F; गणीआ B (d). १७ दे K. १८ संभावीअंति B (d); भाविअन्ति E; संभावीअति K. १९ णिवत्तावेमि K. २० विब्भंतो B (a); विब्भंतओ B (d). २१ भोदे AB (bc) DF, भवदे J.

चारुदत्तः। विलोक्य। अये सुहृन्मे मैत्रेयः प्राप्तः। वयस्य स्वागतम्। आस्यताम्।

विदूषकः। उवविट्ठम्हि (२)।

चारुदत्तः। वयस्य कथयं तत्कार्यम्।

विदूषकः। तं क्खु कज्जं विणट्ठं (३)।

चारुदत्तः। किं तया न गृहीता रत्नावली।

विदूषकः। कुदो अम्हाणं एत्तिअं भाअधेअं। णवणलिणकोमलं अञ्जलिं मत्थए कदुअ पडिच्छिआ (४)।

चारुदत्तः। तत्किं ब्रवीषि विनष्टमिति।

विदूषकः। भो कथं ण विणट्ठं। जं अभुत्तस्स अपीदस्स

---

विदू०—(२) उपविष्टोस्मि।

विदू०—(३) तत्खलु कार्यं विनष्टम्।

विदू०—(४) कुतोस्माकमेतावद्भागधेयम्। यस्सा न ग्रहीष्यतीति भावः। नवनलिनकोमलमञ्जलिं मस्तके कृत्वा प्रतिगृहीता।

विदू०—(५) भो कथं न विनष्टम्। यदभुक्तस्यापीतस्य चौरैरप-

---

१ अये कथं BB (a); अए K. २ मे om; H B (abd). ३ om; BB (ad) EGK. ४ °विट्ठोम्हि BDH; उप० B (d); उवविसम्हि K. ५ कथयतु कार्यम् AB (c). ६ तया न om: B (b). ७ एत्तिका B (a) EK; एत्तिआ B (d) G. ८ भाअधेआ B (ad) G; °धेयं D. भागधेआ FK. ९ इत्थं BB (a). १० पडिच्छिदया(?) pr. m. corr. च्छिदा H (d). ११ नष्टमिति BB (a) EFGK. १२ om: BB (a). १३ अभुत्तपीदस्स AB (bcd) DEK; अभूतपिद० H.

चोरेहिं अवहदस्स अप्पमुल्लस्स सुवण्णभण्डअस्स कारणादो चदुस्समुद्दसारभूदा रअणमाला हारिदा (९)।

चारुदत्तः। वयस्य। मा मैवम्।

यं समालम्ब्य विश्वासं न्यासोस्मासु त्वया कृतः।
तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥ ७ ॥

विदूषकः। भो वअस्स एदं पि मे दुदिअं संतोव कारणं जं सहीअणदिण्णसंणाए पडन्तोवारिदं मुहं कदुअ अहं उवहसिदो। ता अहं बह्मणो भविअ दाणिं भवन्तं सीसेण पडिअ विण्णवेमि। णिवत्तीअदु अप्पा इमादो बहुपच्चवाआदो

एतस्याम(ल्प)मूल्यस्य सुवर्णभाण्डस्य कारणाच्चतुःसमुद्रसारभूता रत्नमाला हारिता।

चारु०—[अयं श्लोकः पूर्वं तृतीयाङ्के १६७ पृष्ठे व्याख्यात एव]॥७॥

विदू०—(६) भो वयस्य एतदपि मे द्वितीयं संतापकारणं यदस्लीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वाहमुपहसितः। तदहं ब्राह्मणो भूत्वेदानीं भवन्तं शीर्षेण पतित्वा विज्ञापयामि। (ब्राह्मणो महत्कार्यं विना न कमपि साष्टाङ्गं प्रणमतीति भावः)। निवर्तताम् आत्मा(त्मा) आत्मा ममेत्यर्थः?। अस्माद्बहुप्रत्यवायाद्गणिकाप्रसंगात्। गणिका नाम पादुकान्तरप्रविष्टेव लेष्टुका लोष्टिका शर्करेत्यर्थो वा। दुःखेन पुनर्निराक्रियते। अपि च। भो वयस्य गणिका,

१ चोरेहिं अवहदस्स om. B (d). २ अप० B (d). ३ °भंडस्स D H ४ चतुस्स° B (ab); चदस्स° H. ५ °णावली BB (a); °मालिआ D H ६ Followed by वअस्स BB (a). ७ न्यासे A B (c). ८ मौल्यं B (a). ९ वि B (a). १० दुदिअअं E. ११ संदाव D, सताव E. १२ पडन्तावआरिदं A B (d) D F; पडन्तोवआरिदं B (b) १३ मुद हं? B (d). १४ °दोम्हि DH. १५ पच्चवाअ om. दो A B (c) F, पच्चवाअदो H.

गणिआपसंगादो । गणिआ णाम पादुअन्तरप्पविट्टा विअ लेट्ठुआ दुक्खेण उण णिराकरीअदि । अवि अ । भो वअस्स गणिआ हत्थी काअत्थओ भिक्खु चाटो रासहो अ जहिं एदे णिवसन्ति तहिं दुट्टा वि ण जाअन्ति (६) ।

चारुदत्तः । वयस्य अलमिदानीं सर्वं परिवादमुक्त्वा । अवस्थयैवास्मि निवारितः । पश्य ।

वेगं करोति तुरगस्त्वरितं प्रयातुं
प्राणव्ययान्न चरणास्तु तथा वहन्ति ।
सर्वत्र यान्ति पुरुषस्य चलाः स्वभावाः
खिन्नास्ततो हृदयमेव पुनर्विशन्ति ॥ ८ ॥

---

हस्ती, कायस्थो, भिक्षुः, चाटः, क्षुद्रविषयभोक्ता, रासभश्च यत्रैते निवसन्ति तत्र दुष्टा अपि न जायन्ते [दुष्टा इति भावे क्तः। दोषा इत्यर्थः।न जायन्तेऽपि तु जायन्त एवेत्यर्थः। तत्र तत्र धार्मिपरस्य धर्मपरत्वं धर्मपरस्य धार्मिपरता च वक्तुर्विदूषकत्वादेव संगच्छत इति ध्येयम्]।

चारु०—परिवादं निन्दाम् ।अवस्थया दारिद्र्यरूपया। 'उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः' इति समानार्थं पद्यं पठति। [वेगं करोतीति ।] प्राणस्य बलस्य व्यय(या)धा(ध्द्रा)सादित्यर्थः। स्पष्टमवशिष्टम् ॥ ८ ॥

---

१ पविट्ठा B (ad). २ लेट्ठुआ विअ BB (ad). ३ लोहआ K. ४ om. B B (ad). ५ णिराकरीदि B (a). ६ काअत्थओ A B (c) D F. ७ भिक्खू BB (abd). ८ आडो D; चाडो G; चाअडो H. ९ om. BB (a) १० तहिं तहिं B (a). ११ दुग्गा B (ad); दुव्वा E K. १२ सर्व° B (d). १३ विहरन्ति H. १४ चला स्वभावा. H. १५ स्तदा or दो H. १६ णदंति ? H.

चोरेहिं[1] अवहदस्स अप्पमुल्लस्स[2] सुवण्णभण्डअस्स[3] कारणादो चदुस्समुद्दसारभूदा[4] रअणमाला[5] हारिदा (५)।

चारुदत्तः। वयस्य। मा मैवम्[6]।

यं समालम्ब्य विश्वासं न्यासोऽस्मासु[7] तया कृतः।
तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥ ७ ॥

विदूषकः। भो वअस्स एदं पि[8] मे दुदिअं[9][10] संतोव[11]कारणं जं सहीअणदिण्णसंणाए पडन्तोवारिद[12] मुहं[13] कदुअ अह उवहसिदो[14]। ता अहं बह्मणो भविअ दाणिं भवन्तं सीसेण पडिअ विण्णवेमि। णिवत्तीअदु अप्पा इमादो बहुपच्चवाआदो[15]

हृतस्याप(ल्प)मूल्यस्य सुवर्णभाण्डस्य कारणाच्चतुःसमुद्रसारभूता रत्नमाला हारिता।

चारु०—[अयं श्लोकः पूर्वं तृतीयाङ्के १६९ पृष्ठे व्याख्यात एव]॥७॥

विदू०—(६) भो वयस्य एतदपि मे द्वितीयं संतापकारणं यत्सखीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वाहमुपहसितः। तदहं ब्राह्मणो भूत्वेदानीं भवन्तं शीर्षेण पतित्वा विज्ञापयामि। (ब्राह्मणो महत्कार्यं विना न कमपि साष्टाङ्गं प्रणमतीति भावः)। निवर्तताम् अप्पाः(प्पा) आत्मा ममेत्यर्थः?। अस्माद्बहुप्रत्यवायाद्गणिकाप्रसंगात्। गणिका नाम पादुकान्तरप्रविष्टेव लेष्टुआ लोष्टिका शर्करेत्यर्थो वा। दुःखेन पुनर्निराक्रियते। अपि च। भो वयस्य गणिका,

१ चोरेहिं अवहदस्स om B (d) २ अप० B (d). ३ °भंडस्स D H. ४ चतुरस्स° B (ab), चउस्स° H. ५ °णावली BB (a), °मालिआ B H. ६ Followed by वयस्य BB (a). ७ न्यासे A B (c) ८ मोल्लं B (a) ९ वि B (a). १० दुदिअस E. ११ संदाव D, सताव E १२ पडतावचारिद A B (c) D F, पडन्तोवचारिदं B (b) १३ मुह इ? B (d) १४ °देसि DH. १५ पच्चवाअ om दो A B (c) I, मपच्चअदो H.

गणिआपसंगादो । गणिआ णाम पादुअन्तरप्पविट्टा विअ लेट्टुआ दुक्खेण उण णिराकरीअदि । अवि अ । भो वअस्स गणिआ हत्थी काअत्थओ भिक्खु चाटो रासहो अ जहिं एदे णिवसन्ति तहिं दुट्टा वि ण जाअन्ति (६) ।

चारुदत्तः । वयस्य अलमिदानीं सर्वं परिवादमुक्त्वा । अवस्थयैवास्मि निवारितः । पश्य ।

वेगं करोति तुरगस्त्वरितं प्रयातुं
प्राणव्ययान्न चरणास्तु तथा वहन्ति ।
सर्वत्र यान्ति पुरुषस्य चलाः स्वभावाः
खिन्नास्ततो हृदयमेव पुनर्विशन्ति ॥ ८ ॥

---

हस्ती, कायस्थो, भिक्षुः, चाटः, क्षुद्रविषयभोक्ता, रासभश्च यत्रैते निवसन्ति तत्र दुष्टा अपि न जायन्ते [दुष्टा इति भावे क्तः । दोषा इत्यर्थः । न जायन्तेऽपि तु जायन्त एवेत्यर्थः । तत्र तत्र धर्मिपरस्य धर्मपरत्वं धर्मपरस्य धर्मिपरता च वक्तुर्विदूषकत्वादेव संगच्छत इति ध्येयम्] ।

चारु०—परिवादं निन्दाम् । अवस्थया दारिद्र्यरूपया । 'उत्प्लवन्ते विलीयन्ते दरिद्राणां मनोरथाः' इति समानार्थं पद्यं पठति । [वेगं करोतीति ।] प्राणस्य बलस्य व्यय(या)भा(द्वा)वादित्यर्थः । स्पष्टमवशिष्टम् ॥ ८ ॥

---

१ पविट्टा B (ad). २ लेट्टुआ विअ BB (ad). ३ लेट्टआ K. ४ om. B B (ad). ५ णिराकरीदि B (a). ६ काअट्टओ A B (c) D F. ७ भिक्खू BB (abd). ८ आढो D; चाढो G; वाअडो H. ९ om. BB (a). १० ताहिं ताहिं B (a). ११ दुट्टा B (ad); दुट्ठा E K. १२ सर्वे° B (d). १३ विहन्ति H. १४ चला स्वभावाः H. १५ स्तदा or दो H. १६ णदंति ? H.

आपि च। वयस्य

यस्यार्थास्तस्य सा कान्ता धनहार्यो ह्यसौ जनः ।

स्वगतम्। न। गुणहार्यो ह्यसौ जनः। प्रकाशम्।

वयमर्थैः परित्यक्ता ननु त्यक्तैव सा मया ॥ ९ ॥

विदूषकः। अधोवलोक्य स्वगतम्। जधा एसो उद्धं पेक्खिअ दीहं[१] णिस्ससदि तधा तक्केमि मेए विणिवारिअन्तस्स अधिअदरं वड्डिदा से उक्कण्ठा। ता सुट्ठु क्खु एव्वं वुचदि वामो कामो त्ति। प्रकाशम्। भो वअस्स भणिदं अ ताए भणेहि चारुदत्तं अज्ज पओसे मए एत्थ आअन्तव्वं त्ति। ता तक्केमि रअणावलीए अपरितुट्ठा अवरं मग्गिदुं आअमिस्सदित्ति (७)।

चारुदत्तः। वयस्य आगच्छतु। परितुष्टा यास्यति।

---

[यस्यार्था इति ।] अनुष्टुप् छन्दः ॥ ९ ॥

विदू०—(७) यथैष ऊर्ध्वं प्रेक्ष्य दीर्घं निःश्वसिति तथा तर्कयामि मया विनिवार्यमाणस्याधिकतरं वृद्धास्योत्कण्ठा। तत्सुष्ठु खल्वेवमुच्यते वामः काम इति। (वामो दुर्निवारतयातिकुटिल इत्यर्थः)। भो वयस्य भणितं च तया भण चारुदत्तमद्य प्रदोषे मयात्रागन्तव्यमिति। तत्तर्कयामि रत्नावल्यापरितुष्टापरं याचितुमागमिष्यतीति।

---

१ om: D G. २ णीस° BB (a), णिस्स° D. ३ मए विणिवा BB (ab); ४ णिवारिअ तस्स B (d) which has मए as before. ५ वामोस्थे कामो° F; कामे वामो° J. ६ भणिदं B B (ab) G भणिदं B (d) ७ च BB (ab) DGK. ८ पदोसे D. ९ आगन्त° BDG; °न्तव्वं त्ति K. १० तुट्ठा B (d). ११ अवरं B B (a). १२ अमग्गिदुं B (a). १३ °स्सदि B; आअमिस्सदि B (b); आगमिस्सदि B (d).

चेटः । प्रविश्य[1] । अवेध माणहे[2] । (८)

जधा जधा वर्शदि[3] अब्भखण्डे
तधा तधा तिम्मदि पुंट्ठिचम्मे[4] ।
जधा जधा लग्गदि शीदवादे
तधा तधा वेवदि मे हलके[5] ॥१०॥

प्रहस्य ।

वंशं[6] वाए शत्तछिदं[7] शुशदं[8]
वीणं वाएं[9] शत्ततन्त्ति[10] णदन्ति[11] ।

---

चेटः । अयं वसन्तसेनाभृत्यः कुम्भीलकः । वसन्तसेना च विटेन सह वर्षतु वर्णयन्ती चारुदत्तभवनमागता संध्यानिशि तमसि गर्जति वर्षति च वारिदे इति ज्ञेयम् ।

चेटः—(८)अवेध.अपेत । अपगच्छतेत्यर्थः । माणहे मानवाः इ० (त्यर्थः) । [जधा जधेति] उपेन्द्रवज्रा छन्दः । यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्मदि आर्द्री(र्द्री)भवति पृष्ठचर्म । यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम् ॥ १० ॥

[वंशमिति] शालिनीछन्दः । उपजातिविशेषः । पादत्रयं जगतीजात्या । चतुर्थः शालिन्येति भाव्यः । तदयं गौडप्राणायामः ।

(९) वंशं वादयामि सप्तच्छिद्रं सुशब्दं वीणां वादयामि सप्ततन्त्री(न्त्रीं) व(न)दन्ती(म्) । गीतं गायामि गर्दभस्यानुरूपं को मे गाने तुम्बुरुर्नारदो वा ॥ ११ ॥

---

१ प्रविश्य चेटः B. २ माणवेहे B (a); अवेश माणहेर G; हीमाणहे (=मानवाः) K. ३ वस्सादि A B (c) D. ४ पुट्टि B. ५ हडक्के B, B (a). ६ वसं B (a). ७ सत्त A B (abc) DFG. ८ छिदं A B (bc) D. ९ सुमदं A B (abc) D F. G; सशदं B (d). १० वादे B G K; om. B (a). ११ सत्त A B. (abc) D G K. १२ णदं et marg. तीं B (d).

गीअं गाए गद्दहेश्शाणुलूअं
के मे गाणे तुम्बुलू णालदे वा ॥ ११ ॥ (९)

आणत्तम्हि अज्जआए वशन्तशेणाए । कुम्भीलआ गच्छ तुमं, ममं आगमणं अज्जचालुदत्तश्श णिवेदेहि त्ति । ता जाव अज्जचालुदत्तश्श गेहं गच्छामि । परिक्रम्य प्रविष्टकेन दृष्ट्वा । एशे चालुदत्ते लुक्खवाडिआए चिट्ठदि । एशे वि शे दुट्ठवडुके । ता जाव उवशप्पेमि । कधं ढक्किदे दुवाले लुक्खवाडिआए । भोदु एदश्श दुट्ठवडुकश्श शण्णं देमि (१०) । इति लोष्टगुटिकाः क्षिपति ।

(१०) आज्ञप्तोस्म्यार्यया वसन्तसेनया । कुम्भीलक गच्छ त्वम्, ममागमनमार्यचारुदत्तस्य निवेदयेति । तद्यावदार्यचारुदत्तस्य गेहं गच्छामि । एष चारुदत्तो वृक्षवाटिकायां तिष्ठति । एषोपि स दुष्टबटुकः । तद्यावदुपसर्पामि । कथमाच्छादितं द्वारं वृक्षवाटिकायाः । भवतु एतस्य दुष्टबटुकस्य संज्ञां ददामि ।

१ om. B (b); गीय B (b). २ गाये B (d). ३ गद्दहस्साणुरूवं A B (c) D G; गद्दहस्साणुरूअ B (a) H K, गद्दहशाणुरूअ B (b), गद्दशाणुरूवं B (d). ४ को A B (bcd) H ५ तुम्बरू A B (bcd) D F, तुबलू B, तुम्बुरु ना G; तुंबरु K; ६ णारदे A B (c) D F. ७ अणत्ताम्हि A B (c). ८ वसन्तसे° A B (abcd), वसंत D. ९ जं कुम्भी° BB (a). १० ममागमणं B D. ११ चालु B १२ चालु B. १३ °दत्तस्स A B (abd), °दत्तस्य B (b). १४ एसो A B (abc) K; एसो G १५ चारुदत्ते B (a), °रुदत्तो G. १६ लुक्ख A BB (bcd) C D G. १७ °वाडिए D, वाडिआए K १८ चिट्टदि B, चिट्ठदि B (d). १९ एसो वि से A B (c) से-ते H. २० om. B (d) २१ दुस्ट B, दुट B (a) २२ वडुके B (a), वड्डुक्क B (b); वडुक्के pr m corr. बडुके B (d) २३ कथ B (d). २४ दुआलए B, दुआरए B (a) दुआले. B (b). २५ लुक्ख BCDG. २६ एदस्स A B (abcd) F K. २७ दुस्ट K २८ वडुकस्स A B (c) F, वडुअस्स B D; वडुअस्स B (a), वडुक्कस्स B (b); pr. m. corr. वडुअस्स B (d) २९ इति लोष्ट° om. DFH ३० °गुटिकां BGK, गुडिका B (d).

विदूषकः । अए[1] को दाणिं एसो पाआरवेट्टिदं[2] विअ कइत्थं मं लोट्टकेहिं ताडेदि[3] (११) ।

चारुदत्तः । आरामप्रासादवेदिकायां क्रीडद्भिः पारावतैः पातितं[4] भवेत् ।

विदूषकः । दासीए[5] उत्त[6] दुट्ठपारावअ[7] चिट्ठ चिट्ठ । जाव एदिणा दण्डकट्ठेण सुपक्कं विअ चूअफलं इमादो पासादादो भूमीए पाडइस्सं (१२) । इति दण्डकाष्ठमुद्यम्य धावति ।

चारुदत्तः । यज्ञोपवीतं आकृष्य । वयस्य उपविश । किमनेन । तिष्ठतु दयितासहितस्तपस्वी पारावतः ।

चेटः । कथं पारावदं पेक्खदि मं ण पेक्खदि । भोदु अवराए लोट्टगुडिआए पुणो वि ताडइस्सं (१३) । तथा करोति ।

---

विदू०—(११) अये क इदानीमेष प्राकारवेष्टितमिव कपित्थं मां लोष्टकैस्ताडयति ।

विदू०—(१२) दास्याः पुत्र दुष्टपारावत तिष्ठ तिष्ठ । यावदेतेन दण्डकाष्ठेन सुपक्वमिव चूतफलमस्मात्प्रासादाद्भूमौ पातयिष्यामि ।

चेटः—(१३) कथं पारावतं पश्यति मां न प्रेक्षते । भवत्वपरया लोष्ठगुटिकया पुनरपि ताडयिष्यामि ।

---

१ अये D. २ चेढिदं H (a); वेढेदे? B (b); वेढिदं corr वढिदं B (d); वेढिदं GK. ३ घोसि ताडेदि G. ४ पातित्यं चेत्? B (a). ५ आ दासी° B, आ. B(a). ६ पुत्त B (d) D; उत्ता GK. ७ पारावआ K. ८ °अङ्केण AB (bcd) FK. ९ °तेनाकृष्य B (d) G. १० उपविश्य? H. ११ पक्खादि BD; पस्सदि H. १२ णमं B B (ad). १३ अवलाए B. १४ लोट्ट B. १५ गुडिआए K. १६ पुणोवि om. B (d). १७ °यिस्सं BD.

विदूषकः । दिशोऽवलोक्य । कधं कुम्भीलओ । ता जाव उवसप्पामि । उपसृत्य द्वारमुद्घाट्य । अरे कुम्भीलअ पविस । साअदं दे (१४) ।

चेटः । प्रविश्य । अज्ज वन्दामि (१५) ।

विदूषकः । अरे कहिं तुमं ईदिसे दुद्दिणे अन्धआरे आअदो (१६) ।

चेटः । अले एशा शा (१७) ।

विदूषकः । का एसा कां (१८) ।

चेटः । एशा शा (१९) ।

विदूषकः । किं दाणिं दासीए उत्ता दुब्भिक्खकाले वुड्ढरक्को विअ उद्धकं सासाअसि एसा सा सेत्ति (२०) ।

विदू०–(१४) कथं कुम्भीलकः । तद्यावदुपसर्पामि । अरे कुम्भीलक प्रविश । स्वागतं ते ।

चेटः–(१५) आर्य वन्दे ।

विदू०–(१६) अरे कुत्र त्वमीदृशे दुर्दिनेऽन्धकार आगतः ।

चेटः–(१७) अरे एषा सा ।

विदू०–(१८) का एषा का ।

चेटः–(१९) एषा सा ।

विदू०–(२०) किमिदानीं दास्याः पुत्र दुर्भिक्षकाले वृद्धरङ्कु इवोर्ध्वकं श्वासायसे निःश्वसिसी(षी)त्यर्थः । एषा सा सेति ।

१ दिशोऽव B. २ कुम्भिलओ B (d) ३ उव० B (ab) D ४ अले DE ५ कुम्भिलआ BDGH ६ अरे B (a) ७ ओधआले B (a). ८ एशा DE ९ om. E १० कुत्त D. ११ दुब्भिक्ख° B (d) ; दुब्भिक्ख° F. १२ काल AB (c) F. १३ वुड्ढ K. १४ सासअसि E. १५ सा om. B (b) ; एसा सा सेत्ते AB (c) ; एसा सा सेत्ते E. dत्t का B (d). एस सा सत्ति D, एश सा शत्ति F

चेटः। अले तुमं पि दाणिं इन्दमहकामुको विअ सुट्टु किं काकोअसि काकेत्ति (२१)।

विदूषकः। ता कहेहि (२२)।

चेटः। स्वगतम्। भोदु। एव्वं भणिश्शं। प्रकाशम्। अले पण्हं दे दइश्शं (२३)।

विदूषकः। अहं दे मुण्डे गोडं दइस्सं (२४)।

चेटः। अले जाणाहि। तेण हि कस्सिं काले चूआ मौलेन्ति (२५)।

---

चेटः–(२१) अरे त्वमपीदानीमिन्द्रमहकामुक इव सुष्ठु किं काकायसे काकेति।

विदू०–(२२) तत्कथय।

चेटः–(२३) भवतु। एवं भणिष्यामि। अरे प्रश्नं ते दास्यामि।

विदू०–(२४) अहं ते मस्तके पादं दास्यामि।

चेटः–(२५) अरे जानीहि तावत्। तेन हि कस्मिन्काले चूता मौलेन्ति उन्निर्गतमुकुला भवन्तीत्यर्थः।

---

१ सुट्टु किं om B; किं del. B (d). २ °आसि A B. B (c); काअसि E. ३ कहेहि २ B. ४ एवं D. ५ भणिस्सं A B (c) E. ६ ते D. ७ गोतुं B (a); गोडुं B (b); गोडु or गोडुं com. ८ दइस्सं B C. ९ °णाहि दाव B C D F J. १० कस्सिं A B (abcd) D E. ११ मउलेन्ति B; मौलंति B (d) E K.

विदूषकः । अरे दासीएे उत्ता गिम्हे (२६) ।

चेटः । सहासम् । अले णहि णहि (२७) ।

विदूषकः ।-स्वगतम् । किं दाणिं एत्थ कहिस्सं । विचिन्त्य । भोदु । चारुदत्तं गदुअ पुच्छिस्सं । प्रकाशम् । अरे मुहुत्तअं चिट्ठ । चारुदत्तमुपसृत्य । भो वअस्स पुच्छिस्सं दाव कस्सिं काले चूआ मौलेन्ति (२८) ।

चारुदत्तः । मूर्ख वसन्ते ।

विदूषकः । चेटमुपगम्य । मुक्ख वसन्ते (२९) ।

चेटः । दुदिअं दे पंण्हं देइस्सं । सुसमिद्धाणं गामाणं को लक्खअं कलेदि (३०) ।

---

विदू०–(२६) अरे दास्याः पुत्र ग्रीष्मे ।

चेटः–(२७) अरे नहि नहि ।

विदू०–(२८) किमिदानीमत्र कथयिष्यामि । भवतु । चारुदत्तं गत्वा प्रक्ष्यामि । अरे मुहूर्तं तिष्ठ । भो वयस्य प्रक्ष्यामि तावत्कस्मिन्काले चूता उन्मुकुलीभवन्ति ।

विदू०–(२९) मूर्ख वसन्ते ।

चेटः–(३०) द्वितीयं ते प्रश्नं दास्यामि । सुसमृद्धानां ग्रामाणां (णां) का रक्षां करोति ।

---

१ अले D. २ दासीयउत्ता E. ३ om. E. ४ काहिं D. ५ मउलेन्ति B मौलंति B (d) K. ६ °पागम्य E. ७ °सन्ते D H. ८ विदिअं E K. ९ ते B (d) K. १० °पश्न ते पण्हं K. ११ दस्सम A B (abcd) K. १२ सुस० A B (abcd) D E ; का सुस० &c B B (a) १३ को A B (c) १४ रक्खअ A B (abcd) DEFGK. रक्खण H. १५ करेदि A B (abcd) DEFGK.

विदूषकः । अरे रच्छा (३१) ।

चेटः । सहासम् । अले णहि णहि (३२) ।

विदूषकः । भोदु । संसए पडिदेम्हि । विचिन्त्य । भोदु । चारुदत्तं पुणो वि पुच्छिस्सं (३३) । पुनर्निवृत्य चारुदत्तं तथैवोदाहरति ।

चारुदत्तः । वयस्य सेना ।

विदूषकः । चेटमुपगम्य । अरे दासिए उत्ता सेणा (३४) ।

चेटः । अले दुवे वि एक्कस्सिं कदुअ शिग्घं भणाहि (३५) ।

विदूषकः । सेणावसन्ते (३६) ।

चेटः । णं पलिवत्तिअ भणाहि (३७) ।

---

विदू०–(३१) अरे रक्षा ।

चेटः–(३२) अरे नहि नहि ।

विदू०–(३३) भवतु । संशये पतितोस्मि । भवतु । चारुदत्तं पुनरपि प्रक्ष्यामि ।

विदू०–(३४) अरे दास्याः पुत्र सेना ।

चेटः–(३५) द्वे अपि एकस्मिन्कृत्वा शीघ्रं भण ।

विदू०–(३६) सेनावसन्ते ।

चेटः–(३७) ननु परिवृत्य भण ।

---

१ अरे A B (bc) D F. २ सदेहे B (d); संसये D H. ३ °दोम्हि D. ४ om. B (a). ५ चेटमुपगम्य om. B (a). ६ दासीए B D E F G K. ७ पुत्ता A B (bcd) DEFGK. ८ om. BD. ९ एक्कस्सिं AB (c); एक्कस्सिं B (d); एक्कस्सिं D H. १० सेना A B (abcd) EFGH णा H. ११ पडिअत्तिअ A B (bc) F K; पडिव० B (a) G; पलिअ° D.

विदूषकः । कायेन परिवृत्य । सेणावसन्ते (३८) ।

चेटः । अले मुक्ख बडुव्वका पदाइं पलिवत्तावेहि (३९) ।

विदूषकः । पादौ परिवर्त्य । सेणावसन्ते (४०) ।

चेटः । अले मुक्ख अक्खलपदाइं पलिवत्तावेहि (४१) ।

विदूषकः । विचिन्त्य । वसन्तसेणा (४२) ।

चेटः । एशा शा आअदा (४३) ।

विदूषकः । ता जाव चारुदत्तस्स णिवेदेमि । उपसृत्य । भो चारुदत्त धणिओ दे आअदो (४४) ।

चारुदत्तः । कुतोऽस्मत्कुले धनिकः ।

---

विदू०—(३८) सेनावसन्ते ।
चेटः—(३९) अरे मूर्ख बटुवक पदे परिवर्तय ।
विदू०—(४०) सेनावसन्ते ।
चेटः—(४१) अरे अक्षरपदे परिवर्त्त(र्त)य ।
विदू०—(४२) वसन्तसेना ।
चेटः—(४३) एषा सागता ।
विदू०—(४४) तद्यावच्चारुदत्तस्य निवेदयामि । भो चारुदत्त धनिकस्ते आगतः ।

---

१ सेना B (d) २ बडुक्का A B (abc) C J, बडुआ D, बडुका K. ३ पादाः B (d). ४ परिव० A B (acd) DEFK, परि° B (b). ५ परावृत्य B (a); परिवृत्य D E. ६ सेना A B (cd) F ७ विद्व A B (c) C F J. ८ om. A B (bcd) D E F K ९ अक्खर A B (abcd) D K. १० पादाइं B (d). ११ परि° A B (bcd) F K, परि° B (a) D, परिवत्तावेह E. १२ °दस B(a)

विदूषकः । जइ कुले णत्थि तो दुवारे अत्थि । एसा वसन्तसेणा आअदा (४५) ।

चारुदत्तः । वयस्य किं मां प्रतारयसि ।

विदूषकः । जइ मे वअणे ण पत्तिआअसि ता एदं कुम्भीलअं पुच्छ । अरे दासीए उत्ता कुम्भीलआ उवसप्प (४६) ।

चेटः । उपसृत्य । अज्जं वन्दामि (४७) ।

चारुदत्तः । भद्र स्वागतम् । कथय, सत्यम् । प्राप्ता वसन्तसेना ।

चेटः । एशा शा आअदा वशन्तशेणा (४८) ।

चारुदत्तः । सहर्षम् । भद्र न कदाचित्प्रियवचनं निष्फलीकृतं मया । तद्गृह्यतां पारितोषिकम् । इत्युत्तरीयं प्रयच्छति ।

---

विदू०—(४५) यदि कुले नास्ति तद्द्वारेऽस्ति । एषा वसन्तसेनागता ।

विदू०—(४६) यदि मम वचने न प्रत्ययसे न विश्वसिसी(षी)त्यर्थः । तदेतं कुम्भीलकं पृच्छ । अरे दास्याः पुत्र कुम्भीलक उपसर्प ।

चेटः—(४७) आर्यं वन्दे ।

चेटः—(४८) एषा सागता वसन्तसेना ।

---

१ तो B (b). २ दुआरे B, B (ab). ३ °यति C. ४ मम B, B (ad); जइ मे हा? B (a). ५ पत्तिआसि B (d). ६ तो B (b). ७ अरे D. ८ दासिए E. ९ पुत्ता A B (bcd) EFK; वत्ता D; पुत्त H. १० कुम्भीलअ A B (c) CDJ. ११ उव० D H. १२ अज्जं K. १३ कथं B (a). १४ एसा A B (bc) DEFB (a). १५ सा AB (bc) DEF. १६ °सन्तसे° A B (abcd) DFH. १७ om. B, B (c). १८ °प्रियवचनं B (a). १९ निष्फली H. २० °तोषकम् D.

चेटः । गृहीत्वा प्रणम्य सपरितोषम् । जाव अज्जआए णिवेदेमि (४९) ।

इति निष्क्रान्तः ।

विदूषकः । भो अवि जाणासि किंणिमित्त ईदिसे दुद्दिणे आअदेत्ति (५०) ।

चारुदत्तः । वयस्य न सम्यगवधारयामि ।

विदूषकः । मए जाणिदम् । अप्पमुल्ला रअणावली बहुमुल्ल सुवण्णभण्डअत्ति ण परितुट्ठा अवरं मग्गिदुं आअदा (५१) ।

चारुदत्तः । स्वगतम् । परितुष्टा यास्यति ।

ततः प्रविशत्युज्ज्वलाभिसारिकावेशेन वसन्तसेना सोत्कण्ठा छत्रधारिणी विटश्च ।

---

चेटः–(४९) यावदार्याया निवेदयामि ।

विदू०–(५०) भो अपि जानासि किंनिमित्त इ(ई)दृशे दुर्दिन आगतेति ।

चारु०–अवधारयामि निश्चिनोमीत्यर्थः ।

विदू०–(५१) मया ज्ञातम् । अप(ल्प)मूल्या रत्नावली बहुमूल्य सुवर्णभाण्डमिति न परितुष्टापर याचितुमागता ।

---

१ °देमि D H. २ नि माम्ना H, ३ किं णि मेन C J. ४ आअदत्ति ADF; आआदत्ति ? H (c) ५ ज्ञातम् evidently a mistake C F J. ६ वेसेन B (b) D, वेशेन B (d), वसन K

विटः। वसन्तसेनामुद्दिश्य।

अपण्डा श्रीरेषा मदनगनङ्गस्य ललितं
कुलस्त्रीणां शोको मदनवरवृक्षस्य कुसुमम्।
सलीलं गच्छन्ती रतिसमयलज्जा प्रणयिनी
रतिक्षेत्रे रङ्गे प्रियपथिकसार्थैरनुगता ॥ १२ ॥

वसन्तसेने पश्य पश्य।

गर्जन्ति शैलशिखरेषु विलम्बिबिम्बा
मेघा वियुक्तवनिताहृदयानुकाराः।
येषां रवेण सहसोत्पतितैर्मयूरैः
खं वीज्यते मणिमयैरिव तालवृन्तैः ॥ १३ ॥

अपि च।

पङ्क्तिन्नमुखाः पिबन्ति सलिलं धाराहता दर्दुराः
कण्ठं मुञ्चति बर्हिणः समदनो नीपः प्रदीपायते।
संन्यासः कुलदूषणैरिव जनैर्मेघैर्वृतश्चन्द्रमा
विद्युन्नीचकुलोद्गतेव युवतिर्नैकत्र संतिष्ठते ॥ १४ ॥

---

विटः— [अपण्डा श्रीरेषेति।] शिखरिणी छन्दः। स्पष्टम्। वर्णनीयाङ्गनालम्बनको विटहृदयगतः शृङ्गाररोऽत्र प्रतीयते ॥ १२ ।

[गर्जन्तीति।] विरहिणीहृदयस्य विरहानलधूममलिनतया मेघोपमानतेति बोध्यम्। येषां मेघानाम्। वसन्ततिलकाछन्दः ॥ १३ ॥

[पङ्क्तिन्नेति।] दर्दुरा मड्डू(ण्डू)काः। कण्ठं केकाम्। 'कण्ठो गले गलस्थाने' इति कोशः। बर्हिणो ॥ मयूरः अयमकारान्तो बर्हिणशब्दः। मदनो वृक्षः। तत्सहितो नीपः कदम्बः। समन्तादुत्फुल्लः। प्रदीपवद्दृश्यत इत्यर्थः। शिष्टं स्पष्टम्। [शार्दूलविक्रीडितं छन्दः]॥ १४ ॥

---

१ °पनी B (a); °पनि ? B (d). २ om. B (d) E. ३ वरेण ? H. ४ °का° B (b). ५ संन्यसं A B (c), [illegible] न्यास. B (ad); सन्यासः H ; स न्यासं F. ६ °ष्ट° B (abd) [illegible] K. ७ विश्राम्यते B B (a).

वसन्तसेना । भावे सुट्ठु दे भणिदं । एपा हि

मूढे निरन्तरपयोधरया मयैव
कान्तः सहाभिरमते यदि किं तवात्र ।
मां गर्जितैरिति मुहुर्विनिवारयन्ती
मार्गं रुणद्धि कुपितेव निशा सपत्नी ॥ १५ ॥

विटः । भवत्वेवं तावत् । उपालभ्यतां तावदियम् ।

वसन्तसेना । भाव किमनया स्त्रीस्वभावदुर्विदग्धयोपालब्धया । पश्यतु भावः ।

मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा ।
गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः ॥ १६ ॥

---

वस०— हे भाव सुट्ठु ते भणितम् । काव्यमित्यर्थः । शृणु ममापीत्यभिसंधायोत्तमं काव्यमाह । [मूढे इति ।] इदं वसन्तसेनायाः साक्षेपं संबोधनं निशाकृतम् । सपत्नीव निशेत्यन्वयः । पयोधरो—मेघः—स्तनौ च । श्लोकार्थस्तु व्युत्पन्नावलोकनमात्रगम्यः । अत्र शब्दशक्तिमूलो ध्वनिः । [वसन्ततिलकं वृत्तम्] ॥ १५ ॥

विटः—भवत्वित्यन्तरसंवाद इत्युक्तम् । उप(पा)लभ्यतामुपालम्भविषयः क्रियताम् । इयं निशा सपत्नीरूपेत्यर्थः ।

वस०–[मेघा इति] श्लोक उत्तररूपः । सुगमः ॥ १६ ॥

---

१ भाव सुट्ठु दे om. E. २ संस्कृतमाश्रित्य पया D H. ३ निशासपत्नी C J ४ दुर्विदग्धया A B (b,d) D. ५ दुर्विदग्ध॰ B (d). ६ गर्जन्तु वर्षन्तु B (d). ७ च E. ८ दयिताभि॰ B B (ad).

जाव ताए बुद्धोवाशिआए पच्चुवआलं ण कलेमि जाए दशाणं शुवण्णकाणं किंदे जूदिअलेहिं णिक्कीदे । तदो पहुदि ताए कीदं विअ अत्ताणअं अवगच्छामि । दृष्ट्वा । किं णु हु पण्णोदले शमुश्शशदि । अधवा

वादादवेण तत्ता चीवलतोएण तिम्मिदा पत्ता ।
एदे विथिण्णपत्ता मण्णे पत्ता विअ फुलन्ति ॥४६॥(७२)

वसन्तसेना संज्ञां लब्ध्वा हस्तं दर्शयति ।

भिक्षुः । हा हा शुद्धालंकालभूशिदे इत्थिआहत्थे णिक्कमदि । कधं दुदिए वि हत्थे । बहुविधं निर्वर्ण्य । पच्चभिआणामि

र्थः । व्याख्यातम् । अथवालं ममैतेन स्वर्गेण । मोक्षेणेत्यर्थः । याव-त्तस्या वसन्तसेनाया इत्यर्थः । बुद्धोपासिकायाः प्रत्युपकारं न करोमि यया दशानां सुवर्णकाणां(नां)कृते द्यूतकराभ्यां निष्क्रीतः । ततः प्रभृ-ति तया क्रीतमिवात्मानमवगच्छामि । किं नु खलु पर्णोदरे समुच्छ्व-सिति । अथवा । वादादवेणेति । आर्याच्छन्दः । वातातपेन तप्ता-नि चीवरतोयेनार्द्राणि पत्राणि । एतानि विस्तीर्णपत्राः(णि) प्रसारितपक्षाः मन्ये पत्राः-पक्षिण इव स्फुरन्ति ॥ ४६ ॥ संज्ञां चेतनाम् ।

(७२) शुद्धालंकारभूषितः स्त्रीहस्तो निष्क्रामति । कथं द्वितीयो-

१ जावत्ताए D. २ °सिआए H. ३ °कालं BH. ४ दिशाणं ? AB (bc). ५ सुवण्ण॰ AB (c) D ; सुवण B (abd). ६ कदे AB (bcd) DEG. ७ ज्जूदि° B (b); जूद° H. ८ णिक्किदे AB (abcd) ; क्किणिदे E , णिकीदे H. ९ उवकीदं K. १० अत्ताणं D. ११ समूश्शशादि AB (c), समूशशादि B (a) ; समुशशादि B (b), शमूश्श-शादि H (d) EGK; समुश्शश्शिदि DH. १२ अथवा B (b) १३ संतत्ता B (a). १४ ची-वर H (d). १५ °तोयेण D ; °जलेण J; °दोएण K. १६ तिम्मिदा (=आर्द्राणि) AB (c); तिम्मिद H (a) ; तिम्मिदा D. १७ विदिण्ण AB (c) , वित्थिण्ण B (a); विझिण ? B (b) ; विदिण D , विदिण्ण F. १८ पुत्ता ? D. १९ पत्ता थ B (d) २० फुरन्ति AB (abcd) DF, फुरन्ति ? E. २१ °लकार AB (abcd) DE. २२ भूषिदे AB (c) ; भूसिदे H (ab) K ; भूशिशिदे ? B (d) ; भूषिदे (दे) E. २३ From णिक्कमदि ......हत्थे om. B (a) २४ दुदिए D. २५ °भिवजाणामि B (a).

विअ एदं हत्थं । अधवा किं विचालेण । शच्चं शो ज्जेव्व हत्थे जेण मे अभअं दिण्णं । भोदु । पेक्खिश्शं । नाट्येनोद्घाट्य दृष्ट्वा प्रत्यभिज्ञाय च । शा ज्जेव्व बुद्धोवाशिआ ( ७३ ) ।

वसन्तसेना । पानीयमाकाङ्क्षति ।

भिक्षुः । कधं उदअं मग्गेदि । दूले च दिग्घिआ । किं दाणिं एत्थ कलइश्शं । भोदु । एदं चीवलं शे उवलि गालइश्शं ( ७४ ) । तथा करोति ।

वसन्तसेना । संज्ञां लब्ध्वोत्तिष्ठति ।

भिक्षुः । पटान्तेन वीजयति ।

वसन्तसेना । अज्ज को तुमं ( ७५ ) ।

भिक्षुः । किं मं ण शुमलेदि बुद्धोवाशिआ दशशुवण्णणिक्कीदं ( ७६ ) ।

---

पि हस्तः । प्रत्यभिजानामीवैतं हस्तम् । अथवा किं विचारेण । सत्यं स एव हस्तो येन मेऽभयं दत्तम् । भवतु । पश्यामि । सैव बुद्धोपासिका ।

भि०–(७४) कथमुदकं याचते । दूरे च दीर्घिका । किमिदानीमत्र करिष्यामि । भवतु । एतच्चीवरमस्या उपरि गालयिष्यामि ।

वस०–( ७५ ) आर्य कस्त्वम् ।

भि०–(७६) किं मां न स्मरति बुद्धोपासिका दशसुवर्णनिष्क्रीतम् ।

---

१ विचारेण AB (abcd)E. २ सचं D. ३ अहअं G; अभअं H. ४ पेक्खिश्शामि B (d); पेक्खिस्से K. ५ दिग्घिआ H (a); दिग्घिआ E. ६ किं दा and on marg. ४ for पि B (d). ७ कलिश्शं DK. ८ से D. ९ उवरि AB (abc) DEK; उवरी ? B (d). १० गालइश्शं DH, गालस्सं EK, गलइश्शं G. ११ ण मं B, B (a). १२ शुमलादि B (ad) E. १३ °सुवण्ण° B (abd).

तुहिं शमइशाशिदमणा भाविअ उवाशिआ गेहं गमइशादि ।
ता शेणं शेणं गच्छदु बुद्धोवाशिआ । इति परिक्रामतः । दृष्ट्वा ।
ओशोलध अँज्जा ओशोलध । एशा तलुणी इत्थिआ । एँशो
भिक्खु त्ति । शुद्धे मम एशो धम्मे । हत्थशंञ्जदमुहशञ्जँद-
इँन्दिअशंञ्जदे शे क्खु माणुंशे । किं कलेदि तश्श लाँअउले ।
पॅलल्लोअ हत्थे णिश्चले ( ८१ ) ।

इति निष्क्रान्ताः सर्वे ।

वसन्तसेनामोटनो नामाष्टमोऽङ्कः ।

---

लयमिति स्फुटम् । ता ततः । शेणं शेणं शनैःशनैः । गच्छतु बुद्धोपासिका । अपसरतार्या अपसरत । एषा तरुणी स्त्री । एष भिक्षुरिति । शुद्धो ममैष धर्मः । हस्तसंयतमुखसंयतेन्द्रियसंयतः स खलु मनुष्यः । किं करोति तस्य राजकुलम् । परलोको हस्ते निश्चलः । यो धर्मात्मा तस्य न कापि भीरित्यर्थः ।

इति श्रीमन्मृच्छकटिकप्रकरणव्याख्यायां लल्लादीक्षितसंख्यावता महत्या निरालम्बनया भावनया निर्मिताया वसन्तसेनामोटनो नामाष्टमाङ्कः संपूर्णतामफाणीत् ॥ ८ ॥

---

१ °शिअ॰ G. २ शेशु H. ३ ओशलध ओशलध H (ab). ४ अज्जा अज्जा G. ५ om. G. ६ अत्थिआ B (d) E. ७ एशो AB (abcd) CDJ. ८ हित्थ ? B (b.) ९ संजद AB (abcd) D; संजदे K. १० om. DH; °जदे K. ११ इन्दिय° J. १२ °संजदे DE; °शन्तदेशे (=शान्तदेशे) K. १३ माणुश्शे B (a); माणुशेश्शे ? B (d). १४ लाउले BB (abd) E; लाउले ? K. १५ पललोहत्थे D ; विपललो-अहत्थे K. १६ णिच्चले B (a) J; णिच्चल्ले ? H; णिश्चले K. १७ इति मृच्छकटिकायां वस &c. BCDHJ; इति वसन्तसेनामाटनं नाम &c., K.

# नवमोऽङ्कः ।

ततः प्रविशति

शोधनकः । आणत्तम्हि अधिअरणभोइएहिं अरे सोहणआ, ववहारमण्डवं गदुअ आसणाइं सज्जीकरेहि त्ति । ता जाव अधिअरणमण्डवं सज्जिदुं गच्छामि । परिक्रम्यावलोक्य च । एदं अधिअरणमण्डवं । एस पविसामि । प्रविश्य संमार्ज्यासनमाधाय । विवित्तं कारिदं मए अधिअरणमण्डवं । विरइदा मए आसणा । ता जाव अधिअरणिआणं उण णिवेदेमि । प्रि-

श्रीः । शोधनकः–(१)आज्ञप्तोस्म्यधिकरणभोजकैः । अधिकरणं राज्यनि(?)दानं न्यायविवादस्थलं प्रसिद्ध यावन्यामिदानीं राज्यसृष्टी अदालत इति यदुच्यते तत् । तस्य भोजकाः प्रभवस्तैरित्यर्थः । आज्ञामेवाह । अरे शोधनक, व्यवहारमण्डपं गत्वासनानि सज्जीकुर्विति । तद्यावदधिकरणमण्डपं सज्जितुं गच्छामि । एषोधिकरणमण्डपः। एष प्रविशामि । विविक्तः पूतः स्वच्छ-इत्यर्थः । कारितो मयाधिकरणमण्डपः । विरचितानि मयासनानि । तद्यावदधिकरणिकानां पुन-

१ इति ? H. २ अधिअलण AB (abcd) DG, (here as well as throughout the whole page) आधिएलण ? E ३ भोइएहिं B B (a), भोअइएहिं D, भोगाईएहिं H, भोइएहि K. ४ अले AB (abcd) DF. ५ ववहाल AB (abcd) [illegible] ६ मण्डवं सज्जिदु गडेनि ता गच्छामि K. for मण्डवं... . . गच्छामि ७ °कलेहि AB (abcd) DE. ८ ता पवि° B, एश AB (bcd). ९ पविशामि AB (abcd) DF. १० विचित्तं ? [illegible] (d), विवतं ? H. ११ मएधिअरण B (d). १२ °दाइ DH. १३ °णाइं DH, आसणाइ ? F. १४ °लणि° AB (abcd) D. अलणिआआणं ? E, °अलआणं K.

कायावलोक्य च । कधं एसो रेहिअस्सालो दुट्टदुज्जणमणुस्सो इदो एव्व आअच्छदि । ता दिट्ठिपधं परिहरिअ गमिस्सं (१) ।
इत्येकान्ते स्थितः ।

ततः प्रविशत्युज्ज्वलवेषधारी

शकारः ।

ण्हादेहं शलिलजेलेहिं पाणिएहिं
उज्जाणे उववणकाणणे णिशण्णे ।
णालीहिं शह जुवदीहिं इत्थियाहिं
गन्धव्वेहि शुविहिदएहिं अङ्गकेहिं ॥ १ ॥

निषेदयामि । कथमेष राष्ट्रियश्यालो दुष्टदुर्जनमनुष्य इत एवागच्छति । तद्दृष्टिपथं परिहृत्य गमिष्यामि ।

शका०–(१)ण्हादेहमिति । प्रहर्षिणी छन्दः । स्नातोहं सलिलजलैः पानीयैरुद्यान उपवनकानने निषण्णः । नारीभिः सह युवतीभिः स्त्रीभिर्गन्धर्वैः सुविहितैरङ्गकैः ॥ १ ॥ खणेण गण्ठीति । उपेन्द्रवज्राच्छन्दः । क्षणेन ग्रन्थिः क्षणं जूटको मे क्षणेन मे चञ्चलकुन्तला वा । क्षणेन मुक्ताः क्षणमूर्ध्वचूडाः चित्रो विचित्रोहं राजश्यालः ॥२॥ राजश्यालत्वेन मयि सर्वं संभाव्यत इति भावः । हगे इत्येकारो लघुः

१ om. B (d) K. २ एसो AB (abcd) DEFGK. ३ लट्ठिअ AB (bc) FGK; लट्ठिअ B (ad) D; लटिअ E. ४ शाले AB (abc) DEFGK; शालो B; शाल B (d). ५ दुट्ट दुज्ज° ? K. ६ मणुस्से AB (abcd) DEK; मणुशे ? F. ७ एदो F. ८ भोदु B (d) E. ९ परिहरिअ B (d). १० गमिस्सं F. ११ उ-ज्जल AB (c). १२ वेशः AB, B (abc) CJ. १३ ण्हादेहं AB (c) F; ण्होदहे D? B (b); ण्हादेहं D; ण्हादेहं H. १४ °जलेहि CJ. १५ °कानने AB (c). १६ णि-शंणे F; निसण्णे K. १७ नारीहिं K. १८ सह AB (abcd) JK. १९ जुअदीहिं B (d), जुवदीहि J; C २० इत्थिकाहिं AB (ac) FG; इत्थि (त्थि) काहिं B (b); इत्थि-काहिं B (d) E; इत्थिआहिं CDJ; इत्थियेहिं K. २१ गन्धव्वे विअ शुहिदेहिं अङ्ग° BCJ; गन्धेहिं शुवि° DH; 'वच्छेहिं शुवि° E; गन्धव्वो शुवि° K.

खणेण गण्ठी खण जूलेके मे
खणेण मे चञ्चलकुन्तले वा ।
खणेण मुक्के खण उद्धचूडे
चित्ते विचित्ते हगे लाअशाले ॥ २ ॥

अवि अ । विशगण्ठिगब्भंपविश्टेण विअ कीडेएण अन्तलं मग्गमाणेण पाविदं मए महदन्तलं । ता कश्श एदं किविणचेश्टिअं पाडइश्शं । स्मृत्वा । आं शुमालिदं मए । दलिद्दचालुदत्तश्श एदं किविणचेश्टिअं पाडइश्शं । अण्णं च । दलिद्दे क्खु शे । तश्श शव्वं शम्भावीअदि । भोदु । अधि-

पठनीयः । एहिं इत्यनुस्वारस्य लघुत्वं च तत्र तत्र बोध्यम् । अपि च । विषग्रन्थिगर्भप्रविष्टेनेव कीटकेनान्तरं मार्गमाणेन प्राप्तं मया महदन्तरम् । तत्कस्य । उपरीति शेषः । एतत्कृपणचेष्टितं पातयिष्यामि । एतद्वसन्तसेनामारणरूपं कृपणं दीनं स्वशाक्यमित्यर्थः । कृपणं च तच्चेष्टितं चेति कर्मधारयः । आं स्मृतं मया । दरिद्रचारुदत्तस्य (एतत्कृपणचेष्टितं पातयिष्यामि । अन्यच्च । दरिद्रः खलु सः । तस्य सर्वं) संभाव्यते । भवतु । अधिकरणमण्डपं गत्वाग्रतो व्यवहारं लेखयिष्यामि । यथा

१ गड्डी AB (bc), गठी B (d) गड्डी E, खणेण गण्ठी &c, one line om. G. २ जूलकि मे E, जुदिका K, ३ व खणण B (d) ४ वा ला खणकुन्त॰ E ५ This half first and then the first half after it K. ६ उद्ध (ध्व) ? चूडे E ७ °त्तिविचित्ते K. ८ विगाठि B (a), विशगण्ठि पवि॰ गब्भ om B (d) E, केशगाठि K ९ पविठ्येण AB(c), पविट्टेण B (ab) H J, पविट्टुण B (d) १० विअ ? E. ११ किमिणके B (d) E १२ अनल AB (bcd) EK अत्तन G १३ om B (a) १४ °दत्तल AB (bcd), °दत्तल DH, पाविदमहदंतल E. १५ ॰चेट्टिअ AB (bc) CDGJ, किमिणचिट्टिअ B (ad) EK १६ पालइश्शं AB (bcd) DFK, पालइस्स G. १७ om CJ, आ E १८ चाह॰ AB (bcd) D °दत्तश्श तूलश्श B (d) चारुदत्तश्श शचवश्श F, ॰दत्तश्श शलूतश्श K १९ एद ... शव्व om AB (bc) DFG २० स्मृत्वा अण च K. २१ शश्च तश्य K. २२ सभावीअदि AB (bc) DFG, °वाअदि ? E

अलणमण्डवं गदुअ अग्गदो ववहालं लिहावइश्शं। जधा चालुदत्ताकेण वशन्तशेणिआ मोडिअ मालिदा। ता जाव अधिअलणमण्डवं ज्जेव्व गच्छामि। परिक्रम्यावलोक्य च। एदं तं अधिअलणमण्डवं। एत्थ पविशामि। प्रविश्यावलोक्य च। कधं आशणाइं दिण्णाइं चिट्ठन्ति। दाव आअश्शन्ति अधिअलणभोइआ। एदेश्शिं दुव्वचत्तले मुहुत्तअं उवविशिअ पडिवालइश्शं (२)। तथा स्थितः।

शोधनकः। अन्यतः परिक्रम्य पुरो दृष्ट्वा। एदे अधिअरणिआ आअच्छन्ति। तो जाव उवसप्पामि (३)। इत्युपसर्पति।

ततः प्रविशति श्रेष्ठिकायस्थादिपरिवृतः

अधिकरणिकः। भो भोः श्रेष्ठिकायस्थौ।

---

चारुदत्तकेन वसन्तसेनिका मोटयित्वा मारिता। तद्यावदधिकरणमण्डपमेव गच्छामि। एतत्तदधिकरणमण्डपम्। अत्र प्रविशामि। कथमासनानि दत्तानि तिष्ठन्ति। तावदागच्छन्त्यधिकरणभोजकाः। एतस्मिन्दूर्वाचत्वरे मुहूर्तमुपविश्य प्रतिपालयिष्यामि। प्रतिपालनं मार्गप्रतीक्षा।

शोध०–(३)एतेधिकरणिका आगच्छन्ति। तद्यावदुपसर्पामि। श्रेष्ठी वणिक्। सेठ इति भाषापि। कायस्थः प्रसिद्धः। सर्वमिदं स्पष्टं मिताक्षरायाम्।

---

१ °अरण AB (bcd) D. Throughout the page the same. २ अज्जचालु० B, H (a); चारु० D. ३ °सेणिआ F. ४ मोडय च कधं H (a). ५ एच्छ E. ६ आसणाइं DK. ७ चिट्ठदिन्ति AB (bc) FG, दिट्ठन्ति B (a); चिट्ठंति H (d); चिट्ठंति C; चिट्ठदिन्ति D; विचिट्ठन्ति E! चिट्ठन्ति J; चिट्ठदि K. ८ आअच्छन्ति CJ; आअश्यन्ति E. ९ °अरण° EK. १० ओदु एदश्शि B (d) E; ए ए दश्शि? D ११ दुव्वाचत्तले DH; डव्वचत्तले K. १२ मुहुत्तं B (d) १३ इति स्थितः H H (a). १४ पुरतो B (d). १५ °अलणिआ D. १६ om. B (a). १७ °दिभिः H. १८ °वृत आधि° DF. १९ आधि० AB (c) DFH.

तौ । आणवेदु अज्जो (४) ।

अधिकरणिकः । व्यवहारपराधीनतया दुष्करं खलु परचित्तग्रहणमधिकरणिकैः ।

छन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं
स्वान्दोषान्कथयन्ति नाधिकरणे रागाभिभूताः स्वयम् ।
तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृपः स्पृश्यते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ३ ॥

---

तौ—(४) तौ श्रेष्ठिकायस्थौ । आज्ञापयत्वार्यः ।

अधि०—व्यवहारपराधीनतया व्यवहारस्य पराधीनतया परस्याधीनतया तन्मात्रप्रयोज्यत्वेन परस्यान्यस्य । अन्यत्स्मृतिशास्त्रं कामन्दकादिनीतिशास्त्रं बुद्धिश्च निसर्गपटुी सत्यासत्यपराभिप्रायज्ञानं दुष्करमधिकरणिकैरित्यर्थः । इदमेवाह श्लोकत्रयेण ।

छन्नमिति । इदं श्लोकद्वयं किंचिद्विशेषं वहदेकार्थमेव । छन्नसत्यं कार्यमसत्येनाच्छादितमसत्यं सत्येन च्छन्नमित्यर्थः । न्यायो दिव्यप्रमाणादिभान्निर्णयः । प्रमाण वाचनिकं चाक्षुष पत्रलेखादि वा । एतदभावे दिव्यमवतरतीति ध्येयम् । अधिकरणे स्वान्दोषान्पुरुषा न कथयन्ति । यत. स्वय रागलोभाभिभूतास्तैरीदृशैः पुंभिः पक्षापरपक्षाभ्यां वर्धितानि बलानि सामर्थ्यानि येषां तैर्दोषैरित्यर्थः । पक्षः स्वीयत्वाभिमानवान् । अपरपक्षः स्वीयत्वाभिमानशून्यः द्रष्टु प्राड्विवाकस्य । स्पष्ट शिष्टं विदुषाम् । [शार्दूलविक्रीडित छन्दः] ॥ ३ ॥

---

१ तभी B, B (a) २ व्यवहाराधीनतया B(a) ३ om G ४ पर om B (d) ५ अधि० AB (c) Df. ६ छद्म ? B (a) ७ Corr. कृत। B (d).

अपि च ।

छन्नं दोषमुदाहरन्ति कुपिता न्यायेन दूरीकृताः
स्वान्दोषान्कथयन्ति नाधिकरणे सन्तोऽपि नष्टा ध्रुवम् ।
ये पक्षापरपक्षदोषसहिताः पापानि संकुर्वते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ४ ॥

यतः अधिकरणिकः खलु ।

शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधन-
स्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः ।
क्लीबान्पालयिता शठान्व्यथयिता धर्म्यो न लोभान्वितो
द्वार्भावे परतत्त्वबद्धहृदयो राज्ञश्च कोपापहः ॥ ५ ॥

---

छन्नं कार्यं प्रतिपाद्य छन्नं दोषं प्रतिपादयति । छन्नं दोषमिति । सन्तोऽपि साधवः सदाचारा अपि ये रागादिना पक्षापरपक्षीयैर्दोषैः सहिताः पापानि संकुर्वते ते ध्रुवं नष्टा लोकद्वयभ्रष्टा इत्यर्थः । स्पष्टमवशिष्टं शिष्टानाम् । [पूर्वोक्तमेव छन्दः] ॥ ४ ॥

इदानीं न्यायद्रष्टुर्लक्षणमाह । यत इत्यादिना । अधिकरणमुक्तम् । तत्प्रयोजनमस्येत्यधिकरणिकः-प्राड्विवाकः । 'प्रयोजनम्' इति ठक् । अधिकरणमस्यास्तीत्यधिकरणिकः । 'अत इनि(नि)ठनौ' इति ठन्वा । स्फुटमिदं मिताक्षरादिषु । शास्त्रज्ञ इति । क्लीबानसमर्थवा(र्थान्) । धर्म्यो धर्मादनपेतः । द्वार्भावे(?) । [पूर्वोक्तमेव छन्दः] ॥ ५ ॥

---

१ शङ्कुर्वते K. २ om. E. ३ भापि° E. ४ °नुकार Corr. marg. B (d). ५ चन BB (ab). ६ तुल्योऽमित्र B (d); तुल्ये मित्र D. ७ चरितें AB B (abcd) DFGK. ८ दृष्टे च B B (abd) E; दृष्ट्वैव B. ९ दत्तोदरः K. १० °यता? B (d). ११ धर्म्येऽप्रतिलो° AB (c) CDF; धर्म्योऽप्रतिलो° J. धर्मो न° K. १२ द्वार्भावे K. १३ °तत्त्व B (a).

श्रेष्ठिकायस्थौ । अज्जस्स वि णाम गुणे दोसो त्ति वुच्चदि । जइ एव्वं ता चन्दालोए वि अन्धआरो त्ति वुचँदि (५) ।

अधिकरणिकः । भद्र शोधनक, अधिकरणमण्डपस्य मार्गमादेशय ।

शोधनकः । एदु एदु अधिअरणभोइँओ एदु (६) ।

इति परिक्रामन्ति ।

शोधनकः । एदं अधिअरणमण्डवं । ता पविसन्तु अधिअरणभोइआ (७) । सर्वे चे प्रविशन्ति ।

अधिकरणिकः । भद्र शोधनक, बहिर्निष्क्रम्य ज्ञायतां कः कः कार्यार्थीति ।

शोधनकः । जं अज्जो आणवेदि । इति निष्क्रम्य । अज्जा अधिअरणिआ भणन्ति को को इध कज्जत्थी त्ति (८) ।

---

श्रेष्ठिकायस्थौ—(५) आर्यस्यापि नाम गुणे दोष इत्युच्यते । यद्येवं तदा चन्द्रालोकेऽप्यन्धकार इत्युच्यते ।

शोध०—( ६ ) एत्वेत्वधिकरणभोजक एतु ।

शोध०—( ७ ) अयमधिकरणमण्डपः । तत्प्रविशन्त्वधिकरणभोजकाः ।

शोध०—( ८ ) यदार्य आज्ञापयति । आर्या अधिकरणिका भणन्ति कः क इह कार्यार्थीति ।

---

१ om. B B (a). २ दोष० AB B (bcd) DEK; दोसंति F. ३ जइ AB (c) DF, जदि BEK. ४ एव K. ५ चंदलोआवि ? K. ६ अधकाआरो? B (a). ७ वुन्नति F; वुचांदि K. ८ आधि० D ९ ०अरण AB (abcd) EF. १० भोइज्जो AB (bc) EFGK, भोइज्जो Corr भोइओ B (d), भोईआ B (a) ११ ०मति B (d). १२ मण्डवं D. १३ पविस-दु DEFGK १४ आधिअलण० D, अधिकरण० H. १५ om. DH, सर्वे दर्पविशन्ति B B (abd) GK. १६ om. B B (a). १७ om. B B (a).

**शकारः** । सदर्पम् । उवत्थिए अधिअलणिए । साटोपं परिक्रम्य । हग्गे वलपुलिशे मणुश्शे वाशुदेवे लँट्ठिअशाले लँअशाले कज्जत्थी (९) ।

**शोधनकः** । ससंभ्रमम् । हीमादिके पढमं ज्जेव्व रँट्ठिअसाँलो कज्जत्थी । भोदु । अज्जें मुहुत्तं चिट्ठ । दाव अधिअरणिआणं णिवेदेमि । उपगम्य । अज्जा, एँसो क्खु रँट्ठिअसाँलो कज्जत्थी ववहारं उवत्थिदो (१०) ।

**अधिकरणिकः** । कथं प्रथममेव राष्ट्रियश्यालः कार्यार्थी । यथा सूर्योदये उपरागो महापुरुषनिपातमेव कथयति ।

शका०–( ९ ) उपस्थिता अधिकरणिकाः। अहं वरपुरु(षो)मनुष्यो वासुदेवो राष्ट्रियश्यालो राजश्यालः कार्यार्थी ।

शोध०–(१०)ससंभ्रमं सभयमित्यर्थः । हीमादिके खेदे । प्रथममेव राष्ट्रियश्यालः कार्यार्थी । भवतु । आर्य मुहूर्तं तिष्ठ। तावदधिकरणिकानां निवेदयामि । आर्याः एष खलु राष्ट्रियश्यालः कार्यार्थी व्यवहारमुपस्थितः ।

[ अधि० ]–उपरागो ग्रहणम् । व्याकुलेन निबिडेन ।

१ आधिअलणिके D. २ हगे AB (bcd) DEGK. ३ पुलिश० AB (bcd) EG. ४ लट्ठिअ AB (bc) JK, लड्डिअ B (d) CD. ५ शिआल B (bcd) DK. अशाले.... चिट्ठ next page om. B (a). ६ राअ° B (d). ७ हीमादिके B, हामादिके DH. ८ पढमं AB (c); पडमं K. ९ लट्ठिअ° AB (bc); लट्ठिअ° B (d) DEK; रट्ठिअ° C. १० °शाले AB (c) D; शालके Corr. सालो B (d) EK; शाले CJ. ११ अज्जा B (b). १२ मुहुत्तअं BE; मुहुत्ते B (b). १३ °अलणिआणं AB (abcd) E; अधिअल० D. १४ om. B (a). १५ अज्ज B (d). १६ एसे DH. १७ लट्ठिअ° AB (bc) D; लड्डिअ° B (ad) EK; रट्ठिअ° C. १८ °शाले AB (c) D Same Corr सालो B (ab); °श्यालो E; °शालो K. १९ ववहालमुव° AB (cd) CDE; ववहाललमुव ? B (b); ववहालं उव० G. २० ०त्थिदे B (d) DEH; °ट्ठिदो G. २१ आधि० D. २२ ०रागे ? K.

शोधनक, व्याकुलेनाद्य व्यवहारेण भवितव्यम् । भद्र, निष्क्रम्योच्यतां गच्छाद्य न दृश्यते तव व्यवहार इति ।

शोधनकः । जं अज्जो आणवेदि त्ति (११) । निष्क्रम्य शकारमुपगम्य । अज्ज, अधिअरणिआ भणन्ति । अज्ज गच्छ । ण दीसदि तव ववहारो (१२) ।

शकारः । सक्रोधम् । किं ण दीशदि मम ववहाले । जइ ण दीशदि तदो आउत्तं लाआणं पालेअं बहिणीवदि विण्णविअ बहिणिं अत्तिकं चँ विण्णविअ एदं अधिअलणिअं फेलिअ एत्थ अण्णं अधिअलणिअं ठावइश्शं (१३) । इति गन्तुमिच्छति ।

---

शोध०—(११) यदार्य आज्ञापयतीति । (१२) आर्य अधिकरणिका भणन्ति । आर्य गच्छ । न दृश्यते तव व्यवहारः ।

शका०—(१३) किं न दृश्यते मम व्यवहारः । यदि न दृश्यते तदावृ(वु)त्तं भगिनीधवमित्यर्थः । राजानं पालकं भगिनीपतिं विज्ञाप्य भगिनीं मातरं च विज्ञाप्यैतमधिकरणिकं फेलिअ प्रक्षिप्य । अत्रान्यमधिकरणिकं स्थापयिष्यामि ।

---

१ आवेणदित्ति AB (bcd), इति नि० B　२ ०अलणिआ H (ad), अधि० D. ३ om K　४ दीशदि AB (c), दीससि B (b), दीशति E　५ लव B (b) तुह G　६ ववहाले H (abcd) DEFGK.　७ दीसदि B (ab)　८ तव वहाले ? B (a). ९ दीसदि B (abd)　१० अदो H (a) ११ आवत्त D　१२ पलाअ ? K　१३ ०वदि D　१४ विणविअ D.　१५ वाहणिअं AB (bcd) EG, बहिणीं B (a) BH, विवहिणिअ H णविअ om ? K　१६ अत्तिक अधिअलणिअ next page om. D (b), अत्तिक ? D　१७ अ H, ज्जअ ? H　१८ ०अरणिअ AB (c) E, अधिअणीअं B(a), अधि० D.　१९ फेलइश्श अण्ण &c. B H (ab), फलिआएश ? E, एत्थ om H (d).　२० ग (ठा) वइश्श F.

शोधनकः। अज्ज रट्ठिअसालअ, मुहुत्तअं चिट्ठ दाव अधिअरणिआणं णिवेदेमि। अधिकरणिकमुपगम्य। एसो रट्ठिअसालो कुविदो भणादि (१४)। इति तदुक्तं भणति।

अधिकरणिकः। सर्वमस्य मूर्खस्य संभाव्यते। भद्र, उच्यताम्। आगच्छ। दृश्यते तव व्यवहारः।

शोधनकः। शकारमुपगम्य। अज्ज, अधिअरणिआ भणन्ति। आअच्छ। दीसदि तव ववहारो। ता पविसदु अज्जो (१५)।

शकारः। ही पढमं भणादि ण दीशदि। शंपदं दीशदि त्ति। ता णाम भीदभीदा अधिअलणभोइआ जेत्तिअं हग्गे

---

शोध०—( १४ ) आर्य राष्ट्रियश्याल, मुहूर्तं तिष्ठ। तावदधिकरणिकानां निवेदयामि। एष राष्ट्रियश्यालः कुपितो भणति।

शोध०—( १५ ) आर्य, अधिकरणिका भणन्ति। आगच्छ। दृश्यते तव व्यवहारः। तत्प्रविशत्वार्यः।

शका०—(१६)ही वितर्के। प्रथमं भणति(न्ति) न दृश्यते। सांप्रतं

---

१ लट्ठिअ° AB (abcd) DEK. २ °शालअ AB (cd) CDEJ; °रसालअ K. ३ मुहुत्तं B (d). ४ ०अलणि० B (d); आधिअल० D. ५ णिवेदेमि CJ. ६ आधिकरणिकामु(ु)प० AB (c) F; अधिकरणिकान् उप° B (bd) E; आधिकरणिकान् D; आधिकरणिकामुप° ? H. ७ एशे AB (c) DF; एशो B (d). ८ लट्ठिअ° AB (abc) DEFK; लट्ठिआ° B (d) ९ °शाले AB (c) DF; °शालो B (d) D °रशालो K. १० कुविदे AB (c) DF. ११ आधि० D. १२ सर्वमूर्खस्य B (a). १३ तदुच्यतां BB (a). १४ अधिअल° D. १५ भणन्दि D. १६ दीसदि.... अज्जो om. CDFJ. १७ तव.....ण दीशदि om. B (b) १८ ववहाले E. १९ सहर्षमात्मगतं ही BEG, ही om. AB (c) CDFJ. २० पढमं AB (c), पढमं G. २१ भणन्ति AB (c) FJ; भणन्दि D. २२ न CDJ. २३ दीशदि AB (acd) E. २४ संपदं AB (abcd) CJ. २५ दीशदि B (ab) K. २६ मे K. २७ आधिअल० D. २८ हगे AB (bcd) DG.

भणिश्शं तेत्तिअं पत्तिआवइश्शं । भोदु पविशामि । प्रविश्योपसृत्य । शुशुहं अम्हाणं तुम्हाण पि शुहं देमि ण देमि वँ (१६) ।

अधिकरणिकः । स्वगतम् । अहो स्थिरसंस्कारता व्यवहारार्थिनः । प्रकाशम् । उपविश्यताम् ।

शकारः । आं । अत्तणकेलका मे भूमी । तो जहिं मे लोअदि तहिं उवविशामि । श्रेष्ठिनं प्रति । एशे उवविशामि । शोधनकं प्रति । णं ऐत्थ उवविशामि । इति अधिकरणिकमस्तके हस्तं दत्त्वा । एशे उवविशामि (१७) । इति भूमावुपविशति ।

अधिकरणिकः । भवान्कार्यार्थी ।

शकारः । अध इं (१८) ।

---

दृश्यत इति । तन्नाम भीतभीता अधिक(र)णभोजका यावदहं भणिष्यामि तावत्प्रत्येष्यन्ते । भवतु प्रविशामि । सुसुखमस्माकं युष्माकमपि सुखं ददामि न ददामि च ।

शका०–(१७) आं । आत्मीया मम भूमि(ः) । तद्यत्र मे मनो रोचते तत्रोपविशामि । एष उपविशामि । नन्वत्रोपविशामि । एष उपविशामि ।

शका०–(१८) अथ किम् ।

---

१ °इस्स B (ab) °इश्शे DH, °इश्शादि K २ °त्य च B B (a) D ३ सुगुह' AB (cd), सुहुइ H (ab), सुहुइ H, सुसुद्दे? K ४ अम्हाण पि E ५ सुभ B (a) सुह B (d) ६ देमिमि? B (d) ७ अ D H ८ आधि° D ९ आ° CDJ, आ F. १० शे AB (c) CDFJ ११ भूमि B (d) F १२ आ जहिं B (a) १३ रोअदि AB (abc) CDJK १४ एष B (a), एशे DH, एत्थ K. १५ ण BB (ab) १६ एसु K. १७ आधि° AB (c) DE १८ एष BB (a). १९ अध किं H (ab), अध ई B (d)

अधिकरणिकः। तत्कार्यं कथय।

शकारः। कण्णे कज्जं कधइश्शं। एव्वं वड्डके मह्ल-क्प्पमाणाह् कुले हग्गे जादे।

लाअशशुले मम पिदा लाआ तादश्श होइ जामादा।
लाअशिआले हग्गे ममावि बहिणीवदी लाआ॥ ६॥ (१९)

अधिकरणिकः। सर्वं ज्ञायते।

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम्।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः॥ ७॥

तदुच्यतां कार्यम्।

शकारः। एव्वं भणामि। अवलद्धोह[१०] वि णे अ मे किं पि

शका०—(१९) कर्णे कार्यं कथयिष्यामि। एतावद्बृहद्के मह्लकप्रमाणस्य कुलेऽहं जातः। लाअशशुले इति। आर्याच्छन्दः। राजश्वशुरो मम पिता राजा तातस्य भवति जामाता। राजश्यालोऽहं ममापि भगिनीपती राजा॥ ६॥ एतेन यदुक्तं भवति तदाह। अपराद्धस्यापीत्यादि।

अधि०—[किमिति। स्पष्टम्॥ ७॥]

शका०—(२०) एवं भणामि। अपराद्धस्यापि न च मे किमपि करिष्यति। ततस्तदेति वा। तेन भगिनीपतिना परितुष्टेन मे

१ आधि० D. २ कधयइश्शं AB (bc); °धइश्शं B (d), कधइश्श D, हं कधइश्शं K. ३ एभवड्डके AB (bc) EF; एअं वड्डके B, एव्वड्डके B (a), एअं वड्डके B (d); एअवुड्ड-के DH; एअवकड्डे ? (ड्डके) G; एसो वड्डके K. ४ मल्लिक° DH, मड्डक° E, गल्लक° K. ५ हग AB (bcd) DEK. ६ जादे K. ७ written as prose after जादे AB (c). ८ तादश्श B (a) ९ जामदा B (d). १० °श्शालए B, °श्यालए H (a). °शिआले-वि DH; °शिआलव्वा E; °शिआल K. ११ हगे B (d) DEK. १२ ममवि ? K. १३ भइणी° AB (cd) DG बदि pr. m. B (d); बहिणीबई B; बइणी°B (b); बइणीवदि E; भइणि° ? F, बहणी° J. १४ लाआ AB (abcd) EFK. १५ आधिक० D. १६ विपिने DEFG. १७ कण्टक° B. १८ °लद्धाहपि E; अवलद्धाहवि H. १९ ण मे K. २० वि DEFHK.

कलेइश्शादि । तदो तेणे बहिणीवदिणा पेरितुंइटेण मे कीलिदुं लक्खिदुं शव्वुज्जाणाणं पवले पुप्फकलंडकजिण्णुज्जाणे दिण्णे । तहिं च पेक्खिदुं अणुदिअहं शोशावेदुं शोधावेदुं पोश्टावेदुं लुणावेदुं गच्छामि । देव्वजोएण पेक्खामि ण पेक्खामि वा इश्थिआशलीलं णिवडिदं (२०) ।

अधिकरणिकः । अथ ज्ञायते का स्त्री विपन्नेति ।

शकारः । हंहो अधिअलणभोइआ, किंत्ति ण आणामि । तं तादिशिं णअलमण्डणं कञ्चणशदभूशणिअं केणवि

---

क्रीडितुं रक्षितुं सर्वोद्यानानां प्रवरं पुष्पकरण्डकजीर्णोद्यानं दत्तम् । जीर्णेति विशेषणं विजनत्वज्ञापनार्थम् । तत्र च प्रेक्षितु अ(म)नुदिवसं शुष्कं कारयितुं शोधयितुं पुष्टं कारयितुं लूनं कारयितु(तुं) गच्छामि । दैवयोगेन पश्यामि न पश्यामि वा स्त्रीशरीरं निपतितम् ।

शका०–( २१ ) हंहो इति वितर्के । अधिकरणिक(ग)भोजकाः, किमिति न जानामि । तां तादृशीं नगरमण्डनं काञ्चनशतभूषणां केनापि कुपुत्रेणार्थकल्यवर्तस्य कारणाच्छून्यं पुष्पकरण्डक-

---

१ °इस्सादि E. २ तेण H. ३ बरितुट्टेण DFK, परितुट्टेण J. ४ पुफ° B (a); पुष्फ° B (d). ५ °करण्डजि० B (d), °करण्डकाजि० D; °करण्डअजि° G ६ अणुदणं B, °दिण? B (a), °दिअह? B (b). ७ शोशादुं B (a). ८ पोस्थावेदुं AB (bc) CDJ, पोस्तावेदुं B (ad). ९ लुस्तावेदुं B (d), लुआवेदु E, लुस्सावेदु K. १० इत्थिअ AB (c) CDFGJ, ईश्चाथिआ B (a), इत्थिय B (b) इस्तिआ B (d); इशितया E. ११ आयते AB (c). १२ अधि० D. १३ किंत्ति AB (bcd) J. १४ तादिशं B (a), तादिशि K. १५ णअर° K. १६ °भूषणिअं AB (abc), °भूश corr. B (d). १७ केणावि K.

कुपुत्तेण अत्थकल्लवत्तदशा कालणादो शुण्णं पुप्फकलण्डकजिण्णुज्जाणं पवेशिअ वाहुपाशबलक्कालेण वशन्तशेणिआ मालिदा । ण मए (२१) । इत्यर्धोक्ते मुखमावृणोति ।

अधिकरणिकः । अहो नगररक्षिणां प्रमादः । भोः श्रेष्ठिकायस्थौ न मयेति व्यवहारपदं प्रथममभिलिख्यताम् ।

कायस्थः । जं अज्जो आणवेदि । तथा कृत्वा । अज्ज लिहिदं (२२) ।

शकारः । स्वगतम् । हीमादिके उत्तलाअन्तेण विअ पाअशपिण्डलकेण अज्ज मए अत्ता एव्वं णिण्णाशिदो । भोदु । एव्वं दाव । प्रकाशम् । अहो अधिअलणभोइआ, णं भणामि मए ज्जेव्व दिट्ठे । किं कोलाहलं कलेध (२३) । इति पादेन लिखितं प्रोञ्छति ।

---

जीर्णोद्यानं प्रवेश्य वाहुपाशबलात्कारेण वसन्तसेना मारिता । न मया ।

अधि०— व्यवहारस्य पदं स्थानम् ।

काय०–( २२ ) यदार्य आज्ञापयति । आर्य लिखितम् ।

शका०–( २३ ) हीमादिके भये खेदे चाव्ययम् । उत्तलाभ-

---

१ कुपुत्रेण B (a). २ कालणा B (d) G. ३ शुणं AB (c). ४ पविशिअ BDEF GK. ५ वाहुपाशय० K. ६ °काले AB (bc), °कालेणा B (a); °वलक्काले DF. ७ मया K. ८ °क्ते च AB (bcd) CDGK; ०द्धोक्ते च EF. ९ मुख वृणोति ? B (a). १० आवि० D. ११ भो B. १२ °दिलि B (a). १३ ही मादिके B. १४ °अन्तेण AB (bcd) EG, उत्तलअन्तेण DH ; उत्तलावलणेण K. १५ वि B (a). १६ पायश AB (bc) F; पायशे D; °यशे H; पापश्य K. १७ पिण्डेण B (a), पिण्डाल० CJ. १८ एव्वं K ........ १९ णिणाशिदो AB (c), णिणाशिदे H (a) E; णिण्णाशिदे BB (d); विणाशिदे K. २० आवि० D. २१ भणा om. ? B (a). २२ दिट्ठा AB (abcd) JK. २३ °कलं केलेध H (b). २४ कलध K. २५ लिखनं AB (bcd) DFG. २६ प्रोञ्छन्ति AB (c).

अधिकरणिकः । कथं त्वया ज्ञातं यथा खल्वर्थनिमित्तं बाहुपाशेन व्यापादिता ।

शकारः । हंहो णूणं शुण्णशूणाए गोधट्ठाणाए गीवालिआए णिंशुवण्णकेहिं आहलणट्ठाणेहिं तक्केमि (२४) ।

श्रेष्ठिकायस्थौ । जुज्जदि विअ (२५) ।

शकारः । स्वगतम् । दिट्ठिआ पशुज्जीविदम्हि । अविद-मादिके (२६) ।

---

न्तेण त्वरया त्वरां कुर्वाणेनेत्यर्थः । उत्पतता चेत्यर्थः । इय पायस-पिण्डरकेना(णा)य मयात्मैव निर्नाशितः । भवत्स्वेयं मायत् । अहो अ-धिकरणभोजका, ननु भणामि मयैव हता । किं कोलाहलं कुरुत ।

शका०–( २४ ) हंहो नूनं शून्यशून्य(या) गोगस्थानया ग्रीवालिकया निःसुवर्णकैराभरणस्थानैस्तर्कयामि । शून्या च शूना उच्छूना उच्छोषयतीत्यर्थः । ग्रीवालिका ग्रीवैव ।

श्रे० का०–( २५ ) युज्यत इव । शकारेणैव मारितेति युज्यत इत्यर्थः ।

शका०–( २६ ) दिष्ट्या पशुज्जीवितोऽस्मि । अविरमादिके रेरे ।

---

१ [illegible] D. २ [illegible] AB (c), [illegible] B, [illegible] B (d), [illegible] E. ३ [illegible] AB (c) D, om. B, [illegible] B (b), [illegible] B, [illegible] B (a); [illegible] B (b) [illegible] E. ५ [illegible] AB (abcd) D, [illegible] B [illegible] E. ६ [illegible] B (a) [illegible] B (d) ७ [illegible] AB (abcd) CDJK. ८ [illegible] AB (c) CJ, [illegible] B, [illegible] B (d), [illegible] E.

श्रेष्ठिकायस्थौ । भो कं एसो ववहारो अवलम्बदि (२७)।

अधिकरणिकः । इह हि द्विविधो व्यवहारः ।

श्रेष्ठिकायस्थौ । केरिसो (२८) ।

अधिकरणिकः । वाक्यानुसारेणार्थानुसारेण च। यस्तावद्वाक्यानुसारेण स खल्वर्थिप्रत्यर्थिभ्यः । यश्चार्थानुसारेण स चाधिकरणिकबुद्धिनिष्पाद्यः ।

श्रेष्ठिकायस्थौ । ता वसन्तसेणामादरं अवलम्बदि ववहारो (२९) ।

अधिकरणिकः । एवमिदम् । भद्र शोधनक, वसन्तसेनामातरमनुद्वेजयन्नाह्वय ।

शोधनकः । तथा । इति निष्क्रम्य गणिकामात्रा सह प्रविश्य। एदु एदु अज्जा (३०) ।

---

श्रे० का०—( २७ ) भो(भोः) कमेष व्यवहारोवलम्बते ।

श्रे० का०—(२८) कीदृशः ।

श्रे० का०—शकारवाक्यानुसारेणायं व्यवहार इति प्रत्यर्थिनमाहतुः । ( २९ ) तद्वसन्तसेनामातरमवलम्बते व्यवहारः ।

शोध०—( ३० ) [तथा] । एत्वेत्वार्या ।

---

१ om. B B (ab). २ अवलम्बादि..... ववहारो L. 2 next page om. E; Four speeches after अवल० om. H. ३ आधि० D. ४ केरिसो AB (c) CFJ. ५ अर्थानुसा० वाक्यानु० &c. B (d) ६ खलु om. B B (ab). ७ अर्थे प्रत्यर्थिभ्य॰ E. ८ च om. BB (a); वाणिक्कनिक..... नि पा० K. ९ तथेति नि० AB (abcd) CDJ. १० गणिकाया मा० B H (a).

वृद्धा । गदा मे दारिआ मित्तघरेअं अत्तणो जोव्वणं अनुभविदुं । एसो उण दीहाऊ भणादि आअच्छ अधिअरणिओ सद्दावेदि । ता मोहपरवसं विअ अत्ताणअं अवगच्छामि । हिअअं मे थरथरेदि । अज्ज, आदेसेहि मे अधिअरणमण्डवस्स मग्गं (३१) ।

शोधनकः । एदु एदु अज्जा । उभौ परिक्रामतः । एदं अधिअरणमण्डवं । एत्थ पेविसदु अज्जा (३२) । इत्युभौ प्रविशतः ।

वृद्धा । उपसृत्य । सुहं तुम्हाणं भोदु भावमिस्साण (३३) ।

अधि[१२]करणिकः । भद्रे, स्वागतमास्यताम् ।

वृद्धा । तधो (३४) । इत्युपविष्टा ।

---

वृद्धा–वृद्धे(द्धा) इयं वसन्तसेनाजननी । (३१) गता मे दारिका मित्रगृहमात्मनो यौवनमनुभवितुम् । एष पुनर्दीर्घायुर्भणति आगच्छ अधिकरणिक आह्(ह्व)यति । तन्मोहपरवशमिवात्मानमवगच्छामि । हृदयं मे प्रकम्पते । [ इदमात्मगतमाह । ] आर्य, आदिश मे मार्गमधिकरणमण्डपस्य मार्गम् । [ इदं प्रकाशमाह । ]

शोध०–( ३२ ) एत्वेत्वार्या । एषोऽधिकरणमण्डपः । अत्र प्रविशत्वार्या ।

वृद्धा–( ३३ ) सुखं युष्माकं भवतु भावमिश्राणाम् ।

वृद्धा–( ३४ ) तथा ।

---

१ °हरेअं B B (abd) EK. २ °णमणु° AB (abcd); जोव्वण (जोव्वण) सुहमणु° D, जोव्वणमणुगग्र्भं K. ३ भविदं AB (bcd) FK. ४ आधि॰ AB (bc) D, अधिअल॰ B (ad). ५ °वसमिव AB (c) D, °प्पवसमेव B (a), ॰वसमिव B (bd) JK ६ धरहरेदि BCDEFK. ७ °अलण B (a). ८ Whole speech om G. ९ °कम्पतः K. १० °अलण AB (abc) DE; अधिअलमण्ड° ? B (d). ११ पविसदु AB (c); पविदु B (b); करविसदु K. १२ आधि॰ Here as well as throughout the next page D. १३ तधेत्युप॰ AB(abcd) K; तधा इत्यु॰ D.

शकारः । साक्षेपम् । आगदाशि बुड्ढकुट्टेणि, आगदाशि (३५) ।

अधिकरणिकः। अये, त्वं किल वसन्तसेनाया माता।

वृद्धा । अथ इं (३६) ।

अधिकरणिकः। अथेदानीं वसन्तसेना क्व गता।

वृद्धा । मित्तघरअं (३७) ।

अधिकरणिकः । किंनामधेयं तस्या मित्रम् ।

वृद्धा । स्वगतम् । हद्धी हद्धी । अदिलज्जणीअं क्खु एदं । [प्रकाशम् । जणस्स पुच्छणीओ अअं अत्थो । ण उण अधिअरणिअस्स (३८) ।

अधिकरणिकः । अलं लज्जया । व्यवहारस्त्वां पृच्छति ।

श्रेष्ठिकायस्थौ । ववहारो पुच्छदि । णत्थि दोसो । कधेहि (३९) ।

---

शका०–(३५) आगतासि वृद्धकुट्ट(कुट्टि)नि, आगतास्यागतासि ?।

वृद्धा– ( ३६ ) अथ किम् ।

वृद्धा–( ३७ ) मित्रगृह(म्) ।

वृद्धा–(३८) हद्धी हद्धी । हा धिक् हा धिक् । अतिलज्जनीयं खल्वेतत् । जनस्य पृच्छनीयः प्रष्टव्योयमर्थः । न पुनरधिकरणिकस्य ।

श्रे० का०–( ३९ ) व्यवहारः पृच्छति । नास्ति दोषः । कथय ।

---

१ °ति D. २ कुड B (a). ३ कुट्टिणि B (a) DH; कुट्टणिआ B (d). ४ °सेना- माता B B (a) ५ om. B B (a); हद्दि हद्दि D. ६ अदि om. B (b). ७ °णीअं AB (bc). ८ खु...to प्रकाशम् om. B (d). ९ अधि° AB (c) D. १० ण एत्थ B B (a); णत्थि H.

वृद्धा । कथं ववहारो । जेइ ऐव्वं ता सुणन्तु अज्जमिस्सा । सो क्खु सत्थवाहविणअदत्तस्स णत्तिओ साअरदत्तस्स तणओ सुगहिदणामहेओ अज्जचारुदत्तो णाम सेट्ठिचत्तरे पडिवसदि । तहिं मे दारिआ जोव्वणसुहं अणुभवादि (४०) ।

शकारः । शुदं अज्जेहिं । लिहीअंतु एदे अक्खला । चालुदत्तेण शह मम विवादे (४१) ।

श्रेष्ठिकायस्थौ । चारुदत्तो मित्ती त्ति णत्थि दोसो (४२) ।

अधिकरणिकः । व्यवहारोयं चारुदत्तमवलम्बते ।

श्रेष्ठिकायस्थौ । ऐव्वं विअ (४३) ।

---

वृद्धा—(४०) कथं व्यवहारः । यद्येवं तदा शृण्वन्त्वार्यमिश्राः । स खलु सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य तनयः सुगृहीतनामधेय आर्यचारुदत्तो नाम श्रेष्ठि( च )त्वरे प्रतिवसति । तत्र मे दारिका यौवनसुखमनुभवति ।

शका०—(४१)श्रुतमार्यैः । लिख्यतामेतान्यक्षराणि । चारुदत्तेन सह मम विवादे [विवादः] ।

श्रे० का०—(४२) चारुदत्तो मित्रमिति नास्ति दोषः ।

श्रे० का०—(४३) एवमिव ।

---

१ ववहालो B (ab). २ om. B B (a). ३ सार्दि० ? B (a). ४ विनद० AB (bc) F; विनयंतरस B (d). ५ सुग्गहिद AB (bcd) D. ६ चारु० AB (abc) D. ७ °चत्तरे B (a) ८ °सुहमसु० AB (abcd) CDJ. ९ सुदं AB (abcd) D. १० लिहीयन्तु AB (bc) FK; लिहीअंतु CJ. ११ चाड० AB (cd). १२ सह AB (abc) D, स मम ? B (d). १३ मित्तेत्ति AB (bc) DF. १४ णत्थि B (a). १५ अधि० D. १६ एवं K.

अधिकरणिकः । धनदत्त, वसन्तसेनार्यचारुदत्तस्य गृहं गतेति लिख्यतां व्यवहारस्य प्रथमः पादः । कथमार्यचारुदत्तोप्यस्माभिराह्वाययितव्यः । अथवा व्यवहारस्तमाह्वयति । भद्र शोधनक, गच्छ । आर्यचारुदत्तं स्वैरमसंभ्रान्तमनुद्विग्नं सादरमाहूय प्रस्तावेनाधिकरणिकस्त्वां द्रष्टुमिच्छतीति ।

शोधनकः । जं अज्जो आणवेदि । इति निष्क्रान्तश्चारुदत्तेन सह प्रविश्य च । एदु एदु अज्जो (४४) ।

चारुदत्तः । विचिन्त्य ।

परिज्ञातस्य मे राज्ञा शीलेन च कुलेन च ।
यत्सत्यमिदमाह्वानमवस्थामभिशङ्कते ॥ ८ ॥

सवितर्कं स्वगतम् ।

ज्ञातो नु किं स खलु बन्धनविप्रयुक्तो
मार्गागतः प्रवहणेन मयापनीतः ।
चारेक्षणस्य नृपतेः श्रुतिमागतो वा
येनाहमेवमभियुक्त इव प्रयामि ॥ ९ ॥

अथवा किं विचारितेन । अधिकरणमण्डपमेव गच्छामि । भद्र शोधनक, अधिकरणस्य मार्गमादेशय ।

---

अधि०—धनदत्तेति नाम कायस्थस्य ।

शोध०—(४४) यदार्य आज्ञापयतीति । एत्वेत्वार्यः ।

चा०—परिज्ञातस्येति । अनुष्टुप् ॥८॥ ज्ञात इति । वसन्ततिलका च्छन्दः । स आर्यकः ॥ ९ ॥

---

१ आधि० D. २ आहूय B (d). ३ °करणिस्त्वा B (b); णिक त्वा.. ...इच्छन्ति B (d). ४ वेदिनि AB (c); वेदिति B (d). ५ °स्थानभि° E ; °स्थानभि° K. ६ om. B (a) ; न खलु J. ७ मार्गे गतः AB (c) D ; °गतप्रवहणेन B (d). ८ अधिकरणमण्डपस्य B (d).

शोधनकः । एदु एदु अज्जो (४५) । इति परिक्रामतः ।

चारुदत्तः । सशङ्कम् । तत्किमपरम् ।

रूक्षस्वरं वासति वायसोय-
मामात्यभृत्या मुहुराह्वयन्ति ।
सव्यं च नेत्रं स्फुरति प्रसह्य
ममानिमित्तानि हि खेदयन्ति ॥ १० ॥

शोधनकः । एदु एदु अज्जो सैरं असंभन्तं (४६) ।

चारुदत्तः । परिक्रम्याग्रतोवलोक्य च ।

शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याभिमुखस्तथा ।
मयि चोदयते वाम चक्षुर्घोरमसंशयम् ॥ ११ ॥

पुनरन्यतोवलोक्य । अये कथमय सर्पः ।

---

शोध०—( ४५ ) एत्वेत्यार्यः ।

चारु०—चारुदत्तस्यानिष्टसूचकान्यपशकुनानीति बोध्यम् । रूक्षेति । वायसः काकः । वासति चञ्चुपुटः(?) मुखास्य विरौति । तत्रापि रूक्षस्वरं यथास्यात्तथा । सव्यं वामम् । अनिमित्तान्यपशकुनानि ॥ १० ॥

शोध०—( ४६ ) एत्वेत्यार्यः स्वैरमसंभ्रान्तम् ।

चारु०—शुष्केति । अनुष्टुप् । पूर्वार्धे चैकमपशकुनमुत्तरार्धे चापरमिति बोध्यम् ॥ ११ ॥

---

१ अज्ज AB (c) अज्जे B (b), २ °माति G ३ रुक्ष॰ J. ४ वाहति J. ५ पसय्ह? B (a), पसह्य B (d) ६ om from the Prâkrita and add next speech after चारुदत्तः as a stage direction स्वैरमसंभ्रान्तं परि॰ &c AB (c) DEG, स्वैरमसंभ्रान्त B (b). ७ om B (bd) ८ चक्षुर्घोरमसंशयम् K. ९ अपरेत्तर्धः (?) B (b)

मयि विनिहितदृष्टिर्भिन्ननीलाञ्जनाभः,
स्फुरितविततजिह्वः, शुक्लदंष्ट्राचतुष्कः ।
अभिपतति सरोषो, जिह्मिताध्मातकुक्षि-
र्भुजगपतिरयं मे मार्गमाक्रम्य सुप्तः ॥ १२ ॥

अपि चेदम् ।

स्खलति चरणं भूमौ न्यस्तं, न चार्द्रतमा मही
स्फुरति नयनं, वामो बाहुर्मुहुश्च विकम्पते ।
शकुनिरपरश्चायं तावद्विरौति हि नैकशः
कथयति महाघोरं मृत्युं न चात्र विचारणा ॥ १३ ॥

सर्वथा देवताः स्वस्ति करिष्यन्ति ।

शोधनकः । एदु एदु अज्जो । इमं अधिअरणमण्डवं पविसदु अज्जो (४७) ।

चारुदत्तः । प्रविश्य समन्तादवलोक्य । अहो अधिकरणमण्डपस्य परा श्रीः । इह हि

---

मयीति । मालिनी च्छन्दः । भिन्नः कज्जलराशिस्ततोऽधिकनील इत्यत आह भिन्नेति । नीलाञ्जनं कज्जलम् । अयं यः सर्पो मे मार्गमाक्रम्य सुप्तः स विनिहितेत्यादिपञ्चविशेषणविशिष्टो मय्यभिपततीत्यन्वयः । जिह्मिता वक्रिता ध्माता शब्दिता च कुक्षिर्येनेत्यर्थः ॥ १२ ॥ स्खलतीति । हरिणीप्लुता च्छन्दः । स्पष्टम् ॥ १३ ॥

शोध०—(४७) एत्वेत्यार्यः । इममधिकरणमण्डपं प्रविशत्वार्यः ।

---

१ विनिहत H. २ शुक्ल D. ३ जिह्मना॰ G. ४ ते H. ५ तावत् om. B (a). ६ महामृत्युं घोरं B (a); मेऽमृत्युघोरं (?) H. ७ अधिअरण॰ AB (abcd) DE. ८ मण्ड marg. पं B (d).

चिन्तासक्तनिमग्नमन्त्रिसलिलं, दूतोर्मिशङ्खाकुलं,
पर्यन्तस्थितचारनक्रमकरं, नागाश्वहिंस्राश्रयम् ।
नानावाशकककङ्कपक्षिरुचिरं, कायस्थसर्पास्पदं,
नीतिक्षुण्णतटं, च राजकरणं हिंस्रैः समुद्रायते ॥१४॥

भवतु । प्रविशञ्शिरोघातमभिनीय सवितर्कम् । अहह इदमपरम् ।

सव्यं मे स्पन्दते चक्षुर्विरौति वायसस्तथा ।
पन्थाः सर्पेण रुद्धोयं स्वस्ति चास्मासु दैवेतः ॥ १५ ॥

तावत्प्रविशामि । इति प्रविशति ।

अधिकरणिकः । अयमसौ चारुदत्तः । य एषः

चारु०—चिन्तेति । राजकरणमधिकरणम् । क्वचित्तु राजभवनमिति पाठः स्फुट एव । तद्धिंस्रैर्हिंसारुचिभिर्नरैरुपलक्षितं समुद्रायते । समुद्र इवाचरति समुद्रायते । 'कर्तुः क्यङ्' इति सूत्रेण क्यङ् । चिन्तायामासक्ता निमग्ना मन्त्रिण एव सलिलानि यत्र तत्तथा । दूता 'वकीला' एवोर्मयो महातरंगाः शङ्खाश्च तैराकुलम् । परितः स्थिताश्चारा भटा एव नक्रा मकराश्च यत्र तत् । येषां पादाश्वस्ताड्यया दीयन्ते ते नागा गजा अश्वाश्च त एव हिंस्रास्तेषामाश्रयः स्थानमित्यर्थः । नाना बहुप्रकारा वाशकाः शब्दं कुर्वाणाः कर्णेजयाः(पाः) पिशुना एव कङ्कपक्षिणस्तैः रुचिरम् । वाशृ शब्दे धातुः । नीतिरेव क्षुण्णं चूर्णीकृतमुन(च)नीनं तटं यत्र तत्तथा । [ शार्दूलविक्रीडितं छन्दः] ॥ १४ ॥ सव्यमिति । अनुष्टुप् । दैवेनेति दैवतोस्मासु स्वस्ति चास्तु ॥ १५ ॥

१ सलिलं om. D २ चाह० B (b) G ३ नामाश्व ? B (a), नागाश्व B (d) ४ हिंसा० D ५ °वाशक D, °वाशकक° H. ६ °भवनं B H (ad) EK. ७ स्पन्दति मे B (ad) ८ विदितिनं० H ९ om B (a). १० दैवतः GK. ११ आवि० H Here as well as throughout the next two pages.

घोणोन्नतं मुखमपाङ्गविशालनेत्रं
नैतद्धि भाजनमकारणदूषणानाम् ।
नागेषु गोषु तुरगेषु तथा नरेषु
नह्याकृतिः सुसदृशं विजहाति वृत्तम् ॥ १६ ॥

चारुदत्तः । भो, अधिकृतेभ्यः स्वस्ति । हंहो नियुक्ताः, अपि कुशलं भवताम् ।

अधिकरणिकः । ससंभ्रमम् । स्वागतमार्यस्य । भद्र शोधनक, आर्यस्यासनमुपनय ।

शोधनकः । आसनमुपनीय । एदं आसणं । एत्थ उवविसदु अज्जो (४८) ।

चारुदत्तः । उपविशति ।

शकारः । सक्रोधम् । आँगदेशि लेँ इत्थिआघादआ आगदेशि । अहो णाए ववहाले । अँहो धम्मे ववहाले । जं एदोह

घोणोन्नतमिति । घोणा नासोन्नता यं(य)त्र तन्मुखमपाङ्गविशालनेत्रं चास्ति । एतच्चारुदत्तरूपमकारणानां कारणशून्यानां दूषणानां दोषाणां भाजनं पात्रं हीति निश्चयेन नास्ति । आकृतिः स्वरूपं सुसदृशं स्व(स्वा)नुरूपं वृत्तमाचरणम् । [ वसन्ततिलकं वृत्तम् ] ॥ १६ ॥

शोध०–(४८) एतदासनम् । अत्रोपविशत्वार्यः ।

१ मुखमपाङ्ग० ?H. २ नैतद्धिभाज० AB B (abcd). ३ om. B (a). ४ एदे B (b). ५ आसने BCFJ. ६ अज्जे AB (c). ७ आगदे शि B. ८ रे AB (abcd) D. ९ इत्थिआ० AB (abcd) CDGJK ; figure 2 after घादआ G. १० अहो ·····हाले om. B (a). ११ जं एप अग्गाह AB (bc) ; ०एअं अग्गाह B (d), णएअ अंणाह ( =नैतदन्यस्य ) D, जं एअदाह CJ; जं एअं अगाह EK, एअ अग्गाह F; जं एअअणाह G, जं ण अइअं ? H.

इत्थिआघादेआह आशणे दीअदि । सगर्वम् । भोदु । णं दीअदु (४९) ।

अधिकरणिकः । आर्य चारुदत्त, अस्ति भवतोऽस्या आर्याया दुहित्रा सह प्रसक्तिः प्रणयः प्रीतिर्वा ।

चारुदत्तः । कस्याः ।

अधिकरणिकः । अस्याः । इति वसन्तसेनामातरं दर्शयति ।

चारुदत्तः । उत्थाय । आर्ये, अभिवादये ।

वृद्धा । जाद, चिरं मे जीअ । स्वगतम् । अअं सो चारुदत्तो । सुणिक्खित्तं क्खु दारिआए जोव्वणं (५०) ।

अधिकरणिकः । आर्ये, गणिका तव मित्रम् ।

चारुदत्तः । लज्जां नाटयति ।

---

शका०–(४९) आगतोसि रे स्त्रीघातक आगतोसि । अहो न्यायो(य्यो) व्यवहारो । अहो धर्मो(र्म्यो) व्यवहारो । यदेतदन्यस्य स्त्रीघातकस्यासनं दीयते । सगर्वम् । भवतु । ननु दीयताम् ।

वृद्धा– (५०) तात, चिरं मे जीव । अयं स चारुदत्तः । सुनिक्षिप्तं खलु दारिकया यौवनम् ।

---

१ इत्थिअ AB (ac) CDFJK, इत्थिये B (b), इत्तिआ B (d), इत्तिया E: इत्तिआ G. २ घादुआह AB (bcd) EGK, घातुका॰ DFH, घादकाह J. ३ दिज्जादि B (a) ४ सगव्वम् AB (bc) K; सगव्व pr. m. corr. सगव्वम् B (d). ५ om. B (d). दीअदु twice G. ६ प्रसक्तः B B (abd) GK; प्रक्तः E. ७ चिरे ? AB (bc) C, pr. m. correct चिरं B (d) ८ om. K. ९ चिरं AB (bc). १० दारिआए B (b). ११ This direction and next speech of शकार om. H.

शकारः ।

लज्जाए भीलुदाए वा
चालित्तं अलिए णिगूहिदुम् ।
शअं मालिअ अत्थकालणाए
ण्णिगूहदिण तं हि भट्टके ॥ १७ ॥(५१)

श्रेष्ठिकायस्थौ । अज्ज चारुदत्त, भणाहि । अलं लज्जाए । ववहारो क्खु एसो (५२) ।

चारुदत्तः । सलज्जम् । भो अधिकृता, मया कथमीदृशं वक्तव्यं यथा गणिका मम मित्रमिति । अथवा यौवनमत्रापराध्यति न चारित्र्यम् ।

---

शका०–(५१) [लज्जाए इति ।] लज्जयाथ वा भीरुतया वा चारित्रमलीकं निगूहितुं स्वयं स्त्रीं मारयित्वार्थकारणाय निगूहति न तद्धीं(द्धि) भट्टकः [वैतालीयं छन्दः] ॥ १७ ॥

श्रे० का०– (५२) आर्य चारुदत्त, भण । अलं लज्जया । व्यवहारः खल्वेषः ।

---

१ लज्जाए आदु भीलु० B (a) DEFGK. २ अलीए B (abcd). ३ निगूहिदुं ? B (bc); णिगूहदु B; णिगूहिदुं B (a); णिगूहीदुं B (d), णिगूहिदुं E; णिगूदुं K. ४ सअं B (a) D; सयं B (b) EK. ५ इत्थिअं मालिय B (a) DE, इत्थिए मलि० G; इत्थिअं मालिअ K. ६ अत्थकालणाए णिगूहदि B (a) DGJK which has अत्थ for अत्थ; °णिगेण्हदि B. ७ तं ण भ० B; नतं भ० B (a); न तं हि० C, नातं भ० B. (b); णहि भ० K. ८ भट्टको AB (bc), भट्टके B (a) CJ; भट्टके B (d) E; भट्टको F; नट्टके K. ९ om. B. १० °कृते AB; (bcd) G, °कृत K. ११ °त्रम् B (bd) EK.

अधिकरणिकः ।

व्यवहारः सविनोयं त्यज लज्जां हृदि स्थिताम् ।
ब्रूहि सत्यमलं धैर्यं छलमत्र न गृह्यते ॥ १८ ॥

अले लज्जया । व्यवहारस्त्वां पृच्छति ।

चारुदत्तः । अधिकृत, केन सह मम व्यवहारः ।

शकारः । साटोपम् । अले मए शह ववहाले (९३) ।

चारुदत्तः । त्वया सह मम व्यवहारः सुदुस्सहः ।

शकारः । अले इश्थिआघादआ, तं तादिशिं लअणशदभूशणिअं वशन्तशेणिअं मालिअ शम्पदं कवडकावडिके भविअ णिगूहेशि (९४) ।

चारुदत्तः । असबद्धः खल्वसि ।

अधिकरणिकः । आर्य चारुदत्त, अलमनेन । ब्रूहि सत्यम् । अपि गणिका तव मित्रम् ।

चारुदत्तः । एवमेव ।

---

अधि०– व्यवहार इति । अनुष्टुप् । स प्रसिद्ध । शास्त्रे लोके चेत्यर्थ. ॥ १८ ॥

शका०–(९३) अरे मया सह व्यवहार ।

शका०–(९४) अरे स्त्रीघातक, तां तादृशीं रत्न(त्न)शतभूषणां वसन्तसेनां मारयित्वा साम्प्रतं कपटकापटिको भूत्वा निगूहसि ।

---

१ आधि० D, From अधि० to मम व्यवहार (L 274) om E २ सविभाय AB (c) FG, ०भाय DH ३ ०कृते B (a) ४ om AB (bcd) D ५ अए B, अय B (bd), ववहालो AB (c) ६ अए BK, Om B (a) अये DH ओये G ७ इत्थिआ० AB (abc) CDGJK इत्थिघादआ B (d) ८ om B B (a) तलादि D ९ लयण K १० भूषणिय AB (bc) K भूषणीअ B (d) भूषिअ DH ११ ०कावडिके K १२ भाविअ G १३ ०सि D १४ ०त्रम् B DFGK, From this to मसीम (L 288) om G

अधिकरणिकः । आर्य, वसन्तसेना क्व ।

चारुदत्तः । गृहं गता ।

श्रेष्ठिकायस्थौ । कधं गदा, कदा गदा, गेच्छन्ती वा केण अणुगदा (९९) ।

चारुदत्तः । स्वगतम् । किं प्रच्छन्नं गतेति ब्रवीमि ।

श्रेष्ठिकायस्थौ । अज्ज, कधेहि (९६) ।

चारुदत्तः । गृहं गता । किमन्यद्ब्रवीमि ।

शकारः । मम केलकं पुप्फकलण्डकजिण्णुज्जाणं पवेशिअ अत्थणिमित्तं बाहुपाशबलक्कालेण मालिदा । अए शम्पदं वदाशि घलं गदे त्ति (९७) ।

चारुदत्तः । आः असंबद्धप्रलापिन्,

अभ्युक्षितोसि सलिलैर्न बलाहकानां
चापाग्रपक्षसदृशं भृशमन्तराले ।

---

श्रे० का०–(९९) कथं गता, कदा गता, गच्छन्ती वा केनानुगता ।

श्रे० का०–(९६) आर्य, कथय ।

शका०–(९७) मदीयं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्यार्थनिमित्तं बाहुपाशबलात्कारेण मारिता । अये साम्प्रतं वदसि गृहं गतेति ।

चारु०– अभ्युक्षितोसीति । चापस्य पक्षिणः पक्षाग्रं तत्सदृश-

---

१ गच्छन्ती DH. २ केरक B (a), केरकं H. ३ करण्डक AB (abc) E; करण्ड B (d), करण्डअ D. ४ om. E. ५ चाषाग्र AB (cd) F; चाप्याग्र K. ६ मन्तरा ते BEK; मन्तराले D.

मिथ्यैतदाननमिदं भवतस्तथाहि
हेमन्तपद्ममिव निष्प्रभतामुपैति ॥ १९ ॥

अधिकरणिकः । जनान्तिकम् ।

तुलनं चाद्रिराजस्य समुद्रस्य च तारणम् ।
ग्रहणं चानिलस्यैव चारुदत्तस्य दूषणम् ॥ २० ॥

प्रकाशम् । आर्यचारुदत्तः खल्वसौ । कथमिदमकार्यं करिष्यति । घोणेत्यादि (पृ० ३९९ श्लो० १६) पठति ।

शकारः । किं पक्खवादेण ववहाले दीशदि (५८) ।

अधिकरणिकः । अपेहि मूर्ख ।

वेदार्थान् प्राकृतस्त्वं वदसि न च ते जिह्वा निपतिता
मध्याह्ने वीक्षसेऽर्कं न नव सहसा दृष्टिर्विचलिता ।

---

मपि मेघानां बिन्दुभिर्नाभ्युक्षितः सिक्तोसि । उक्ष सेचने । अन्तराले गगने । सर्वं मिथ्या वदसि । अतः पापिनस्ते मुखं मलिनमित्याह । मिथ्यैतदाननमित्यादिना । [ वसन्ततिलकं छन्दः ] ॥ १९ ॥

अधि०—अकृतपापस्य सप्रभं मुखमिदं दृश्यतेतश्चारुदत्तस्य दूषणमसंभवमस्तमित्याह । तुलनमिति ॥ २० ॥ घोणेत्यादीति 'घोणोन्नतं मुखम्' इति श्लोकमित्यर्थः ।

शका०—(५८) किं पक्षपातेन व्यवहारो दृश्यतां(ते) ।

अधि०—वेदार्थानिति । प्राकृतो नीचः । असौ पाणिः । देहं हरति भूरिति भूमिर्विदीर्य कुतो न त्वां गिलतीत्यर्थः । [ सुमधुरा वृत्तम् ] ॥ २१ ॥

---

१ निष्प्रभता K २ चानिलस्यै० E ३ कथमकार्यं B B (a) ४ om. AB (c) DF. ५ दीसदि G. ६ आधि° D ७ अवेहि B (abd) DEG ८ कृतं त्व ? K. ९ निपतति h. १० वीक्ष्यसे° H (d), °क्षेऽर्कं K ११ तव न B (a)

दीप्तेऽग्नौ पाणिमन्तः क्षिपसि स च ते दग्धो भवति नो
चारित्र्याच्चारुदत्तं चलयसि न ते देहं हरति भूः॥२१॥
आर्यचारुदत्तः कथमकार्यं करिष्यति।

कृत्वा समुद्रमुदकोच्छ्रयमात्रशेषं
दत्तानि येन हि धनान्यनपेक्षितानि।
स श्रेयसां कथमिवैकनिधिर्महात्मा
पापं करिष्यति धनार्थमवीरजुष्टम्॥२२॥

शकारः। किं पक्खवादेण ववहाले दीशदि (५९)।

वृद्धा। हंदास, जो दाणिं णासीकदं सुवण्णभण्डअं रत्तिं चोरेहिं अवहदं त्ति तस्स कारणादो चदुस्समुद्दसारभूदं रअणावलिं देदि सो दाणिं अत्थकल्लवत्तस्स कारणादो इमं अकज्जं करेदि। हा जादे, एहि मे पुत्ति (६०)। इति रोदिति।

कृत्वेति। उदकेनोदकस्य योच्छ्रय उच्चैव शेषो यस्य तं समुद्रं समुद्रस्योदकमहत्त्वयैव-महत्त्वं न पुनः संपद्धिरित्यर्थः। अवीरैर्जुष्टं सेवितं पापम्। [ वसन्ततिलकं वृत्तम्]॥ २२॥

शका०-(५९) किं पक्षपातेन व्यवहारो दृश्यते।

वृद्धा-(६०) हताश, य इदानीं न्यासीकृतं सुवर्णभाण्डं रात्रौ चौरैरपहृतमिति तस्य कारणाच्चतुःसमुद्रसारभूतां रत्नावलीं ददाति स इदानीमर्थकल्यवर्तस्य कारणादिदमकार्यं करोति। हा जाते, एहि मे पुत्रि।

१ दीप्तोग्नौ ? H. २ न च ते तस्सणं दघातेसी BDEFK. ३ चलयसि K. ४ आर्यं corr. अर्थ B (d). ५ कथमयमकार्यं AB (bcd) DEFG ; कथमकार्यमयं K. J. ६ °न्यनिवेक्षितानि H ; °न्यपेक्षितानि J. ७ °वैदात्मा K. ८ °मवीरत्नु° G ; °मवैर-जुष्टम् AB (bc) J. ९ दीशदि A. १० हदास AB (abc). ११ णकिदं B (a), णासीकदं D. १२ रत्तिणो° DH. १३ °दत्ति BG; °वर्देते H. १४ कालण° AB (abc) D, कारणा om. दे B (d) ; कालणा E. १५ अत्थकारणादो H; अत्थकाल° B (a). १६ कारणा E ; कालणा K. १७ जाद B B (ad) EK. १८ पुत्त G १९ रोदति J.

अधिकरणिकः । आर्य चारुदत्त, किमसौ पद्भ्यां गतोत प्रवहणेनेति ।

चारुदत्तः । ननु मम प्रत्यक्षं न गता । तन्न जाने किं पद्भ्यां गतोत प्रवहणेनेति ।

प्रविश्य सामर्षो

वीरकः ।

पादप्पहारपरिभवविमाणणाबद्धगरुअवेरस्स ।
अणुसोअन्तस्स इयं कधं पि रत्ती पभादा मे ॥ २३ ॥

ता जाव अधिअरणमण्डवं उवेसप्पामि । प्रविष्टकेन । सुहं अज्जमिस्साणं (६१) ।

अधिकरणिकः । अये, नगररक्षाधिकृतो वीरकः । वीरक, किमागमनप्रयोजनम् ।

वीरकः । ही ही बन्धणभेअणसम्भमे अज्जकं अण्णे-

---

वीर०–(६१) पादप्पहारेति । आर्या च्छन्दः । पादप्रहारपरिभवविमाननाबद्धगुरुकवैरस्य । अनुशोचत इयं कथमपि रात्रिः प्रभाता मे ॥ २३ ॥ तद्यावदधिकरणमण्डपमुपसर्पामि । सुखं शुभमिति चार्यमिश्राणाम् ।

वीर०–(६२) ही ही बन्धनभेदनसंभ्रमे आर्यकमन्वेषयन्नपवारितं प्रवहणं व्रजतीति विचारं कुर्वन्नन्वेषयन् अरे, त्वयाप्यालोकितं मयाप्यालोकितव्यमिति भणन्नेव चन्दनमहत्तरकेण पादेन ता-

---

१ Whole speech om B (a) २ मामर्शक B (a), सामर्शो B (d) h ३ वीरक twice H ४ विमाणिणा DH ५ लद्ध(=लब्ध B B (abd) ६ गुरुअ D ७ °सो अअ तस्स B (a) ८ इअ B B (d) DH ९ वि B (d), वि D १० रत्ति H ११ उव° om B (a) १२ प्रविश्य B B (abd) LHK १३ आधि० D १४ om B (d). १५ om AB (c) J. १६ बन्धणभद अज्जक h, ०भअण० D, ०सभो G. १७ अक्कज्जं B (a), अज्जाक B (b) १८ अणे० H

सन्तो ओवाडिदं पवहणं वेचदि त्ति विआरं करन्वो अण्णेसन्तो अरे, तुए वि आलोइदे मए वि आलोइदव्वो त्ति भणन्तो ज्जेव्व चन्दणमहत्तरएण पादेण ताडिदो म्हि । एदं सुणिअ अज्जमिस्सा पमाणं (६२) ।

अधिकरणिकः । भद्र, जानीषे कस्य तत्प्रवहणमिति ।

वीरकः । इमस्स अज्जचारुदत्तस्स । वसन्तसेणा ओरूढा पुष्फकरण्डजिण्णुज्जाणं कीलिदुं णीअदित्ति पवहणवाहेएण कहिदं (६३) ।

शकारः । पुणो वि शुदं अज्जेहिं (६४) ।

अधिकरणिकः ।

एष भो निर्मलज्योत्स्नो राहुणा ग्रस्यते शशी ।
जलं कूलावपातेन प्रसन्नं कलुषायते ॥ २४ ॥

---

डितोऽस्मि । एतच्छ्रुत्वार्यमिश्राः प्रमाणम् ।

वीर०–(६३) अस्यार्यचारुदत्तस्य । वसन्तसेनारूढा पुष्पकरण्डकजीर्णोद्यानं क्रीडितुं नीयत इति प्रवहणवाहकेन कथितम् ।

शका०–(६४) पुनरपि श्रुतमार्यैः ।

अधि०– एष भो इति । अनुष्टुप् । एष चारुदत्तः । अप्रस्तुतप्रशंसालंकारः ॥ २४ ॥

---

१ ओव्वाडि० AB (bcd) F; ओहारिअं B; सुओव्वाडिदं E, अणुग्घाडिदं K. २ वज्जदि B (a); वहदि K. ३ करेन्तो K. ४ अलो० CJ. ५ ०त्तलएण AB (abcd) DE. ६ इदमस्स H (a). ७ आरूढा AB (c). ८ पुप्फ° B (b). ९ कालिदुं E. १० णिअदि E. ११ वाहुएण H. १२ सुदं AB (abcd) H. १३ अज्जमिस्सेहिं B H (a). १४ °ज्योत्स्नो E. १५ अलं DF.

वीरक, पश्चादिह भवतो न्यायं द्रक्ष्यामः । यो एषोधिकरणद्वार्यश्वस्तिष्ठति तमेनमारुह्य गत्वा पुष्पकरण्डकोद्यानं दृश्यतामेस्ति तत्र काचिद्विपन्ना स्त्री न वेति ।

वीरकः । जं अज्जो आणवेदि । इति निष्क्रान्तः । प्रविश्य च । गदोम्हि तहिं । दिट्ठं च मए इत्थिआकलेवरं सावदेहिं विलुप्पन्तं (६५) ।

श्रेष्ठिकायस्थौ । कधं तुए जाणिदं इत्थिआकलेवरं त्ति (६६) ।

वीरकः । सावसेसेहिं केसहत्थपाणिपादेहिं उवेलक्खिदं मए ( ६७ ) ।

अधिकरणिकः । अहो धिक् वैषम्यं लोकव्यवहारस्य ।

यथा यथेदं निपुणं विचार्यते
तथा तथा संकटमेव दृश्यते ।

---

वीर०—( ६५ ) यदार्य आज्ञापयति । गतोऽस्मि तत्र । दृष्टं च मया स्त्रीकलेवरं श्वापदैर्विलुप्तम् ।

श्रेष्ठी(ष्ठि)०— ( ६६ ) कथं त्वया ज्ञातं स्त्रीकलेवरमिति ।

वीर०— ( ६७ ) सावशेषैः केशहस्तपाणिपादैरुपलक्षितं मया ।

अधि०—यथेति । व्यवहारस्य न्यायस्य नीतयः सुसन्नाः ।

---

१ om. E (a) २ °करणे BFG. ३ तत्रास्ति G. ४ स्त्री विपन्ना B B (a). ५ From this to कलेवर त्ति ( L. 351 ) om. E. ६ om. B (d) ७ इत्थिआ°AB (c) D, इत्थिआ° B (d) K. ८ सावदे° H ९ विलुप्पं AB (c) DF, विलुप्पन्तं B (d) K. १० कलेवरत्ति DK ११ सावसेहिं D १२ °पाणिपादएहिं AB (bcd) DEFG, पाणिपादेहिं B (a) K. १३ उप० B (d) EK, १४ om B (d).

अहो सुसन्ना व्यवहारनीतयो
मतिस्तु गौः पङ्कगतेव सीदति ॥ २५ ॥

**चारुदत्तः ।** स्वगतम् ।

यथैव पुष्पं प्रथमे विकाशे
समेत्य पातुं मधुपाः पतन्ति ।
एवं मनुष्यस्य विपत्तिकाले
छिद्रेष्वनर्था बहुलीभवन्ति ॥ २६ ॥

**अधिकरणिकः ।** आर्य चारुदत्त, सत्यमभिधीयताम् ।

**चारुदत्तः ।**

दुष्टात्मा परगुणमत्सरी मनुष्यो
रागान्धः परमिह हन्तुकामबुद्धिः ।
किं यो यद्वदति[1] मृषैव जातिदोषा-
त्तद्ग्राह्यं भवति न तद्विचारणीयम् ॥२७॥

अपि च ।

योऽहं लतां कुसुमितामपि पुष्पहेतो-
राकृष्य नैव कुसुमावचयं करोमि ।

---

यस्माम तत्कर्तव्यमेवेत्यर्थः । अत एवाह । मतिरिति । ब्राह्मणत्वाद्यपी-त्यर्थः । [वंशस्थमिदं छन्दः] ॥ २५ ॥

चा०—यथैवेति । पुष्पं पातुं पतन्ती (न्ति) त्यन्वयः । [ उपजातिछन्दसा श्लोकः ] ॥ २६ ॥

अधि०—दुष्टात्मेति । प्रहर्षिणी च्छन्दः । स्पष्टम् ॥ २७ ॥

योहमिति । [वसन्ततिलकं वृत्तम्] ॥ २८ ॥

---

[1] यो वदति G.

सोऽहं कथं भ्रमरपक्षरुचौ सुदीर्घे
केशे प्रगृह्य रुदतीं प्रमदां निहन्मि ॥ २८ ॥

शकारः । हंहो अधिअलणभोइआ, किं तुम्हे पक्खवादेण ववहालं पेक्खध । जेण अज्ज वि एशे हदाशचालुदत्ते आशणे धालीअदि (६८) ।

अधिकरणिकः । भद्र शोधनक, एवं क्रियताम् ।

शोधनकस्तथा करोति ।

चारुदत्तः । विचार्यतां भो अधिकृताः, विचार्यताम् ।

इत्यासनादवतीर्य भूमावुपविशति ।

शकारः । स्वगतम् । सहर्षं नर्तित्वा । ही अणेण मए कडे पावे अण्णश्श मत्थके णिवडिदे । ता जहिं चालुदत्ताके उवविशेदि तहिं हगे उवविशामि । तथा कृत्वा । चालुदत्ता, पेक्ख पेक्ख मं । ता भण भण मए मालिदे त्ति (६९) ।

शका०—(६८) हंहो अधिकरणभोजकाः, किं युष्माकं (यूयं) पक्षपातेन व्यवहारं पश्यत । येनाद्याप्येष हताशचारुदत्त आसने धार्यते ।

शका० — (६९) ही अनेन । मदीयच्छद्मकरणेनेत्यर्थः । मया कृतं पापमन्यस्य मस्तके निपतितम् । तदत्र चारुदत्त उपविशति तत्राहमुपविशामि । चारुदत्त, पश्य माम् । तद्भण भण मया मारितेति ।

१ विगृह्य B B (abd) K. विमृश्य E. २ आधि० D. ३ हदाश D, हदाशे K. ४ चारुदत्ते D. ५ धालिदि E ६ अधिकृते B (a). ७ om: D ८ अण्णेश्श B. ९ om: B (d) E. १० मत्थके AB (bc) G, मत्थयके B (a), मस्तके B (d) ११ णिवडिदे CJ. १२ चालुदत्ते B (d), चारुदत्त K. १३ विशेदि K. १४ हगे AB (bcd) DEK. १५ चारुद० DEK. १६ om E. १७ om: B (a). १८ मालिदेत्ति AB (c) DF; मालिदत्ति B, मालिदत्ति B (abd) EGK.

**चारुदत्तः** । भो अधिकृताः, दुष्टात्मेति पूर्वोक्तं (श्लो० २७) पठति । सनिश्वासं स्वगतम् ।

मैत्रेय भोः, किमिदमद्य ममोपघातो
हा ब्राह्मणि, द्विजकुले विमले प्रसूता ।
हा रोहसेन, नहि पश्यसि मे विपत्तिं
मिथ्यैव नन्दसि परव्यसनेन नित्यम् ॥ २९ ॥

प्रेषितश्च मया तद्वार्त्तान्वेषणाय मैत्रेयो वसन्तसेनासकाशं शाकटिकानिमित्तं च । तस्य मदत्तान्यलंकरणानि प्रत्यर्पयितुम् । तत्कथं चिरयते ।

ततः प्रविशति गृहीताभरणो विदूषकः ।

**विदूषकः** । पेसिदोम्हि अज्जचारुदत्तेण वसन्तसेणासआसं तहिं अलंकरणाइं गेण्हिअ । जधा अज्ज मित्तेअ, वसन्तसेणाए वच्छो रोहसेणो अत्तणो अलंकारेण अलंकरिअ जणणीसआसं पेसिदो । इमस्स आहरणं दादव्वं ण उणं गेण्हिदव्वं । ता

---

चारु०— विदूषकं मित्रं स्मृत्वाह । मैत्रेयेति । धूतानाम्नीं पत्नीं स्मृत्वाह ब्राह्मणीति । रोहसेनः पुत्रः । परेण व्यसनेनोपलक्षितोपि त्वं नित्यं मिथ्यैव नन्दसि । [पूर्वोक्तं छन्दः] ॥ २९ ॥

विदू०— (७०) प्रेषितोस्म्यार्यचारुदत्तेन वसन्तसेनासकाशं तत्रालंकरणानि गृहीत्वा । यथार्य मैत्रेय, वसन्तसेनाया(नया) वत्सो रोहसेनोलंकारेणालंकृत्य जननीसकाशं प्रेषितः । अस्या [आ] भरणं दातव्यं न पुनर्गृहीतव्यम् । तत्समर्पयेति । तद्यावद्वसन्तसेनासकाशमेव

---

१ ब्राह्मणी K. २ निजकुले K. ३ परिव्यसनेन B (d). ४ प्रत्यर्पितुम् DH. ५ वसन्तसेना E. ६ ◦करणानि B (d) GK. ७ वत्स DA. ८ om: AB (bc)D. ९ अलंकिदो K. १० om: E

समप्पेहि त्ति । ता जाव वसन्तसेणासआसं ज्जेव्व गच्छामि । परिक्रम्यावलोक्य चाकाशे । केधं भाव रेभिलो । भो भाव रेभिल, किं णिमित्तं तुमं उव्विग्गो उव्विग्गो विअ लक्खीअसि । आकर्ण्य । किं भणासि पिअवअस्सो चारुदत्तो अधिअरणमण्डवं सद्दावीअदि त्ति । ता णं हु अप्पेण कज्जेण होदव्वं । विचिन्त्य । ता पच्छा वसन्तसेणासआसं गमिस्सं । अधिअरणमण्डवं दाव गमिस्सं । परिक्रम्यावलोक्य च । इदं अधिअरणमण्डवं । ता जाव पविसामि । प्रविश्य । सुहं अधिअरणभोइआणं । कहिं मम पिअवअस्सो (७०) ।

अधिकरणिकः । नन्वेष तिष्ठति ।

गच्छामि । अस्य रोहसेनस्य दातव्यमाभरणं त्वया गृ(म)हीतुं योग्यं नेत्यर्थः । रोहसेनखेलनमृच्छकटिकापूरितानीमानीभूषणानि वसन्तसेनयेत्यादि स्मरणीयम् । तेषामेषां बहुत्वात्प्रत्यर्पणम् । वसन्तसेनया तु सुवर्णशकटिकार्थे रुदतो रोहसेनस्य लालनं कृतमित्यादि ध्येयम् । किंनिमित्तं त्वमुद्विग्न उद्विग्न इव लक्ष्यसे । किं भणसि प्रियवयस्यश्चारुदत्तोऽधिकरणमण्डपं सद्दावीअदि आहूयते इति । तन्न खल्वल्पेन कार्येण भवितव्यम् । तत्पच्छा पश्चात् । वसन्तसेनासकाशं गमिष्यामि । अधिकरणमण्डपं तावद्गमिष्यामि । अयमधिकरणमण्डपः । तावत्प्रविशामि । सुखमधिकरणभोजकानाम् । कुत्र मम प्रियवयस्यः ।

१ च om. B B (ad). २ कधं B (a) ३ रेभिलः AB (abcd) ४ निमित्ते AB (c) ५ उव(उण)तुमं B (a). ६ उव्विग्गहृ॰ AB (bc) G. उव्विग्गो B (d) ७ उव्विग्गो B (d) om DHK ८ om: B B (a) ९ अज्जचारुदत्तो BB (a) १० अधिअरणं B B (a) ११ सद्दावीअदि B (d); सद्दावीअदि E. १२ लहुएण D. १३ ॰हं B B (a) १४ भोइआणं H * One leaf from this missing I

विदूषकः । वअस्स, सोत्थि दे (७१) ।

चारुदत्तः । भविष्यति ।

विदूषकः । अवि क्खेमं दे (७२) ।

चारुदत्तः । एतदपि भविष्यति ।

विदूषकः । भो वअस्स, किंणिमित्तं उव्विग्गो उव्विग्गो विअ लक्खीअसि । कुदो वा सद्दाइदो (७३) ।

चारुदत्तः । वयस्य,

मया खलु नृशंसेन परलोकमजानता ।
स्त्री रतिर्वाविशेषेण शेषमेषोऽभिधास्यति ॥३०॥

विदूषकः । किं किम् (७४) ।

चारुदत्तः । कर्णे । एवमेवम् ।

विदूषकः । को एव्वं भणादि (७५) ।

---

विदू०– (७१) वयस्य, स्वस्ति ते ।

विदू०– (७२) अपि क्षेमं ते ।

विदू०– (७३) भो वयस्य, किंनिमित्तमुद्विग्न उद्विग्न इव लक्ष्यसे । कुतो वाहूतः ।

चारु०–मया खल्विति । अनुष्टुप् ॥ ३० ॥

विदू०– (७४) किं( किं किम् ) ।

विदू०–(७५) क एव(वं) भणति ।

---

१ भो B (a); भोदु B (d). २ नदरि D. ३ वअस्स AB (bc) CFJ. ४ उग after णिमित्तं B B (a). ५ उव्विग्ग B B (ad) G. om. D K. ६ सद्दाविदो DHK. ७ °श्चाविशेषेण B B (abd) GK. ८ om. B (d) K. ९ एवमिति BB (a).

चारुदत्तः । संज्ञया शकारं दर्शयति । नन्वेष तपस्वी हेतुभूतः कृतान्तो मां व्याहरति ।

विदूषकः । जनान्तिकम् । एव्वं कीस ण भणीअदि गेहं गेदे त्ति (७६) ।

चारुदत्तः । उच्यमानमप्यवस्थादोषान्न गृह्यते ।

विदूषकः । भो भो अज्जा, जेण दाव पुरट्ठावणविहारारामदेउलतडागकूवजूवेहिं अलङ्किदा णअरी उज्जइणी सो अणीसो अत्थकल्लवत्तकारणादो एरिसं अकज्जं अणुचिट्ठदि त्ति । सक्रोधम् । अरे रे काणेलीसुदा, राअसालसण्ठाणआ,

---

चारु०—कृतान्तो यमराजः । व्याहरन्ति(ति) । वसन्तसेना मया मारितेति वदतीत्यर्थः ।

विदू०—( ७६ ) एव(वं) किमर्थं न भण्यते गृहं गतेति ।

चारु०—अवस्थाया दारिद्र्यरूपायाः । दोषात् ।

विदू०— ( ७७ ) भो भो आर्याः, येन तावत्पुरस्थापनविहारारामदेवालयतडागकूपयूपैरलंकृता नगर्युज्जयिनी सोनीशोर्थकल्यवर्तकारणादीदृशमकार्यमनुतिष्ठतीति । पुरस्थापनं पुरावस्थितिः। विहारो जैनमन्दिरम् । आराम उपवनम् । अरे रे काणेलीसुव(त),

---

१ संज्ञा? J. २ निर्दिशति B B (a). ३ om. B B (a). ४ एवं B B (ad) K. ५ कीश K. ६ गदुत्ति BFK, गदेत्ति H. ७ जेन CJ; तेण B (d). ८ जाव D; ताव H. ९ पुरत्थावण AB (c) DF; वत्थावण B (b). १० विहार K. ११ देउल AB (bc); देउलेहिं B B (a). १२ तडागकूवेहिं B B (a), °कूवेहिं marg. °वजू B (d). १३ °जूवेहिं णोहिअणअरी &c. K. १४ om. B B (a). १५ उज्जअणी AB B (abcd) FG, उज्जइणी H. १६ om. B B (ad), °अणो(=अन) DH. १७ कल्लवत्त B (d). १८ काल° K, कारणदो AB (ac); कारणादि° B (d). १९ ईदिसं BDG; ईदसं K. २० °णिचिट्ठदि B (ad). २१ °साल B; °साल K.

दुस्संकणआ, किदजणदोसभण्डआ, बहुसुवण्णमण्डिदमक्कडआ, भण भण मम अग्गदो । जो दाणिं मम पिअवअस्सो कुसुमिदं माधवीलदं पि आअट्टिअ कुसुमावचअं ण करेदि कदा वि आअट्टिदाए पल्लवच्छेदो भोदि त्ति सो कधं ऐरिसं अकज्जं उहअलोअविरुद्धं करेदि । चिट्ठ रे कुट्टणिउत्ता, चिट्ठ जाव एदिणा तव हिअअकुडिलेण दण्डअट्ठेण मत्थअं दे सदखण्डं करेमि (७७) ।

शकारः । सक्रोधम् । शुणन्तु शुणन्तु अज्जमिश्शा । चालुदत्ताकेण शह मम विवादे ववहाले वा । ता कीश एशे काक-

---

राजश्यालसंस्थानक, दुःशकुन, कृतजनदोषभाण्ड, बहुसुवर्णमण्डितमर्कटक, भण भण ममाग्रतः । य इदानीं मम प्रियवयस्यः कुसुमिता(तां) माधवीलतामप्याकृष्य कुसुमावचयं न करोति कदाप्याकृष्टतया पल्लवच्छेदो भवतीति स कथमीदृश अ(म)कार्यमुभयलोकविरुद्धं करोति । तिष्ठ रे कुट्टिनीपुत्र, यावदेतेन तव हृदयकुटिलेन दण्डकाष्ठेन मस्तकं ते शतखण्डं करोमि ।

शका०— (७८) शृण्वन्तु शृण्वन्त्वार्यमिश्राः । चारुदत्तकेन

---

१ दुस्संखणआ AB (abc) FGK ; दुस्सं° B ; उस्सुड्डलआ J. D. २ भण्डआ AB (abc) D (=भाण्ड AB (c); भण्डणआ G. ३ मढिदा मक्क H ; om: K. ४ मक्कडअ AB (bc) D. ५ भण मम ? K. ६ °लदं वि B (a) H. ७ आअंचिअ BF (=आकृष्य AB (c); आअड्डिअ B (b) ; आवचिअ H , आभारिअ K. ८ चयं AB (bc) K. ९ आअअत्ताए AB (c) F (=आकृष्टतया) ; आअट्टदाए B (a) DH ; °इताए B (b) G ; अअवत्ताए K. १० छेद AB (c) ; छेओ B (bd) DFH K. ११ एसं (रि om.) B (a) ; इदीसं K. १२ कुट्टिणि B (a) D ; कट्टणि G. १३ चिट्ठचिट्ठ BB (a) ; om: AB (bcd) D. १४ °कट्ठे° B (a) D. १५ मउअं B (d) H. १६ शुणन्तु॰ AB (abcd) K; शुणेदु DH. १७ °मिस्सा AB (abcd) K. १८ चारु° AB (abc) DK. १९ सह H. २० मह K.

पदशीशमेश्तका मम शिले शदखण्डे कलेदि। मा दाव। ले दाशीए उत्ता, दुश्टबडुव्वका (७८)।

विदूषकः। दण्डकाष्ठमुद्यम्य पूर्वोक्तं पठति।

शकारः। सक्रोधमुत्थाय ताडयति।

विदूषकः। प्रतीपं ताडयति।

अन्योन्यं ताडयतः। विदूषकस्य कक्षादेशादाभरणानि पतन्ति।

शकारः। तानि गृहीत्वा दृष्ट्वा ससाध्वसम्। पेक्खन्तु पेक्खन्तु अज्जा। एदे क्खु ताए तवश्शिणीए केलका अलंकाला। चालुदत्त-

---

सह मम विवादो व्यवहारो वा। (वा) तत्। किमर्थमेव काकपदशीर्षमस्तको दुष्टबटुको मम शिरः शतखण्डं करोति। मा तावत्। रे दास्याः पुत्र, दुष्टबटुक।

विदू०–पूर्वोक्तं भो भो अज्जा इति। अरे रे काणेलीसुतेत्यादि च।

शका०–(७९) पश्यन्तु पश्यन्त्वार्याः। एते खलु तस्यास्तपस्विन्या अलंकाराः। तस्या वसन्तसेनायाः। (तपस्विन्याः) शोच्यायाः। केलका तदीया इत्यर्थः। अस्य चारुदत्तस्य। अयंकल्यपतैस्य कारणाय। एषा मारिता व्यापादिता च। एषा वसन्तसेनेत्यर्थः।

---

१ °मस्तका AB (bcd) K, मत्थका B (a) J, मत्थआ DH. After this add दुश्टबडुका AB (c) FG, दुश्टबडुक्का B (b), दुश्टबडुअका B (d) दुश्टबडुआ DH. २ मण B (a) K. ३ शीश B (d) ४ शदखंडं B (a). ५ कलेशि B B (a) ६ अले D ७ दाशीपुत्ता G. ८ दुश् AB (abcd) DGJK. ९ °बडुका AB (c), °बडुक्का B (b), °बडुअका H (d); °बडुआ D; °बडुका K १० For पूर्वोक्त &c एदेशा तव &c. last page D. ११ From पश्यन्त्वा ... व्यापादिता (L. 447) om. B (a) १२ क्खु DJ. १३ om. B B (abd) Gk; पेक्खन्दु प० DH. १४ तवश्शीए AB (bc), तवश्शिणीए DH. १५ °काला BDK.

मुद्दिश्य। इमस्सि अत्थकल्लवत्तस्सि कालणादो एशा मालिदा वावादिदा अ (७९)।

अधिकृताः सर्वेधोमुखाः स्थिताः।

**चारुदत्तः।** जनान्तिकम्।

अयमेवंविधे काले दृष्टो भूषणविस्तरः।
अस्माकं भाग्यवैषम्यात्पतितः पातयिष्यति ॥ ३१ ॥

**विदूषकः।** भो कीसं भूदत्थं ण णिवेदीअदि (८०)।

**चारुदत्तः।** वयस्य,

दुर्बलं नृपतेश्चक्षुर्नैतत्तत्त्वं निरीक्षते।
केवलं वदतो दैन्यमश्लाघ्यं मरणं भवेत् ॥ ३२ ॥

**अधिकरणिकः।** कष्टं भोः कष्टम्।

अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः।
ग्रहोयमपरः पार्श्वे धूमकेतुरिवोत्थितः ॥ ३३ ॥

चारु०—अयमेवमिति। अनुष्टुप्। पतितः विदूषककक्षादेशात्। मां पातयिष्यति ॥ ३१ ॥

विदू०— ( ८० ) भो किमर्थं भूतार्थो न निवेद्यते।

चारु०—दुर्बलमिति। अनुष्टुप्। मया न मारितेति वदतः ॥३२॥

अधि०—अङ्गारकेति। अङ्गारक(को) मङ्गलस्तेन सह विरुद्धस्य। अङ्गारको विरुद्धो यस्येति सम्यगर्थः। इयमप्रस्तुतप्रशंसालंकृतिः। अङ्गारक इव शकारः। बृहस्पतिवच्चारुदत्तः। विदूषककक्षदेशादलंकारपातो धूमकेतुरिवेत्यादि ध्येयं धीवरैः(?) ॥३३॥

१ ०स्स K. २ कालणा एशा B; काणाए एशा B (d), कालणाए एशा AB (abc) DFG. ३ अधिकृता AB (cd); अधिकरणिकाः B; आधि० H (b). ४ दृष्टे (sic.) K. E continues from this. ५ कीस AB (abcd) DEK. ६ णिवेदीयदि AB (bc); °यति K. ७ निवेद्यते? G. ८ om: B (d).

श्रेष्ठिकायस्थौ । विलोक्य वसन्तसेनामातरमुद्दिश्य । अवहिदा दाव अज्जा एदं सुवण्णभण्डअं अवलोएदु सो ज्जेव्व एसो ण वेत्ति ( ८१ ) ।

वृद्धा । अवलोक्य । सरिसो एसो । ण उण सो (८२) ।

शकारः । आं वुड्ढकुट्टणि, अक्खीहि मन्तिदं वाआए मूकिदम् (८३) ।

वृद्धा । हदास, अवेहि (८४) ।

श्रेष्ठिकायस्थौ । अप्पमत्तं कधेहि सो ज्जेव्व एसो ण वेत्ति (८५) ।

वृद्धा । अज्ज, सिप्पिकुसलदाए ओबन्धेदि दिट्ठिं । ण उण सो (८६) ।

---

श्रे० का०—( ८१ ) अवहिता तावदार्यैतत्सुवर्णभाण्डमवलोकतां तदेवैतन्नवेति ।

वृद्धा—( ८२ ) सदृश एषः । न पुनः सः ।

शका०—( ८३ ) आं वृद्धकुट्टिनि, अक्षिभ्यां मन्त्रितं वाचा मूकितम् ।

वृद्धा—( ८४ ) हताश, अपेहि ।

श्रे०का०—(८५) अप्रमत्तं कथय स एवैष न वेति । एवोऽलंकारः ।

वृद्धा—( ८६ ) आर्य, शिल्पिकुशलतयावबध्नाति दृष्टिम् । न पुनः सः ।

---

१ om: B B (e) २ अवलोअदु AB (bcd) DEK ३ Four speeches om: G ४ विलोक्य B B (a) ५ एसो twice AB (bcd), om: B (a) H ६ om: B (a), आ B (d); आ EK ७ °कुट्टिणि B (a) B ८ अवक्खीहिं DH ९ मन्दिदं DH १० Pr. m. मूकिद corr. मूकिद B (d), मूकिदं E ११ कहेहि D १२ अज्ज B (b) १३ सिप्पि° B (a) १४ ओबन्धे दिट्ठिं AB (c) CJ

अधिकरणिकः । भद्रे, अपि जानास्येतान्याभरणानि ।

वृद्धा । णं भणामि । णं हु ण हु अण्णदो अंह कदा वि सिप्पिणा घडिदो भवे (८७) ।

अधिकरणिकः । पश्य श्रेष्ठिन्,

वस्त्वन्तराणि सदृशानि भवन्ति नूनं
रूपस्य भूषणगुणस्य च कृत्रिमस्य ।
दृष्ट्वा क्रियामनुकरोति हि शिल्पिवर्गः
सादृश्यमेव कृतहस्ततया च दृष्टम् ॥ ३४ ॥

श्रेष्ठिकायस्थौ । अज्जचारुदत्तस्स केरकाइं ऐदाइं (८८) ।

चारुदत्तः । न खलु न खलु ।

श्रेष्ठिकायस्थौ । ता कस्स (८९) ।

---

वृद्धा–(८७) ननु भणामि । न खलु न खलु अन्यतोऽथ कदापि केनापि शिल्पिना घटितो भवेत् ।

अधि०–वस्त्व(स्त्व)न्तराणीति । कृतहस्तता शिल्पकुशलता हस्तलाघवमित्यर्थः । अत एव 'कृतहस्ततया रिपुकुलमिषुवर्षेणाभिपात्य' इत्युक्तं दशकुमारे-(प्रथमोच्छ्वासेपहारवर्मकृते धनमित्रवर्णने) । हस्तशब्देन हस्तादिशिल्पम् । कृतपदेन बहुव्रीहिः । [वसन्ततिलकमिदं छन्दः] ॥ ३४ ॥

श्रे० का०–(८८) आर्यचारुदत्तस्य केरकाणि तदीयान्येतानि ।

श्रे० का०–(८९) तदा कस्य ।

---

१ एना० B (d). २ ण हु once AB (c) D; णंहु H. ३ अणदो (=अन्यतः) AB (c); अण्णाणदो B (b); अभिणदो [illegible] (d); अंणदो H. अणभिजाणिदो J. ण भाणिदो K. ४ अहअ B (d). ५ केणावि सि० AB (c) DGK केणवि सि० B (bd). ६ घडिदा AB (bc) ; घडिदा DF ; पडिदा H. ७ शिल्प० ? AB (bc). ८ हस्त० G. ९ om. B (d). १० केरकाणि AB (bcd) DEFGK. केरणाणि B (a): ११ एदाणि AB (bcd) DEGK ; एदानि F. १२ Two speeches om. G.

चारुदत्तः । इहात्रभवत्या दुहितुः ।

श्रेष्ठिकायस्थौ । कधं एदाइं ताए विओअं गदाइं (१०)।

चारुदत्तः । एवं गतानि । आं इदम् ।

श्रेष्ठिकायस्थौ । अज्ज चारुदत्त, एत्थ सच्चं वत्तव्वं । पेक्ख पेक्ख ।

सच्चेण सुहं क्खु लब्भइ सच्चालावे ण होइ पावं ।
सच्चं त्ति दुवे वि अक्खरा मा सच्चं अलिएण गूहेहि ॥३९॥ (११)

---

चारु०— अत्रभवत्याः पूज्यायाः ।

श्रे० का०—(१०) कथमेतानि तस्या वसन्तसेनायाः वियोगं गतानि ।

चारु०— एवं गतानीति । 'सुवर्णशकटि(का)यै रोदनं कुर्वन्रोहसेनः समलंकृत्य प्रेषितो वसन्तसेनयेत्यादि सर्वमेवंपदस्यार्थः । आमङ्गीकारे । इदं यदुक्तं तदिदं वृत्तान्तजातमित्यर्थः ।

श्रे० का०—(११) आर्य चारुदत्त, अत्र सत्यं वक्तव्यम् । पश्य पश्य । सत्येनेति । सत्येन सुखं खलु लभ्यते सत्यालापे न भवति पापकम् । सत्यमिति द्वे अप्यक्षरे मा सत्यमलीकेन गूहय । अगूहयेन सत्यं मा गूहेहि । मा गोपयेत्यर्थः ॥ ३९ ॥

---

१ विभवे AB (c). २ गर्भं B (a). ३ वत्स ! K. ४ om. B (a) ; मु D ५ मंगह AB (ac) ; मव (स') इ B (b) ; ममाइ B (d) H ; मइ G. ६ ममाने AB (bc) DK. ७ होंइ E. ८ वदई B (a) ; वदइ B (d) EGK. वदे B गदई J. ९ सर्वेत AB (c) DEG. (=सर्वमिति) AB (c) ; सर्वे B (d) FH. १० देवे om. इ AB (c) DG. ११ अक्खरा AB (abcd) E. १२ अलिअ B (a), om. ण G. १३ गूहेहि AB (bc) D. णिगूहि B (a).

चारुदत्तः । आभरणान्याभरणानीति । न जाने । किं त्वस्मद्गृहादानीतानीति जाने ।

शकारः । उज्जाणं पवेशिअ पढमं मालेशि । कवडकावडिआए शम्पदं णिगूहेशि (१२) ।

अधिकरणिकः । आर्य चारुदत्त, सत्यमभिधीयताम् ।

इदानीं सुकुमारेऽस्मिन्निःशङ्कं कर्कशाः कशाः ।
तव गात्रे पतिष्यन्ति सहास्माकं मनोरथैः ॥ ३६ ॥

चारुदत्तः ।

अपापानां कुले जाते मयि पापं न विद्यते ।
यदि संभाव्यते पापमपापेन च किं मया ॥ ३७ ॥

स्वगतम् । न च मे वसन्तसेनाविरहितस्य जीवितेन कृत्यम् । प्रकाशम् । भोः, किं बहुना ।

मया किल नृशंसेन लोकद्वयमजानता ।
स्त्री रतिश्च विशेषेण शेषमेषोऽभिधास्यति ॥ ३८ ॥

---

चारु०— आभरणानि भूषणानि । इमान्याभरणानि उदरदरीपरिपूरणकरणानीत्यर्थः । इति न जाने । 'डुभृञ्' धारणपोषणयोः ।

शका०— (१२) उद्यानं प्रवेश्य प्रथमं मारयसि । कपटकापटिकतया साम्प्रतं निगूहसि गोपयसि ।

अधि०—इदानीमिति । 'कशा तुरगघातिनी' इति कोशः ॥ ३६ ॥

चारु०—अपापानामिति ॥ ३७ ॥ मया किलेति । 'नृशंसो घात(तु)कः क्रूरः' [इत्यमरः] । एष राजश्यालः । शकार इत्यर्थः ॥ ३८ ॥

---

१ पढमं AB (c); पढमे B (b). २ कडवाकाव० B (d). ३ संपदं D. ४ णि शङ्का. B (a). ५ सदा० B (a) K. ६ चालु B (d). ७ द्वयलोक B (a); परलोक B (d). ८ स्त्रीं च B (ad) EK.

शकारः । वावादिदा । अले, तुमं पि भण मएं वावादिदेत्ति (१३) ।

चारुदत्तः । त्वयैवोक्तम् ।

शकारः । शुणेध शुणेध भट्टालका । एदेण मालिदा । एदेण ज्जेव्व । शंशए छिण्णे । ऐदश्श दलिद्दचालुदत्तश्श शलीले दण्डे धालीअदु (१४) ।

अधिकरणिकः । शोधनक, यथाह राष्ट्रियः । भो राजपुरुषाः, गृह्यतामयं चारुदत्तः । राजपुरुषा गृह्णन्ति ।

वृद्धा । पसीदन्तु पसीदन्तु अज्जमिस्सा । जो दाव चोरेहिं अवहदस्स इत्यादि पूर्वोक्तं पठति । तो जदि वावादिदा मम दारिआ

---

शका०— ( १३ ) व्यापादिता । अरे, त्वमपि भण मया व्यापादितेति ।

शका०— ( १४ ) शृणुत शृणुत भट्टारकाः । एतेन मारिता । एतेनैव । संशये(यः) छिन्ने(न्नः) । एतस्य दरिद्रचारुदत्तस्य शरीरे दण्डो धार्यताम् ।

वृद्धा—( १५ ) प्रसीदन्तु प्रसीदन्त्वार्यमिश्राः । यस्तावच्चौरैरपहृतस्येत्यादि पूर्वोक्तमिति । इदाश, जो दाणिं णासीकदं सुवण्णभण्डअं रत्तिं चोरेहिं अपहदं त्ति तस्स कालणादो चदुःसमुद्दसारभूदं रअणावलिं देदि सो दाणिं अत्थकल्लवत्तस्स कालणादो

१ रि D. २ om B B (a) ३ भट्टा० AB (abc) CDJK; भट्टालआ B, भट्टालआ B (d) H. ४ शिलद छिणे K; J. ५ एदस्स C. ६ °चालुदत्तस्स BDFGK, °चालुदत्तस्स E ७ शलीले B (d), शलीले EGK. ८ ण धाली० B B (a) EK; ण धाली० B (d) ९ पसी० पसी० J. १० दाणिं B B (a). ११ अवहदेत्ति सव्व &c, whole as given before instead of इत्यादि पूर्वोक्तं &c ??? १२ ता जदि दा° text om B (d).

वेवादिदा। जीवेदु मे दीहाऊ। अण्णं च। अत्थिपत्थिणं ववहारो। अहं अत्थिणी। ता मुञ्चध एदं (१९)।

शकारः। अवेहि गब्भदाशि, गच्छ। किं तव एदिणा (१६)।

अधिकरणिकः। आर्ये, गम्यताम्। हे राजपुरुषाः, निष्क्रामयतैनाम्।

वृद्धा। हा जाद, हा पुत्तअ (१७)। इति रुदती निष्क्रान्ता।

शकारः। स्वगतम्। कडं मए ऐदश्श अत्तणो शलिशं। शम्पदं गच्छामि (१८)। निष्क्रान्तः।

अधिकरणिकः। आर्य चारुदत्त, निर्णये वयं प्रमाणम्। शेषे तु राजा। तथापि शोधनक, विज्ञाप्यतां राजा पालकः।

अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत्।

---

इदं अकज्जं करेदि। इदं पूर्वोक्तमित्यर्थः (पृ० ४०९ वृद्धाभाषणम्)। तदा यदि व्यापादिता मम दारिका व्यापादिता। जीवतु मे दीर्घायुः। अन्यच्च। अर्थिप्रत्यर्थिनोर्व्यवहारः। न चाहमर्थिनी। तन्मुञ्चतैतम्।

शका०— (१६) अपेहि गर्भदासि, गच्छ। (किं) तवैतेन।

वृद्धा— (१७) हा तात, हा पुत्रक।

शका०—(१८) कृतं मयैतस्यात्मनः सदृशम्। साम्प्रतं गच्छामीति।

अधि०—अयं हीति। [अनुष्टुप्।] श्लोकः॥ २१॥

---

१ तहावि B B (a). २ जीअदु B; जीविदु D. ३ अण्ण K. ४ अत्थिपच्च° B B (ad). ५ ववहारे K. ६ ण अ अहं AB (bc) DK; ण अहं B (d) E. ७ अवहि? D. ८ °दासि CJ ९ °तैनम् AB (bcd). १० दच्च B (a); पुत्तआ G. ११ रुदन्ती? D. १२ एदस्स CJ. १३ एसलिसं B (a); सलिसं K. १४ सपदं pr. m. corr. सपदं? B (d). १५ इति निष्क्रा° BDH. १६ om. B B (a).

राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह ॥ ३९ ॥

**शोधनकः ।** जं अज्जो आणवेदि । इति निष्क्रम्य पुनः प्रविश्य सास्रम् । अज्जा, गेदम्हि तहिं । राआ पालओ भणादि । जेण अत्थकल्लवत्तस्स कारणादो वसन्तसेणा वावादिदा, तं तहिं ज्जेव आहरणाइं गले बन्धिअ डिण्डिमं तौडिअ दक्खिणमसाणं णेइअ सूले भज्जेध त्ति । जो को वि अवरो ऐरिसं अकज्जं अणुचिट्ठदि सो एदिणा सणिआरदण्डेण सासीअदि (९९) ।

**चारुदत्तः ।** अहो अविमृष्यकारी राजा पालकः । अथवा ।

ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः ।
स्थाने खलु महीपाला गच्छन्ति कृपणां दशाम् ॥४०॥

---

शोध०—( ९९ ) यदार्य आज्ञापयति । आर्याः, गतोस्मि तत्र । राजा पालको भणति । येनार्यकल्यवर्तस्य कारणाद्वसन्तसेना व्यापादिता, तं तत्रैवाभरणानि गले बन्धयित्वा डिण्डिमं ताडयित्वा दक्षिणश्मशानं नीत्वा शूले भङ्क्तेति । यः कोप्यपर ईदृशमकार्यमनुतिष्ठति स एतेन सनिकारदण्डेन शास्यते ।

चारु०—ईदृशे इति । श्लोकः । स्थाने योग्यमित्यर्थः । 'युक्ते

---

१ °रक्षितै H. २ om AB (c). ३ गदम्हि। तहिं राआ &c. AB (abc). ४ लाआ AB (abcd) D. ५ °वत्तस्स AB (bc) DE. ६ कालणादो H (a): कारणा om. दो K. ७ °वशन्त° AB (bc). ८ तहिं DJ. ९ आहल॰ AB (abcd). १० डिण्डिअ? AB (c). ११ om. AB (c); ताडिअ॰ DH. १२ मसाणअ B (a). १३ णइअ AB (bcd). १४ शूले AB (abcd). १५ एरिसं मकज्जमणु° &c. D. १६ अकज्जमणुचि॰ B (d). १७ सासि° AB (ac) १८ अविवेको विमृश्य AB (bc) DEGK. अविवेको in marg. before विमृश्य B (d); अवि॰ मृश्य B, अविवेको अविमृ॰ K. १९ विपम् AB (c) DF.

अपि च।

ईदृशैः श्वेतकाकीयै राज्ञः शासनदूषकैः।
अपापानां सहस्राणि हन्यन्ते च हतानि च ॥ ४१ ॥

सखे मैत्रेय, गच्छ। मद्वचनादम्बामपश्चिममभिवादयस्व। पुत्रं च मे रोहसेनं परिपालयस्व।

विदूषकः। मूले छिण्णे कुदो पादवस्स पालणं(१००)।

चारुदत्तः। मा मैवम्।

नृणां लोकान्तरस्थानां देहप्रतिकृतिः सुतः।
मयि यो वै तव स्नेहो रोहसेने स युज्यताम् ॥४२॥

---

वे साम्प्रतं स्थाने' इत्यमरः। कृपणां दीनाम्। नारकीया इ(मि)त्यर्थः ॥ ४० ॥ ईदृशैरिति। श्लोकः। श्वेतकाकीयैः श्वेतकाकसदृशैः। इवार्थे छः। उत्पातकल्पैरित्यर्थः। राज्ञः शासनस्य दूषकैः पापात्मभिर्मन्त्रिभिः ॥ ४१ ॥ अम्बा चारुदत्तमाता।

विदू०— (१००) मूले छिन्ने कुतः पादपस्य पालनम्।

चारु०— नृणामिति। श्लोकः। देहस्य प्रतिकृतिः प्रतिमा। द्वितीयो देह इत्यर्थः। तथा च श्रुतिः। 'सा जाया जाया भवति यदस्यां जायते पुनः' इति। 'अङ्गादङ्गात्संभवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्' इति च ॥ ४२ ॥

---

१ श्वेत? AB (c); °काकैर्यैः DH, श्वेत० K. २ मम वच° B (d). ३ अम्बां मम पश्चिम° D; अम्बामपि मम अभि० K. ४ स्व om. D. ५ परिपालणं B B (a). ६ लोकोत्तर० G. ७ यस्तव BCDFK.

विदूषकः । भो वेअस्स, अहं ते पिअवअस्सो भविअ तुए विरहिदाइं पाणाइं धारेमि ( १ ) ।

चारुदत्तः । रोहसेनमपि तावद्दर्शय ।

विदूषकः । एव्वम् । जुज्जदि ( २ ) ।

अधिकरणिकः । भद्र शोधनक, अपसार्यतामयं बटुः ।

शोधनकस्तथा करोति ।

अधिकरणिकः । कः कोऽत्र भोः । चाण्डालानां दीयतामादेशः ।

इति चारुदत्तं विसृज्य निष्क्रान्ताः सर्वे राजपुरुषाः ।

शोधनकः । इदो आअच्छदु अज्जो (३) ।

चारुदत्तः । सकरुणम् । मैत्रेय भोः, किमिदमद्य । इत्यादि पठति ।

आकाशे ।

---

विदू०— ( १ ) भो वयस्य, अहं ते प्रियवयस्यो भूत्वा त्वया विरहितान्प्राणान्धारयामि ।

विदू०— ( २ ) एवम् । युज्यते ।

शोध० — ( ३ ) इत आगच्छत्वार्यः ।

---

१ om. B B (a); भो वयस्य CJ. २ पिअव° B (a). ३ विरहिदं BB (abcd) DEK. ४ पाणइं B (d). ५ च ताव० DH. ६ वहि B (b); बाहका AB (c) DF. ७ भो AB (c). ८ चण्डाला० J. ९ विसृज्य AB (bcd) DEFK. १० मैत्रेयऽयमेवंविधे काले इत्या° AB (bc) ?, योयमेवं &c. A; मैत्रेयंभगो: किदं B (a); किमिदं इत्यादि only अद्य om. B; मैत्रेय योयमेवंविधे &c. ..मानयिष्यति whole for भो ..पठति D. ११ इच्छति K. १२ आकाशे पठति DH.

विषसलिलतुलाग्निप्रार्थिते मे विचारे
क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य ।
अथ रिपुवचनाद्वा ब्राह्मणं मां निहंसि
पतसि नरकमध्ये पुत्रपौत्रैः समेतः ॥ ४२ ॥

अयमागतोऽस्मीति । निष्क्रान्ताः सर्वे । 565

व्यवहारो नाम नवमोऽङ्कः समाप्तः ।

---

चारु०—मैत्रेय भोरिति पूर्वोक्तं पद्यमित्यर्थः [ पृ० ४०७ श्लो० २९ ] । विषेति । मालिनीच्छन्दः । विषं च सलिलं च तुला च अग्निश्च एभिः प्रार्थिते विचारे परीक्षायां सत्यमपि इह शरीरेश्च क्रकं(क)चं दातव्यम् । अथ पुनः रिपोः शकारस्य राजश्यालस्य । राजानं पालकं प्रत्युक्तिरियम् । विषं भक्षयित्वापि न मृतश्चेद्विष-परीक्षा । विषेण शपथ इत्यर्थः । अग्निना तु प्रसिद्धैव परीक्षा । तुला-परीक्षापि स्फुटा शास्त्रे । एवमादि । ज्ञेयं विज्ञैरिति ।

इति श्रीमृच्छकटिकप्रकरणव्याख्यायां सुवर्णालंकरणाख्यायामनन्तमङ्गलायासवसन्तसेनामोटनो(न)मिथ्यापराधचारुदत्तनिग्रहो नाम नवमाङ्कः समाप्तिमापत् ।

---

१ पुत्राग्नि H (a). २ कवच ? C. ३ मा B (d). ४ °स्मि । इति नि° B. ५ इति मृच्छक° ..... या व्यव° B; इति मृच्छ ....के प्रकरणे D; °कप्रकरणे H. ६ om. BD.

# अथ दशमोऽङ्कः ।



ततः प्रविशति चाण्डालद्वयेनानुगम्यमानश्चारुदत्तः ।

उभौ । तर्कि ण कलअ कालण णवेवहबंधणअणे णिउणा ।
अइलेण शीशछेअणशूलालोवेशु कुशलम्ह ॥ १ ॥

ओशलध अज्जा, ओशलध । एशे अज्जचालुदत्ते ।
दिण्णकलवीलदामे गहिदे अम्हेहिं वज्झपुलिशेहिं ।
दीवे व्व मन्दणेहे थोअं थोअं खअं जादि ॥ २ ॥ (१)

---

सिन्दूरोन्नासिगण्डः कलयतु पततां मङ्गलं वक्रतुण्डः ।

उभौ । चाण्डालाविस्यर्थः । (१) तर्कि णेति । आर्या छन्दः । [तर्कि न कलय कारणं नववधबन्धनगृणे (?) निपुणौ] । अचिरेण शीर्षच्छेदनशूलारोपेषु कुशलौ स्वः ॥ १ ॥ अपसरत आर्याः, अपसरत । एष आर्यचारुदत्तः । दिण्णेति । आर्या च्छन्दः । दत्तकरवीरदामा गृहीत आवाभ्यां वध्यपुरुषाभ्याम् । दीप इव मद(न्द)स्नेहः स्तोकं स्तोकं क्षयं याति । दाम माला ॥ २ ॥

---

१ इति H. २ चण्डाल G. ३ तर्कि॰ AB (c); तक्किण्ण B; तक्किणं B (a); तार्किण D. तक्किण G, तर्कि HK. ४ कलभद का॰ AB (c) G, कलतग का॰ B (a) कलभद कालण DH. ५ णावाहबन्धण अणा B (b); ॰बन्धणअणे B (a) EK; ॰बन्धअं अणे B (d). ६ ऐलेण H. ७ शीश॰ AB (bc) D, शीशच्छेदण B (a), शीश॰ G. शश॰ B (d) K. ८ शूलालोवेशु AB (bcd) DEK, शूलालल्लोवेशु B (a). ९ कुशलं B (a). १० एशे C, एशे K. ११ चारुदत्ते AB (abcd), ॰चारुदत्ते DK. १२ दिण B (a). १३ °कलवीर and वीर AB (abcd) DFEK. १४ हेहिं B (d) CJ. १५ वज्झ॰ EK. १६ पुलिशेहिं AB (abcd) CDLK, पुलिशशिन्ने B (b) १७ °दीव AB (c) FG दिवेव H, दिवेव K, १८ ॰णेहो B (d), ॰णिहे D, °णिणहो H. १९ थोअं थोअ B (a), थोअं थोअं K. २० जाइ D, जाई EH, जाई LK.

चारुदत्तः। सविषादम्।

नयनसलिलसिक्तं पांशुरूक्षीकृताङ्गं
पितृवनसुमनोभिर्वेष्टितं मे शरीरम्।
विरसमिह रटन्तो रक्तगन्धानुलिप्तं
बलिमिव परिभोक्तुं वायसास्तर्कयन्ति ॥ ३ ॥

चाण्डालौ। ओशलध अज्जा, ओशलध।
किं पेक्खध छिज्जन्तं शप्पुलिशं कालपलशुधालाहिं।
शुअणशउणाधिवाशं शज्जणपुलिशद्दुमं एदं ॥ ४ ॥
आअच्छ ले चालुदत्ता, आअच्छ (२)।

चारुदत्तः। पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः। यदहमीदृशीं दशामनुप्राप्तः।
सर्वगात्रेषु विन्यस्तै रक्तचन्दनहस्तकैः।

---

श्मशानस्य। सुमनोभिः पुष्पैः। विरसं रूक्षं यथा स्यात्तथा रटन्तो वायसाः काकास्तर्कयन्त्युत्प्रेक्षन्त इत्यर्थः ॥ ३ ॥

चाण्डा०—(२) अपसरत आर्याः, अपसरत। किं पेक्खधेति। आर्या छन्दः। किं पश्यत। छिज्जन्तं छिद्यमानम्। सत्पुरुषं कालपरशुधाराभिः। सुजनशकुनाधिवासं सज्जनपुरुषद्रुममेतम् ॥ ४ ॥ आगच्छ रे चारुदत्त, आगच्छ।

चारु०—सर्वेति। अनुष्टुप्। हस्ता इव हस्तकाः हस्तचिह्नानि।

---

१ °रूक्षी° B ‖ (ad) D. २ ललटयन्तो B (b), रटन्तो pr. m. लडन्तो? B (d); लगन्तो G. ३ चण्डालौ GK. ४ शप्पुलिशं वज्जन्तं ‖ B (a). ५ कल ‖ (a). ६ पलशु AB (bc) D; पुरुष G. ७ धलएहिं B; धाराएहिं B (b); धाराहिं AB (cd) DF. ८ °सउणा° AB (abc) D. ९ वासं B (d) E. १० आगच्छ रे चारुदत्त आगच्छ B (a); आअच्छ ‖ (d) K. ११ °भानानां K. १२ °मविचिन्त्याः A (bcd) DEFGK. १३ विन्यस्तैः D.

पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः ॥ ५ ॥

अग्रतो निरूप्य । अहो, तारतम्यं नराणाम् । सकरुणम् ।

अमी हि दृष्ट्वा मदुपेतमेत-
न्मर्त्यं धिगस्त्वित्युपजातबाष्पाः ।
अशक्नुवन्तः परिरक्षितुं मां
स्वर्गं लभस्वेति वदन्ति पौराः ॥ ६ ॥

चाण्डालौ । ओशलध अज्जा, ओशलध । किं पेक्खध ।

इन्दे पवाहिअन्ते गोप्पसवे शङ्कमे च ताला णं ।
शुपुलिशपाणविपत्ती चत्तालि इमे ण दट्ठव्वा ॥ ७ ॥ (९)

---

इवार्थे कन् । पिष्टचूर्णाभ्यामवकीर्णो व्याप्तः । पिष्टं तण्डुलानाम् । चूर्णं तिलानाम् । अपशुः सन् पशुर्यथा संपद्यते तथा कृतः पशूकृतः । पशुर्देवीबलिदानाय छागादिः ॥ ५ ॥ तारतम्यं भेदः । अमी हीति । मयोपेतं प्राप्तं तच्चिरपराधवधादि दुःखम् । दृष्ट्वा । मर्त्यं मरणधर्माणम् ॥ ६ ॥

चाण्डा०—( ७ ) अपसरत आर्याः, अपसरत । किं पश्यत । इन्द्रे इति । आर्या छन्दः । इन्द्रः प्रवाह्यमाणो( णो ? ) गोप्रसवश्च संक्रमश्च ताराणाम् । सुपुरुषप्राणविपत्तिश्चत्वार इमे ( चत्वार्येतानि ) न द्रष्टव्याः(व्यानि) ॥ ७ ॥

---

१ om. B २ मम देहमेतं B B (a), मम देहमेतं B (d) E ३ धिगस्त्विति H. ४ °भेदः B B (ad) E. ५ ओशलध० B (b) ६ पवाहिअंते AB (c) F, पवाहि० BDK, प्पवाहअन्ते B (a), पवाहि° H. ७ गोप्पसवे pr m ता B (d). ८ शक्कमे CJ, शिक्कमे K. ९ शुपुलश AB (c) F, शप्पुलिश B (a), शुपुलिश B (bd), शप्पुलिश D.

एकः । हण्ड ओहीन्ता, पेक्ख पेक्ख ।

णअलीपधाणभूदे वज्झीअन्ते कदन्तअण्णाए ।
किं लुअदि अन्तलिक्खे आदु अणब्भे पडदि वज्जे ॥८॥ (४)

द्वितीयः । अले गोहा,

णं अ लुअदि अन्तलिक्खे णेअ णेअब्भे पडदि वज्जे ।
महिलासमूहमेहे निवडदि णअणम्बु धालाहिं ॥ ९ ॥

अवि अ ।

वज्झम्मि णीअमाणे जणश्श शव्वश्श लोदमाणश्श ।
णअणशलिलेहिं शित्ते लच्छादो ण उण्णमइ लेणू ॥१०॥(५)

---

एकः– ( ४ ) हण्डे इति सम्बुद्धिराह्वाने । आहीन्ता–इति द्वितीयस्य चण्डालस्य नाम । पश्य पश्य । णअलीति । आर्या [छन्दः]। नगरीप्रधानभूते । वध्यमाने वध्यमाने । कृतान्ताज्ञया । किं रोदित्यन्तरिक्षम् । आदु अथवा । अनभ्रे पतति वज्रम् ॥ ८ ॥

द्वितीयः– ( ५ ) अरे गोहा इति प्रथमचाण्डालनाम । ण अ लुअदि(दी)ति । आर्या [छन्दः]। न च रोदित्यन्तरिक्षं नैवानभ्रं पतति वज्रम् । महिलासमूहमेघान्निपतति नयनाम्बु धाराभिः ॥ ९ ॥

अपि च । वज्झम्मीति । आर्या [छन्दः]। वध्ये नीयमाने जनस्य सर्वस्य रोदमानस्य ( रुदतः )। नयनसलिलैः सिक्तो रथ्यातो नोन्नमति रेणुः ॥ १० ॥

---

१ आहींता AB (bc) CJ; आहींडता H (d). २ om. B (b). ३ पधाणभुज्जीअंते AB (c), ०भूदं B (a); °भूदेअंते D; अपधाण° K. ४ वज्जीअन्ते H (b), °उज्झन्ते H (d); वज्झिअज्जंते E. ५ ०दन्तअणए H (a), °आण्णाए B. (d); °आणाए DH. ६ वइज्ञे K. ७ अलेले B; अले अले B (a). ८ om. B (b) ९ om. B (a). १० अन्त० AB (c). ११ णे अणब्भे H (a). १२ °समूह° AB (acd) D; °समूहे° B(b). १३ निवडइ BDK.; णिवणंह E. १४ धालाहिँ B. १५ अणश्श DFH. १६ सित्ते AB (abcd) D; सत्ते H. १७ उणमइ AB B (ac); उंणमइ DH. १८ लेणु AB (ac).

चारुदत्तः । निरूप्य सकरुणम् ।

एताः पुनर्हर्म्यगताः स्त्रियो मां
वातायनार्धेन विनिःसृतास्याः ।
हा चारुदत्तेत्यभिभाषमाणा
बाष्पं प्रणालीभिरिवोत्सृजन्ति ॥ ११ ॥

चाण्डालौ । आअच्छ ले चारुदत्ता, आअच्छ । इमं घोषणट्ठाणं । आहणेध डिण्डिमं । घोशेध घोशणं (६) ।

उभौ । शुणाध अज्जा, शुणाध । एशे शत्थवाहविणअदत्तश्श णत्तिके शाअलदत्तश्श पुत्तके अज्जचालुदत्ते णाम । एदिणा किल अकज्जकालिणा गणिआ वशन्तशेणा अत्थकल्लवत्तश्श कोलणादो शुण्णं पुप्फकलण्डअजिण्णुज्जाणं पवेशिअ बाहुपाशबलक्कालेण मालिद त्ति । एशे शलोत्ते गहिदे,

चारु०—एता इति । इन्द्रवज्रा छन्दः । 'वातायनं गवाक्षः स्यात्' ॥ ११ ॥

चाण्डा०—( ६ ) आगच्छ रे चारुदत्त, आगच्छ । इदं घोषणस्थानम् । आहत डिण्डिमम् । घोषत (घयत) घोषणाम् ।

उभौ—चाण्डालावित्यर्थः । ( ७ ) शृणुत आर्याः, शृणुत । एष सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य पुत्रक आर्यचारुदत्तो नाम ।

१ विनि सृतास्य B (d), °स्य K २ आअच्छ B (d) °अध E ३ घोसण° AB (abcd) ४ आहणेन्ध B (b), आहणेध B (d) ५ °सेध DEK. ६ घोसणं EK. ७ शुणाध B (b), शुणध B (d) ८ सडढ ह° G. ९ णत्तिके B (d), णत्तिके D, णत्तिके E. १० शाअर° BDK ११ पुत्तके B (b) k, Pr. m B (d), पुत्तके E पुत्थके G. १२ °चारु° AB (abc) D १३ वसन्तसेणा AB (ac) १४ अरत° E १५ om: हो B (d) E. १६ °सिअ B (d). १७ मालिआणि AB (bcd) DEFGK. १८ शेलोत्ते AB (c). सलोत्ते B (b). लोत्ते marg ए B (d). शेलोत्त D, एशे लोत्ते E शलोत्ते H

शअं अ पेडिवण्णे । तदो लण्णा पालएण अम्हे आणत्ता एदं मालेदुं । जदि अवले ईदिशं उँभअलोअविलुद्धं अकज्जं कलेदि तं पि लाआ पालए एव्वं ज्जेव्व शाशादि (७) ।

चारुदत्तः । सनिर्वेदं स्वगतम् ।

मखशतपरिपूतं गोत्रमुद्भासितं मे
सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात् ।
मम मरणदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥ १२ ॥

उद्वीक्ष्य कर्णौ पिधाय । हा प्रिये वसन्तसेने,

---

एतेन किलाकार्यकारिणा गणिका वसन्तसेनार्थकल्यवर्तस्य कारणाच्छून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण मारितेति । एष सगोत्रो ( लोप्त्रो ) गृहीतः, स्वयं च प्रतिपन्नः । तदा राज्ञा पालकेन वय( आवा )माज्ञप्ताः ( तौ ) एतं मारयितुम् । यद्यपर ईदृशमुभयलोकविरुद्धमकार्यं करोति तमपि राजा पालक एवमेव शास्ति ।

चारु०—मखशतेति । मालिनी छन्दः । सदसि यज्ञस्य महति मण्डपे । निबिडानि घनानि । चैत्यान्यायतनानि । तत्र ब्रह्मणां वेदानां घोषैर्मे गोत्रं कुलमुद्भासितमासीत् । पापैरसदृशैरननुरूपैरयोग्यैश्चाण्डालादिभिर्मनुष्यैर्घोषणायां तन्मम गोत्रं घुष्यत इति महाननर्थ इति भावः । 'गोत्रं नाम्नि कुलेऽचले' इति कोशः ॥ १२ ॥

---

१ पविट्ठिवण्णे B (d); प ...डिवण्णे H. २ om. B (d). ३ इदिशे AB (bc) इदिशं B (a); इदिसे B (d); ईदिशे DEF. ४ उहअ B, इहअ B (a). ५ कलेदि B(b). ६ वि D. ७ om. AB (c) DF. ८ om. ABB (ac).

शशिविमलमयूखशुभ्रदन्ति
सुरुचिरविद्रुमसन्निभाधरौष्ठि ।
तव वदनभवामृतं निपीय
कथमवशो ह्ययशोविषं पिबामि ॥ १३ ॥

उभौ । ओशलध अज्जा, ओशलध ।

एशे गुणलअणणिही शज्जणदुक्खाण उत्तलणशेदू ।
अशुवण्णं मण्डणअं अवणीआदि अज्ज णअलीदो ॥१४॥

अण्णं च ।

शव्वे क्खु होइ लोए लोए शुहशंण्ठिदाण तच्चिन्ता ।
विणिवडिदाण णलाणं पिअआली दुल्लहो होदि[18] ॥१५॥

---

शशिविमलेति । पुष्पिताग्रा छन्दः । अवशः पराधीनः । अयशोरूपं विषम् ॥ १३ ॥

उभौ—चाण्डालावित्यर्थः । (८) अपसरत आर्याः, अपसरत । एशे इति । आर्या छन्दः । एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः । असुवर्णं मण्डनमपनीयतेऽद्य नगरीतः । एष चारुदत्तः ॥ १४ ॥

अन्यच्च । सव्वे इति । आर्या छन्दः । सर्वः खलु भवति लोके लोकः सुखसंस्थितानाम् । तच्चिन्ता चिन्तायुक्तः । विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥ १५ ॥

---

१ °दन्तं K. २ सुविचिर॰ B (b), °द्रुम° B (a). ३ °धरोष्ठि DGH, ° धरोष्ट K ४ °वशो ? DF, वंशो H. ५ उभ्रा AB (ac) D. ६ सज्जण AB (abcd) CDJ. ७ दुक्खाणं AB (ac). ८ °सेदू AB (abc) DE. ९ असुवण्णम॰ AB (ac) CDJ, असुवण्णी॰ B (b). १० मण्डणअं pr. m. B (d), मण्डणो॰ DH. ११ अव॰ णी° B (b), °णीआदि B (d). १२ सव्वे J. १३ सुह° AB (abcd) DE. १४ संधिदाण AB (c), संस्थिदाण B (a) D. संधिदाण B (b), संस्थिदाण H. (d); संस्थिदाण E; संस्थिदाण K १५ तच्चिन्ता B (b), तस्सो DH. १६ (illegible) B (b), विनि;... णं F;. ॰णाणं AB (c). १७ णराण B (a). १८ होइ D

**चारुदत्तः** । सर्वतोऽवलोक्य ।

अमी हि वस्त्रान्तनिरुद्धवक्त्राः
प्रयान्ति मे दूरतरं वयस्याः ।
परोऽपि बन्धुः समसंस्थितस्य
मित्रं न कश्चिद्विषमस्थितस्य ॥ १६ ॥

**चाण्डालौ** । ओशालणं केदं । विवित्तं लाअमग्गं । ता आणेध एदं दिण्णवज्झचिण्हं (९) ।

**चारुदत्तः** । निःश्वस्य । मैत्रेय भोः किमिदमद्य । इत्यादि [ पृ० ४०७ स्थितं श्लोकं ] पठति ।

नेपथ्ये । हा तात, हा पिअवअस्स ( १० ) ।

**चारुदत्तः** । आकर्ण्य सकरुणम् । भोः स्वजातिमहत्तर, इच्छाम्यहं भवतः सकाशात्प्रतिग्रहं कर्तुम् ।

---

चारु०—अमी हीति । स्पष्टमुत्तरार्धम् । 'सर्वः खलु' इत्यार्यया समानार्थम् ॥ १६ ॥

चाण्डा०— ( ९ ) अपसारणं कृतम् । विविक्तो राजमार्गः । तदानयतैतं दत्तवध्यचिह्नम् ।

नेपथ्ये—( १० ) हा तात हा प्रियवयस्य ।

चारु०— स्वजातिमहत्तरेति चाण्डालसंबोधनम् ।

---

१ वस्त्रान्तरुद्ध० BDFG. २ °शलणं AB (c) D. ३ किदं B (a). ४ विवित्ते AB (bc), विवित्त किद B (a). ५ अणेध K. ६ दिण्ण B (ad). ७ °वज्ज AB (bcd) K. ८ = om: B B (a); निश्वस्य B (d). ९ °मिदमित्यादि B. १० For इत्यादि whole मनोरथानौ &c., D. ११ तात AB (bcd). १२ om B (a). १३ स्वस्वय B (b).

चाण्डालौ । किं अम्हाणं अे हत्थादो पडिग्गहं केलेशि (११)।

चारुदत्तः । शान्तं पापम् । नोपरीक्ष्यकारी दुराचारः पालक इव चाण्डालः । तत्परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये ।

चाण्डालौ । एवं कलीअदु (१२) ।

(नेपथ्ये । हा ताद, हा आवुक (१३) ।)

चारुदत्तः । श्रुत्वा सकरुणम् । भोः स्वजातिमहत्तर । इत्यादि पठति ।

चाण्डालौ । अले पउला, खणं अन्तलं देधे । एशे अज्जचालुदत्ते पुत्तमुहं पेक्खदु । नेपथ्याभिमुखम् । अज्ज, इदो इदो । आअच्छ ले दालआ, आअच्छ (१४)।

---

चाण्डा०– (११) किमस्माकं च हस्तात्प्रतिग्रहं करोषि ।

चाण्डा०– (१२) एवं क्रियताम् ।

[ नेपथ्ये ]–(१३) हा तात हा पितः ।

चाण्डा०– अरे, आगच्छस्वागच्छतु (?) ।

उभौ–(१४) [ अरे ] प्रचुराः हे जना इत्यर्थः । ( पउला पौराः ) । क्षणं क्षणमन्तरं ददत ( दत्त ) । एष आर्यचारुदत्तः पुत्रमुखं पश्यतु । आर्य, इत [इतः?] । आगच्छ रे दारक, आगच्छ ।

१ om. J. २ कलेशि B (abc) E, pr. m. B (d). ३ नापरीक्षित° AB (bc) DG, न परी° B (d) E. ४°कार्ये G. ५ कली॰ BDE ६°जाती-त्यादि DK. ७ After this word आअच्छदु° अएर —आअच्छदु । उभौ before अले B. In these speeches for आअच्छदु first speech अले आअच्छदु B (bd) GK. In the same speech अले आअच्छदु first speech E. ८ om. B (abd). ९ पउला जणा D १० खण खणं EK. ११ देघ AB (c). १२ चालुदत्ते AB (abcd) D. १३ °मुहं AB (bcd) DEK. १४ पेक्खदु B (a) १५ om. AB (bcd) D. १६ आअच्छ B (d), आअच्छ E. १७ दालअ B (a).

ततः प्रविशति दारकमादाय

विदूषकः। तुवरदु तुवरदु भद्दमुहो। पिदा दे मारिदुं णीअदि (१५)।

दारकः। हा ताद, हा आवुक (१६)।

विदूषकः। हा पिअवअस्स, कहिं मए तुमं पेक्खिदव्वो। (१७)।

चारुदत्तः। पुत्रं मित्रं च वीक्ष्य। हा पुत्र, हा मैत्रेय। सकरुणम्। भोः, कष्टम्।

चिरं खलु भविष्यामि परलोके पिपासितः।
अत्यल्पमिदमस्माकं निवापोदकभोजनम्॥ १७॥

किं पुत्राय प्रयच्छामि। आत्मानमवलोक्य। यज्ञोपवीतं दृष्ट्वा। आं, इदं तावदस्ति मम च।

अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम्।
देवतानां पितॄणां च भागो येन प्रदीयते॥ १८॥

इति यज्ञोपवीतं ददाति।

---

विदू०—(१५) उपरमतु उपरमतु (त्वरतां त्वरतां) भद्रमुखः। पिता ते मारयितुं नीयते।

दार०—(१६) हा पितः, हा तात।

विदू०—(१७) हा प्रियवयस्य, कुत्र मया त्वं द्रष्टव्यः।

चारु०—चिरमिति। श्लोकः॥ १७॥ अमौक्तिकमिति। श्लोकः। येन यज्ञोपवीतेन॥ १८॥

---

१ हा आवुक हा ताद AB (bcd) DEG. २ om: D. ३ मये AB (bc). ४ °लोकपिपा° B (a). ५ °भाजनम् DH. ६ पुत्रायापि? K. ७ °नं वीक्ष्य B B (a), °नं विलोक्य B (d) EK. ८ आ AB (bc); आः DG.

55

चाण्डालः । आअच्छ ले[1] चालुदत्ता, आअच्छ (१८) ।

द्वितीयः । अले, अज्जचालुदत्तं णिलुववदेण णामेण आलवेशि । अले, पेक्ख ।

अब्भुदए अवशाणे तहे अ लत्तिन्दिवं अहदमग्गा ।
उद्दामे व्व किशोली णिअदी क्खु पेडिच्छिदुं जादि ॥१९॥

अण्णं च ।

शुक्खा ववदेशा शे किं पणमिअमत्थएण कादव्वं ।
लाहुगहिदे वि अ चन्देण वन्दणीए जणपदश्श ॥२०॥(१९)

---

चाण्डा० — ( १८ ) आगच्छ रे चारुदत्त, आगच्छ ।

द्वितीय० — (१९) अरे, आर्यचारुदत्त(त्तम्) । निरुपपदेनार्यत्वादिविशेषणशून्येनेत्यर्थः । नामालपसि । अरे, पश्य । अब्भुअे(दए) इति । आर्या छन्दः । अभ्युदयेवसाने तथा च रात्रिंदिवमहतमार्गा । उद्दामेव किशोरी नियतिः खलु परीक्षितुं याति ॥ १९ ॥ अन्यच्च । शुक्खेति । आर्या छन्दः । शुष्का व्यपदेशाः । शे अस्य । किं प्रणमितमस्तकेन कर्तव्यम् । राहुगृहीतोपि च चन्द्रो न वन्दनीयो जनपदस्य ॥ धिअ इत्येकं पदं वा । राहुगृहीत इव चन्द्र इत्यर्थः ।

---

१ चाण्डालो D. २ रे B (a) DH. ३ चारु० AB (abc) D. ४ आअच्च B (d). ५ पेक्ख पेक्ख G. ६ अब्भुदये AB (acd) D; अदुदये B (b). ७ अवसाणे D. ८ तहअ AB (abcd) E (= तथा च AB (c); तह वि G; तहआ K ९ रत्तिदि० B (a); रत्तिदिवं D १० णिअदी G. ११ पडिच्छिदुं (= परीक्षितुं) AB (c). पडिच्छिदुं DH; पडिच्छिदं J. १२ शुक्का B (a), शुस्का B (bd); शुक्खा D; शुक्क: E; शुक्का वा ? H. १३ विवदेशा H (ad); ववदेशो B (b); विवदेशा EK. १४ om: B (b). १५ पणमिअमत्थ H (a); पणम० H (b) EK; मत्थ marg पणमु H (d); पणमिअ मत्थए ण J. १६ कादव्वं B B (a); काअदव्वं G. १७ °गहिदे AB (bc) H, °गहिदे B (a) १८ विअन्दे J. १९ वन्दणीओ EG.

बालकः । अरे रे चाण्डाला, कहिं ओवुकं णेध (२०)।

चारुदत्तः । वत्स,

अंसेन बिभ्रत्करवीरमालां
स्कन्धेन शूलं हृदयेन शोकम् ।
आघातमद्याहमनुप्रयामि
शामित्रमालब्धुमिवाध्वरेऽजः ॥२१॥

---

अस्य चारुदत्तस्य । व्यपदेशाः कलङ्काः । वसन्तसेना मारितेत्येवंरूपा अपवादव्यवहाराः । शुष्का वृथेत्यर्थः । प्रणमितेन मस्तकेन किं कर्तव्यम् ।(क्षीणस्यां (स्या)स्य चारुदत्तस्य लज्जयावन(त)मस्तकोपि न स्वमसीति भावः)। तत्र राहुगृहीतेन्दुर्दृष्टान्त इत्यवगन्तव्यम् ॥ २० ॥

बाल०–( २० ) अरे अरे चाण्डालाः( लौ ), कुत्रावुकं मम पितरम् । णेध नयत( थ ) ।

चारु०– अंसेनेति । इन्द्रवज्रा छन्दः । आघातमधिकरणीयं वधस्थान( म् )। अध्वरे यज्ञे । अजश्छागो यज्ञपशुः । आलब्धुम् । आलम्भनं( न )मभिमन्त्रणपूर्वकं हननं तस्मातुम् । शामित्रं यज्ञीयं पशुहननस्थानम् । अनुप्रयाति यथा तथाहमथाधिकरणीयं वधस्थानमनुप्रयामीत्यर्थः । 'शमिता यज्ञे' इति सूत्रं पाणिनेर्वैदिक्यां प्रक्रियायाम् । शमितरि भवं शामित्रम्। यज्ञे पशुघातस्थानमित्यर्थः ॥ २१ ॥

---

१ अले अले AB (abcd) DEGK. २ चण्डालआ B B (a); चण्डाला B (bd) EGK. ३ अवुकं D; आवकं E. ४ स्कन्धेन B (a) H. ५ अघात० H. ६-°मालब्धु° AB (bc); °मालब्ध° इवा B (d). ७ °ध्वरेजः B (a), °ध्वराज· B (d) pr. m. अ, om : °ध्वरेज° E.

चाण्डालः । दोलआ,

ण हु अम्हे चोण्डाला चोण्डालउँलम्मि जादपुव्वा विं ।
जें अहिभवन्ति शाँहुं ते पावा ते अ चोण्डाला ॥२२॥(२१)

दारकः । ता कीस मॅरिध आवुकं (२२) ।

चाण्डालः । दीहाओ, अॅत्त लाअणिओओ क्खु अवलज्झदि । ण हु अम्हे (२३) ।

दारकः । वावादेध मं । मुञ्चध आवुकं (२४) ।

चाण्डालः । दीहाओ, एवँ भणन्ते चिलँ मे जीव(२५) ।

---

चारुदत्तसुतेन 'अरे अरे चाण्डाला' इति सबोध्याहूतं आहत्तरं(र)माहुः(?) ।

चाण्डा०–(२१) दारक । ण हु अम्हे इति । आर्या छन्दः । न खलु वयं चाण्डालाश्चाण्डालकुले जातपूर्वा अपि । येभिभवन्ति साधुं ते पापास्ते च चाण्डालाः ॥ २२ ॥

दार०– (२२) तत् । कीस किमर्थम् । मारयत(थः) पितरम् ।

चाण्डा०– (२३) हे दीघा(र्घा)युः, अत्र राजनियोगः खल्वपराध्यति । न खलु वयम् ( आवाम् ) । अपरज्झम्मापराध्याम इति विपरिणम्य विभक्तिमन्वयः ।

दार० – (२४) व्यापादयत( तं ) माम् । मुञ्चत ( तं ) पितरम् ।

चाण्डा०–(२५) हे दीर्घायुः, एवं भणश्चिरं मे जीव ।

---

१ om: B II (a), दारअ G. २ चण्डाल BEGK. ३ चण्डाल AB (abcd) GK. ४ उग्मिञ्जाद० B (a) ५ om: AB (bc) F, वा DH. ६ वा D ७ शाहुं AB (abcd) DE. ८ मालेध AB (bcd) DEF. ९ om; B B (a) १० एत्थ D ११ स वावादेध E; वावदेध A. १२ om B १३ एवं. १४ म चिलं B (a)

चारुदत्तः । सास्रं पुत्रं कण्ठे गृहीत्वा ।

इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः ।
अचन्दनमनौशीरं हृदयस्यानुलेपनम् ॥ २३ ॥

'अंसेन बिभ्रत्' इत्यादि पुनः पठति । अवलोक्य स्वगतम् । 'अमी हि वस्त्रान्तनिरुद्धवक्त्रा' इत्यादि पठति ।

विदूषकः । भो भद्दमुहा, मुञ्चध पिअवअस्सं चारुदत्तं मं वावादेध (२६) ।

चारुदत्तः । शान्तं पापम् । दृष्ट्वा स्वगतम् । अेद्यावगच्छामि । 'सम(सं)स्थिते' इत्यादि पठति । प्रकाशम् । 'एताः पुनर्हर्म्यगताः स्त्रियो माम्' इत्यादि पुनः पठति ।

---

चारु०– इदं तदिति । अनुष्टुप् । इदं पुत्ररूपं वस्तु । तच्छ्रुतिस्मृतिपुराणेषु प्रसिद्धमित्यर्थः । स्पष्टमवशिष्टम् ॥ २३ ॥ अंसेन बिभ्रदित्याद्यनुपदोक्तं (पृ० ४३५ श्लो० २१) पद्यमित्यर्थः । अमी हीति । 'अमी हि वस्त्रान्तनिरुद्धवक्त्राः प्रयान्ति मे दूरतरं वयस्याः । परोऽपि बन्धुः समसंस्थितस्य मित्रं न कश्चिद्विष(म)स्थितस्य' इति पूर्वोक्तं (पृ० ४३१ श्लो० १६ ) पद्यमित्यर्थः ।

विदू०– (२६) भो भद्रमुखाः(खौ) मुञ्चत(तं) प्रियवयस्यं चारुदत्तम् । मां व्यापादयत(तं) । मारयते(तमि)त्यर्थः ।

चारु०–[४३८ पृष्ठे मुद्रितः ११ श्लोकः] ।

---

१ पुत्रकं DH; om: K. २ सममार्य? K. ३ अचान्दन० DH, अबन्धन? K. ४ After पठति 'विश श्लोक' D. ५ निबद्ध K. ६ वक्त्रा प्रयान्ति मे &c.; whole [illegible] (d); प्रयान्ति &c. D. ७ इति [illegible] (d). ८ भट्टमहा H. ९ मुञ्चेध BDEGK. १० शान्तं पापं twice [illegible] (a). ११ om: B (a). १२ अद्य om: B [illegible] (a). १३ समस्थितस्य मित्रं &c., whole followed by इति D. १४ Followed by वातायनगर्भेन &c इति for इत्यादि.

चाण्डालः । ओशलध अज्जा, ओशलध ।
किं पेक्खध शप्पुलिशं अंजशवशेण प्पणट्ठजीवाशं ।
कूवम्मि खुडिदपाशं कञ्चणकलशं व्व डुब्बन्तं ॥२४॥(२७)

चारुदत्तः । सकरुणम् । 'शशिविमलमयूखे' इत्यादि पठति ।

अपरः । अले, पुणोवि घोशेहि (२८) ।

चाण्डालः । तथा करोति ।

चारुदत्तः ।

प्राप्तोऽहं व्यसनकृतां दशामनार्यां
यत्रेदं फलमपि जीवितावसानम् ।
एषा च व्यथयति घोषणा मनो मे
श्रोतव्यं यदिदमसौ त्वया हतेति ॥ २९ ॥

चाण्डा०–(२७) अपसरत आर्याः, अपसरत । किं पेक्खधेति । आर्या छन्दः । किं पश्यत सत्पुरुषमयशोवशेन प्रनष्टजीवाशम् । कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम् ॥ २४ ॥

चारु०–[४३० पृष्ठे मुद्रितं १३ श्लोकम् ] ।

अप०—चाण्डाल इत्यर्थः । ( २८ ) अरे, पुनरपि घोष( य )।

चारु०— प्राप्तोऽहमिति । प्रहर्षिणी छन्दः । 'दशा वर्तावस्थायाम्' इति कोशः । जीवितावसानं जीवितसमाप्तिः । तद्रूपं फलमिदम् ।-यत्रावस्थायां प्राप्तम् । असौ वसन्तसेना । त्वया चारुदत्तेन ॥ २९ ॥

१ पोक्खध B. २ अलिज्जशवेण B (a), अज्जशवशेण K. ३ खुडिद० AB (abcd) D ४ पाशक B (b) ५ कलशम B (b) G. ६ द्युपदर्शित &c, whole; as before for इत्यादि D ७ घोशेहि D, ग्घाशेहि E. ८ °प्रमानं DH.

ततः प्रविशति प्रासादस्थो बद्धः

**स्थावरकः** । घोषणामाकर्ण्य सवैक्लव्यम् । कधं अपावे चालुदत्ते वावादीअदि । हग्गे णिअलेण शामिणा बन्धिदे । भोदु । आक्कन्दामि । शुणाध अज्जा, शुणाध । अस्थि दाणिं मए पावेण पवहणपडिवत्तेण पुप्फकलण्डअजिण्णुज्जाणं वशन्तशेणा णीदा । तदो मम शामिणा मं ण कामेशित्ति कदुअ बाहुपाशबैलक्कालेण मालिदा । ण उण एदिणा अज्जेण । कधं विदूलदाए ण को वि शुणादि । ता किं कलेमि । अत्ताणअं पाडेमि । विचिन्त्य । जइ एव्वं कलेमि तदा अज्जचालुदत्ते ण वावादीअदि । भोदु । इमादो पाशादबालग्गपदोलिकादो एदिणा जिण्णगवक्खेण अत्ताणअं णिक्खिवामि[१९] । वलं हग्गे उवलदे ।

स्थाव०—( २९ ) कथमपापश्चारुदत्तो व्यापाद्यते । अहं निगडेन स्वामिना बद्धः । भवतु । आक्रन्दामि । शृणुतार्याः, शृणुत । अस्तीदानीं मया पापेन प्रवहणपरिवर्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता । ततो मम स्वामिना मां न कामयस इति कृत्वा बाहुपाशबलात्कारेण मारिता । न पुनरेतेनार्येण । कथं विदूरतया न कोपि शृणोति । तत्किं करोमि । आत्मानं पातयामि ॥ यद्येवं करोमि तदार्यचारुदत्तो न व्यापाद्यते । भवतु । अस्याः प्रासाद-

१ घोषणमा° B (d). २ चारु° AB (abcd) D. ३ हगे AB (bcd) D. ४ अक्कंदामि BDH. ५ अस्ति AB (bc) EF; pr. m. Corr. अस्थि marg. B (d); अस्थि F, णत्थ J. ६ °पलिव° B, °वडिव° B (a). ७ पुप्फ° B (d). ८ °करंडअ° AB (bcd) D, °कलंडक° B; °करडक° B (a) E. ९ मे ण्ण B (a); मण्ण B (d). १० बलक्कालेण AB (bcd) E. ११ अत्तणअं EG. १२ पातेमि AB (abc) DEFK, पाडेमि B (d); पडेमि G. १३ om. B (a). १४ °चारुदत्ते AB (ac) D, °चारुदत्तो B (bd) E. १५ Corr. पासाद B (d). १६ °बालग्ग° B (bd); °बाडग्ग° EK. १७ एदिएण B (b). १८ जिण्णगवक्खेण B (d). १९ णिक्खिवा°, K. २० अत्तं B (a), अत्तं G. २१ हगे AB (bcd) D.

ण उण एशे कुलउत्तविहेगाणं वाशापादवे अज्जचालुदत्ते। एव्वं जइ विवज्जामि लद्धे मए पललोए। इत्यात्मानं पातयित्वा। ही ही णं उवलदम्हि। भग्गे मे दण्डणिअले। ता चाण्डालघोशं शमण्णेशामि। दृष्ट्वोपसृत्य। हंहो चाण्डाला, अन्तलं अन्तलं (२९)।

चाण्डालौ। अले, के अन्तलं मग्गेदि। (३०)।

चेटः। शुणोध। इति पूर्वोक्तं पठति।

बालाग्रप्रतोलिकातः एतेन जीर्णगवाक्षेणात्मानं निक्षिपामि। वरमहमुपरतः। न पुनरेष कुलपुत्रविहगानां वासपादप आर्यचारुदत्तः। एवं यदि विपद्ये लब्धो मया परलोकः। ही ही आश्चर्यं। नोपरतोऽस्मि। भग्नो मे दण्डनिगडः। तच्चाण्डालघोषं समन्वेषयामि। हं हो चाण्डालाः, अन्तरमन्तरम्।

चाण्डा०— (३०) अरे, कोऽन्तरं याचते।

चेटः—शृण्वन्त्वित्यादिः कवेरनुवादः। शुणाध अज्जा, शुणाधेत्यादेश्चेटवाक्यस्य पूर्वोक्तस्येति बोध्यम्।

१ °विहंगाणं B (a). २ अज्जो B (b) ३ चालुदत्ते AB (bcd) D, चालुदत्तो B (a) E ४ एवं. ५ यदि B (b) K; जदि BD (d) D ६ विवजामि B (a). विविज्जामि H. ७ पलोए B (a), वललोए E. ८ om AB (bcd) DEK. ९ ण उण B B (ad), णं D. F. १० इडु० AB (c): दण्डणि° B H; डंडणिअडे B (bd) GK, डंडणिअडे DF which has णी, दण्डणिअडे E. ११ °घोसं AB (abcd) DEK. १२ समण्णेसामि AB (abcd) DE. १३ दृष्ट्वोप° B (b). १४ चण्डाला B; चाण्डाल AB (c) D, चण्डाल B (abd). १५ अन्तरं AB (abcd) DEF. १६ अतलअं AB (cd) DEF, अतलअत B (b). १७ मग्गेदि E १८ शृण्वन्तु इति BEGK, शुणाध अज्जा इति D This is followed by the words अस्यैव निरङ्कुपत्रस्य अधस्यद्वितीयपङ्क्तिस्थि i.

चारुदत्तः। अये,

कोयमेवंविधे काले कालपाशस्थिते मयि।
अनावृष्टिहते शस्ये द्रोणमेघ इवोदितः॥ २६॥

भोः, श्रुतं भवद्भिः।

न भीतो मरणादस्मि केवलं दूषितं यशः।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत्॥ २७॥

अन्यच्च।

तेनास्म्यकृतवैरेण क्षुद्रेणात्यल्पबुद्धिना।
शरेणेव विषाक्तेन दूषितेनापि दूषितः॥ २८॥

चाण्डालौ। थावलअ, अवि शच्चं भणाशि (३१)।

चेटः। शच्चं। हग्गे वि मा कश्श वि कधइश्शशि त्ति पाशादबालग्गपदोलिकाए दण्डणिअलेण बन्धिअ णिक्खित्ते (३२)।

---

चारु०— कोयमेवमिति॥ २६॥ न भीत इति॥ २७॥ तेनेति। तेन शकारेण। न कृतं वैरं येन सह मा(म)येत्यर्थः। विषाक्तेन विषमिश्रेण। 'अञ्जू म्रक्षणे' इति धातुः। अनुष्टुप् छन्दः सर्वत्र॥ २८॥

चाण्डा०— (३१) स्थावरक, अपि सत्यं भणसि।

चे०— (३२) सत्यम्। अहमपि मा कस्यापि कथयिष्यसी(सी)ति प्रासादबालाग्रप्रतोलिकायां दण्डनिगडेन बद्ध्वा निक्षिप्तः।

---

१ शस्ये DE. २ ०स्थितः BB (ad) K. ३ मारणाद० DFG; मरणेन विषाक्तेन mistake B (a). ४ शरेणैव AB (bc). ५ थावलय B (a) K; थावलआ B (d) E. ६ सच्चं AB (abcd) DE. ७ भणासि AB (abcd) E. ८ गग्गे AB (abcd) D ९ हगे AB (bcd) D. १० पाशाशबालग्ग K. ११ पदोलिकाए B H (a). १२ दण्ड° BB (abd) G; दण्डनीअ° E; बन्ध° K. १३ णिक्खित्ते AB (bcd).

प्रविश्य

शकारः । सहर्षम् ।

मंशेण तिक्खोविलकेण भत्ते
शाकेण शूपेण शमच्छकेण ।
भुत्तं मए अत्तणअश्श गेहे
शालिश्श कूलेण गुलोदणेण ॥ २१ ॥

कर्णं दत्त्वा । भिण्णकंशखङ्खणाए चाण्डालवाआए शलशंजोए । जधा अ एशे उक्कालिदे वज्झडिण्डिमशद्दे पडहाणं अ शुणीअदि तधा तक्केमि दलिद्दचालुदत्ताके वज्झट्ठाणं णीअदि त्ति । ता पेक्खिश्शं । शत्तुविणाशे णाम

शा०—( २२ ) मंशेणेति । इन्द्रवज्रा छन्दः । मांसेन तिक्ताम्लेन । भक्तमोदनः । शाकेन सूपेन समत्स्यकेन । भुक्ता (भुक्तं) मयात्मनो गेहे शाले(लेः) कूलेण ओदनेन । गुडौदनेन ॥ २१ ॥ भिण(ण्ण)कंस(श)खंखणाऐ(ए) भिन्नकांस्यवत्खखणायाः कटुविकृतस्वरायाः चाण्डालवाचायाः स्वरसंयोगः । यथा चैष उक्कालिदे उद्गीतो वध्यडिण्डिमशब्दः पटहानां च श्रूयते तथा तर्कयामि दरिद्रचारुदत्तको वध्यस्थानं नीयत इति । तत्प्रेक्षिष्ये द्रक्षा(क्ष्या)मीति वा ।

१ मंशेण K. २ तिक्खा—D, ०विलेकेण. K. ३ समच्छ० AB (abcd) K; शमक्खकेण E. ४ अत्तणअस्स AB (bcd) DEG; अत्तणकस्स B (a). ५ शालिश्शकूलेण (=सादृश्यकूरेण) B, (=शाल्या कूरेण) D. ६ गुडो० B (a), गुलोद० E, गुलोदलण H. ७ भिन्नकंसखङ्ख० AB (bc), भिन्नखङ्खण ० B (a). भिण्णकंशख० H (d); ०कसख० DE, भिन्नकशखख० G, भिन्नकस० H, भिन्नकसखङ्ख० K ८ ०वाआए AB (abcd); चण्डाल° B, चण्डालवाआए E °वाअडआए H. ९ उक्कालिदे B (a), उक्कालिदे J. १० पडहाण BD. ११ णंअ om B (a) १२ पेक्खिस्स AB (bc) E. १३ सत्तु० JK. १४ ०विणाशेण महन्ते AB (c) F; °विणाशेण ममहन्ते B (d). ०विणाशेण महमहन्ते D, °विणाशे महमहन्ते H, १५ णाम twice B (a).

महन्ते हेलक्कश्श पलिदोशे होदि। शुदं अ मए जे वि किल शत्तुं वावादअन्तं पेक्खदि तश्श अण्णश्शिं जम्मन्तले अक्खिलोगे ण होदि। मए क्खु विशगण्ठिगब्भपविट्टेण विअ कीडएण किं पि अन्तलं मग्गमाणेण उप्पाडिदे ताह दलिद्दचालुदत्ताह विणाशे। शम्पदं अत्तणकेलिकाए पाशादबालग्गपदोलिकाए अहिलुहिअ अत्तणो पलक्कमं पेक्खामि। तथा कतो दृष्ट च। हीही एदाह दलिद्दचालुदत्ताह वज्झं णीअमाणाह एशे वड्डे जणशम्मद्दे। जं वेलं अम्हालिशे पवले वलमणुश्शे

धातुविनाशो नाम महान् हृदयस्य परितोषो भवति। श्रुतं च मया योऽपि किल शत्रुं व्यापाद्यमानं पश्यति तस्यान्यस्मिञ्जन्मान्तरे(न्मनि)क्षिरोगो न भवति। (वावादयमाणमिति यत्काऽये वावादयन्तं व्यापादयन्तमात्मानं मारयन्तमित्यार्थिकेयमुक्तिरर्थस्य तथाभावितया शकारवधं द्योतयतीति ध्येयम्)। मया खलु विष[ग्रन्थि]गर्भप्रविष्टेनेव कीटकेन किमप्यन्तरं मार्गमाणेनोत्पादितं(तः) तस्य

१ हलभत्ता BDEFK; लभहरश G. २ पडिदोशे AB (abcd) E; पडितोशे D. ३ च BDEF. ४ व्दयन्तं AB (bc) DK. ५ अणशिश AB (c). ६ अम्मतलं E. ७ विश AB (abcd) DH. ८ गन्दि AB (c); गंडि B (a). ९ गप्फ ? C. १० पविट्ठेण AB (abcd) CDK. ११ वि AB (abcd) D. १२ उप्पालिदे B (ad) EK. १३ विणाशे B (a). १४ संपदं B (a). १५ अप्पाण॰ B (b). १६ पाशाद॰ B (a); पशाद॰ B (b). १७ पदोलिआए AB (bc) D. १८ आदि॰? E. १९ पडक्कमं AB (abcd) EFG. २० om. DH. २१ ही (one) om. AB (bcd) FGK; हा for हीही E. २२ वज्झ AB (ac) D; वद्धं B (b) G. २३ ॰मणाह CJ. २४ एशो वुड्ढे D; एशे वड्ढे E; एवड्ढे J; यावदे K. २५ ॰समुद्दे B (a); संमद्दे D; ॰संमदे K. २६ जं वेलं B (a) EK; जं om. B (b); अवेलं ? B (d). २७ अम्हालिशे B (a). २८ पवडे AB (abcd) DEFGK. २९ वद॰ AB (abcd) DEFGK. ३० ॰माणुश्शे AB (abc) DG; ॰माणुशे EFK.

शकारः । ण हि लअॆणकुम्भशॊलिशॆ हॆग्गॆ ईंश्थिअं वावादॆमि (३८) ।

सर्वे । अहो, तुए मारिदा । ण अज्जचारुदत्तेण (३९) ।

शकारः । कॆ एव्वं भणादि (४०) ।

सर्वे । चेटमुद्दिश्य । ण एसो साहू (४१) ।

शकारः । अपवार्य सभयम् । अविदमादिकॆ अविदमादिकॆ । कधं थावॆलकॆ चॆडॆ शॆुरद्धु ण मए शञ्जदॆ । एशॆ क्खु मम अकज्जरश शॆक्खी । विचिन्त्य । एव्वं दाव कॆलइश्शं । प्रकाशम् । अलिअं भॆश्टालका हो एशॆ चॆडॆ शुवण्णचोलिआए

शा०– ( ३८ ) न हि रत्नकुम्भसदृशोदं स्त्रियं व्यापादयामि ।

सर्वे– ( ३९ ) अहो, त्वया मारिता । नार्यचारुदत्तेन ।

शा०– ( ४० ) क एष भणति ।

सर्वे– ( ४१ ) नन्वेष साधुः ।

शा०– ( ४२ ) अविदमादिके अविदमादिके । खेदेऽव्ययम् । कथं स्थावरकचेटः सुटु न मया संयतः । एष खलु ममाकार्यस्य साक्षी । एवं तावत्करिष्यामि । अलीकं मिथ्या । भट्टारकाः । हो अहो । एष चेटः सुवर्णचोरिकायाः । हेतौ पञ्चमीयम् । सुवर्ण-

१ लदण AB (bc) G, ओदण marg जोत० B (d), ओदण० E पदण० F, लोदण० K २ शालिशे B (b) ३ हगे AB (bcd) DE, ४ इथिअ AB (abcd) CDJK ५ वावादेहि AB (bc) (=व्यापादयामि) AB (c), वावादेदि B (d) E वावादेहिमि DH, वावादेभि G ६ मालिदा AB (acd) DE, माहिदा B (b). ७ किं ? K ८ साहु AB (bc) D. ९ om B B (a) मादिके om D १० थावडअ AB (cd), DFG थावडय B (b) K, थावडए E ११ सुट्टु AB (abcd) JK १२ सक्खी AB (abcd) D १३ कलइश ? D १४ भशालका AB (abc), भशाल० B (d) CDJK १५ चेले AB (bc) DEK.

मए गहिदे, पिट्टिदे, मालिदे, बद्धे अ। ता किदवेले एशे जं भणादि किं शव्वं शच्चं। अपवारितकेन चेटस्य कटकं प्रयच्छति। स्वैरकम्। पुत्थका थावलका चेडा, एदं गेण्हिअ अण्णधा भणाहि (४२)।

चेटः। गृहीत्वा। पेक्खध पेक्खध भट्टालका हो, शुवण्णेण मं पलोभेदि (४३)।

शकारः। कटकमाच्छिद्य। एशे शे शुवण्णके जश्श कालणादो मए बद्धे। सक्रोधम्। हंहो चाण्डाला, मए क्खु एशे शुवण्णभण्डाले णिउत्ते शुवण्णं चोलअन्ते मालिदे, पिट्टिदे। ता जदि ण पत्तिआअध ता पिट्टिं दाव पेक्खध (४४)।

चोरिकाहेतोरित्यर्थः-। मया गृहीतस्ताडितो मारितो बद्धश्च। तत्कृतवैर एव यद्भणति किं सर्वं सत्यम्। स्वैरम्। पुत्रक स्थावरक चेट, एतद्गृहीत्वान्यथा भण।

चे०—(४३) पश्यत भट्टारकाः अहो, सुवर्णेन मां प्रलोभयति।

श०—(४४) एतत्तत्सुवर्णकं यस्य कारणात्(त्) मया बद्धः। हंहो इति संमानपूर्वं संबोधनम्। चाण्डाला, मया खल्वेष सुवर्णभाण्डारे नियुक्तः सुवर्णं चोरयन्मारितस्ताडितः। तद्यदि न प्रत्ययध्वं (?) तदा पृष्ठं तावत्पश्यत।

१ पिट्टिदे AB (ac) K; पिट्टि° B (bd) CDJ. २ om. B B (a); ३ किदे° E. ४ om. B (d). ५ मणादि B (a); भदादि ? D. ६ शव्वं सच्चं E; शर्वं सत्तं K. ७ पुत्तका AB (c) CDJK; पुत्थका B (a), पुत्तचका B (b); पुत्तका B (d) E. ८ थावडक AB (bcd) DFK. ९ अनधा AB (c); अंणधा H. १० om. AB (bcd) DEGK. ११ भट्टा° AB (abcd) CDEGJK. १२ शुवण्णेन AB (abcd) D. १३ कालणा om. दो AB (bcd) DEFK. १४ बद्धे AB (bc); बद्धे CDJ. १५ चंडालआ B (d); चंडाला DEH. १६ °भंडालो B (a). १७ णिउत्ते D. १८ शुवण्ण AB (c); शुवण्णअं D. १९ पिट्टिदे AB (abcd) CDFJK. २० पत्तिआ ? AB (ac). २१ पिट्टि AB (c), पिट्टि B (abd) CD; पिट्टि JK. २२ पेक्खध B (a).

चाण्डालौ । दृष्ट्वा । शोहणं भणादि । विडत्ते चेडे किं ण प्पेडवदि ( ४९ ) ।

चेटः । हीमादिके ईदिशे दाशभावे जं शच्चं कंपि ण पत्तिआअदि । सकरुणम् । अज्ज चालुदत्त, एत्तिके मे विहवे ( ४६ ) । इति पादयोः पतति ।

चारुदत्तः । संकरुणम् ।

उत्तिष्ठ भोः पतितसाधुजनानुकम्पि-
न्निष्कारणोपगतबान्धव धर्मशील ।

---

चाण्डा० — ( ४९ ) शोभनं भणति । विडत्ते चेडे किं ण प्पेडवदि । वित्तप्रचेटः किं न प्रतपति इत्यर्थः । ताडनादिना वित्तप्रचेटः- किं न प्रतपति संतापेन किं किं स्वामिविरुद्धं नाचरति । न ब्रवति । येन स्वामिविनाशः स्यादपि तु सर्वमेवाचरति वदतीति निर्गलितार्थः ।

चे० — ( ४६ ) हीमादिके खेदे । ईदृशो दासभावो यत्सत्यकमपि न प्रत्याय्यते । प्रत्ययो बोधः । न बोधविषयो भवतीत्यर्थः । प्रशस्तं सत्यं सत्यकम् । प्रशंसायां कन् । आर्य चारुदत्त, एतावान्मे विभवः । सामर्थ्यमित्यर्थः ।

चारु०—उत्तिष्ठ भो इति । वसन्ततिलका छन्दः । न संवदति ।

---

१ सोहणं B (abcd) DE. २ विडित्ते D. ३ and °वदि BCDEFGK; प्पतवदि J. ४ ही मादिके B. ५ दास° II (ab) E. ६ सच्चक ण पत्ति° II (a); शच्चकं पि ण पत्ति° B (d) E, सच्च कंपि० DG; सच्चक पि ण K. ७ पत्तिआ ईआदि AB (bcd) DEFGK, पत्तिआएदि B. ८ चारुदत्त AB (abcd) D. ९ om. B, II (a) १० °शील:-DH.

यत्नः कृतोऽपि सुमहान्मम मोक्षणाय
दैवं न संवदति किं न कृतं त्वयाद्य ॥ ३१ ॥

चाण्डालौ । भट्टके, पिट्ठिअ एदं चेडं णिक्कालेहि (४७) ।

शकारः । णिक्कश्ल ले । इति निष्कामयति । अले चाण्डाला, किं विलम्बेध, मालेध एदं (४८) ।

चाण्डालौ । जदि तुवलशि ता शअं ज्जेव्व मालेहि (४९) ।

रोहसेनः । अले चाण्डाला, मं मालेध, मुञ्चध आवुकं (५०) ।

---

संवादः प्रामाण्यमिति तान्त्रिकाः । दैवं न प्रमाणतां प्रयातीत्यर्थः ॥ ३१ ॥

चाण्डा०– (४७) भट्टक, ताडयित्वैनं चेटं निष्काश(म)य ।

शका०– (४८) निस्सर रे । अरे चाण्डालाः(लौ), किं विलम्बध्वम् (न्वेथाम्) । मारयतैतम् (तमेतम्) ।

चाण्डा०– (४९) यदि त्वरयसे तदा स्वयमेव मारय ।

रोह०– (५०) अरे चाण्डाला (लौ), मां मारयत (तम्), मुञ्चत(तं) पितरम् ।

---

१ सुमहान्म०! AB (c). २ भट्टके EK. ३ चेडअं AB (bcd) DGK. ४ णिक्कालेहि BB (ad). ५ णिक्कम B (d): णिक्कल CJ, ले is followed by णिक्कल D, णिक्कसं E: णिक्कम K: णिक्कम (?). ६ निर्गमयति AB (bcd) DFK; निष्क्रामयति E ७ शकारः—अले &c. ८ चाण्डाला B B (ab). ९ विलंबध AB (c) E: विलंबध B (bd) DH. १० मालेध twice B (d) ११ मालेद AB (abc) FJK. १२ तुलेशि B B (a); तुवलसि DFHK. १३ शअं AB (bc) EK. १४ अं B. This and the next speech omitted G. १५ चाण्डाला B (d) E. चण्डालआ B B (a) मालेध मं B B (a), मालेध DH. १७ मुञ्च K.

**शकारः** । शपुत्तं ज्जेव एदं मालेध ( ९१ )।

**चारुदत्तः** । सर्वमस्य मूर्खस्य संभाव्यते। तद्गच्छ पुत्र, मातुः समीपम् ।

**रोहसेनः** । किं मए गदेण कादव्वम् ( ९२ ) ।

**चारुदत्तः** ।

आश्रमं वत्स गन्तव्यं गृहीत्वाद्यैव मातरम् ।
मा पुत्र, पितृदोषेण त्वमप्येवं गमिष्यसि ॥३२॥

तद्वयस्य, गृहीत्वैनं व्रज ।

**विदूषकः** । भो वअस्स, एव्वं तुए जाणिदं तुए विणा अहं पाणाइं धारेमि त्ति ( ९३ ) ।

---

शका०— ( ९१ ) सपुत्रमेवैतं मारयत(तम्) ।

रोह०— ( ९२ ) किं मया गतेन कर्तव्यम् ।

चारु०—आश्रममिति । अनुष्टुप् छन्दः । नगरीमिमामुज्जयिनीं परित्यज्य कस्यापि मुनेराश्रमं गन्तव्यं गृहीत्वा मातरम् । तत्राप्यद्यैव गन्तव्यं न तु श्वः । अत्राह मा पुत्रेत्यादि । पितृदोषेण वसन्तसेनामारणापवादरूपापराधेनेत्यर्थः ॥ ३२ ॥

विदू०— ( ९३ ) भो वयस्य, एवं त्वया ज्ञात ( तं ) त्वया विनाहं प्राणान्धारयामीति ।

---

१ किंपि DH २ ॰प्यवगमिष्यसि H, त्वयाप्येवं ? K. ३ om B (d), एवबे ? F. ४ जाणेद C ५ विण h. ६ पाणाइं H.

चारुदत्तः। वयस्य, स्वाधीनजीवितस्य न युज्यते तत्र प्राणपरित्यागः।

विदूषकः। स्वगतम्। जुत्तं णेदं। तथा वि ण सक्कुणोमि पिअवअस्सविरहिदो पाणाइं धारेदुं त्ति। ता बम्हणीए दारअं समप्पिअ पाणपरिच्चाएण अत्तणो पिअवअस्सं अणुगमिस्सं। प्रकाशम्। भो वअस्स, पराणेमि एदं लहुं (५४)। इति सकण्ठग्रहं पादयोः पतति। दारकोपि रुदन्पतति।

शकारः। अले, णं भणामि शपुत्तकं चालुदत्तकं वावादेध त्ति (५५)।

चारुदत्तः। भयं नाटयति।

---

चारु०— न यु(यु)ज्यते इत्यादि। एवमेवात्मघातस्य महापातकत्वादिति भावः।

विदू०— (५४) युक्तं नेदम्। इदं स्वाधीनजीवितस्य प्राणपरित्यागादि योग्यं नेत्यर्थः। किं तु स्नेहशृङ्खलाबन्धनमोचनस्याशक्यत्वादाह। तथा पीत्यादि। तथापि न शक्नोमि प्रियवयस्यविरहितः प्राणान्धर्तुमिति। तद्ब्राह्मण्यै दारकं समर्प्य प्राणपरित्यागेनात्मनः प्रियवयस्यमनुगमिष्यामि। भो वयस्य, परानयाम्येतं लघु।

शका० — (५५) अरे, ननु भणामि सपुत्रकं चारुदत्तकं व्यापादयतेति(तमिति)।

---

१ तत्र नयुज्यते प्रा० BB (a) २ °विरहिदे AB (bc). ३ धारेदुत्ति D. ४ om. K. ५ बम्हणं B (a). ६ Twice B (b). ७ °च्चायेण K. ८ वअस्समग्गं K. ९ लदु AB (c) D १० महणं B (d). ११ चारु° B (a), om· D. १२ वावाधत्ति B (a).

चाण्डालौ। अले, णहि अम्हाणं ईदिशी लेआणत्ती जधा शपुत्तं चालुदत्तं वावादेध त्ति। ता णिक्कम ले दालआ, णिक्कम (५६)। इति निष्क्रामयतः।

चाण्डालौ। इमं तइअं घोशणट्ठाणं। ताडेध डिण्डिमं (५७)। पुनर्घोषयतः।

शकारः। स्वगतम्। कधं एशे ण पत्तिआअन्ति पौले। प्रकाशम्। हंहो चालुदत्ता वडुव्वका, ण पत्तिआआदि एशे पोलजणे। तां अत्तणकेलिकाए जीहाए भणाहि मए वशन्तशेणिआ मालिदेत्ति (५८)।

चारुदत्तः। तूष्णीमास्ते।

---

चाण्डा०— (५६) अरे, नह्यस्माकमीदृशी राजाज्ञप्तिर्यथा सपुत्रं चारुदत्तं व्यापादयतेति(यतमिति)। तन्निष्क्र(ष्का)म रे दारक।

चाण्डा० — (५७) इदं तृतीयं घोषणास्थानम्। ताडयत डिण्डिमम्।

शका० — (५८) कथमेते न प्रत्ययन्ते पौराः। हंहो चारुदत्त बटुवक, न प्रत्ययते एष पौरजनः। तत् आत्मणकेलिकाए आत्मीयया। जिह्वया भण मया वसन्तसेनिका मारितेति।

---

१ om D. २ णहि J. ३ लाआणत्ति D ४ शपुत्ताकं B. ५ चारुदत्तं AB (bcd), om B. ६ णिक्खम AB (bc) DEK; णिक्कम B (d) ७ om AB (bcd) DEF. ८ घोसण AB (bcd) DEH. ९ थाण AB (c), ठाणं B (b). ठाण B (d), त्थाण DH. १० पूर्वोक्त घोष० B B (a) ११ om. B (a) १२ शे B B (abd) EK. १३ पडला DH. १४ om B (a) १५ चरुद० AB (bcd). १६ वडुट्टका AB (c); वडुट्टका B (b); वडुवट्टुका DH. १७ पत्तिआ-आदि AB (c), पत्तआदि D, पत्तदि H. १८ पउल० DH. १९ तो E. २० केलि-आए DH. २१ भणेहि BB (a) DH. २२ °शणा BB (a) DH; वसन्तसेणिआ E. २३ वावादिदेत्ति BB (a).

शकारः । अले चण्डाले गोहे, ण भणादि चालुदत्तवेडुव्वके । ता भणावेध इमिणा जज्जलवंशखण्डेण शङ्कलिण तालिअ तालिअ ( ५९ ) ।

चाण्डालः । प्रहारमुद्यम्य । भो चालुदत्त, भणाहि (६०) ।

चारुदत्तः । सकरुणम् ।

प्राप्यैतद्व्यसनमहार्णवप्रपातं
न त्रासो न च मनसोऽस्ति मे विषादः ।
एको मां दहति जनापवादवह्नि-
र्वक्तव्यं यदिह मया हता प्रियेति ॥२३ ॥

शकारः । पुनस्तथैव ।

---

शका०– (५९) अरे चाण्डाल गोह, न भणति चारुदत्तवृद्धबकः । बुडुव्वकः इतीयं भाषा । बुडबक इति प्रलपन्ति च लोकाः । तद्भणयतानेन जर्जरवंशखण्डेन संखलेन ताडयित्वा । संखलेन वध्यपटहडिण्डिमवादनदण्डेनेत्यर्थः ।

चाण्डा०– ( ६० ) भो चारुदत्त, भण ।

चारु०–प्राप्यैतद्व्यसनेति । एतद्व्यसनं वसन्तसेनामारणापवादरूपं दुःखं तदेव महार्णवस्तत्र प्रपातं प्राप्येत्यन्वयः । प्रिया वसन्तसेना ॥ २३ ॥

शका०– पुनस्तथैव । भणेति—शेषः ।

---

१ चण्डालआ॰ B; चण्डाला B (d) E. २ चाह॰ AB (bcd). ३ वुडुघके AB (bc); वुट्टवडके D; वुट्टवडुके H. ४ संचलमिणा BB (ad); संधमिणा EK. ५ जर्जर AB (bcd) K; अज्जर B (a) D. ६ संखलेन B (ad). ७ om: AB (bc) DEF; °लिअ B (d). ८ अजणपालु॰ BB (a); चारुदत्त AB (abcd) K. ९ महार्णवं F. १० प्रपातं AB (c) D; प्रणतं B (a).

चारुदत्तः । भो भोः पोराः, 'मया खलु नृशंसेन' इत्यादि पुनः पठति ।

शकारः । वावादिदा (६१) ।

चारुदत्तः । एवमस्तु ।

चाण्डालः । अले, तेच अत्त वज्झवालिआ (६२) ।

द्वितीयः । अले, तव (६३) ।

प्रथमः । अले, लेक्खअं कैलेम्ह (६४) । इति बहुविध लेखकं कृत्वा ।

प्रथमः । अले, जदि मम केलिका वज्झवालिआ ता चिट्ठदु दाव मुहुत्तअं (६५) ।

द्वितीयः । किं णिमित्तं (६६) ।

---

[चारु०— नवमाङ्कः । पृ० ४०१।४१७ च श्लो० ३०।३८च ।]

शका०— (६१) व्यापादिता ।

चाण्डा०— (६२) अरे, तव वध्यपालिका ।

द्विती०— (६३) अरे, तव ।

प्रथ०— (६४) अरे, लेख कुर्मः (वंः) ।

प्रथ०—(६५) अरे, यदि मम केलिका मदीया । वध्यपालिका तदा तिष्ठतु तावन्मुहूर्तम् । चारुदत्त इति शेषः । प्रक्रान्ते वा ।

द्विती०— (६६) किं निमित्तम् ।

---

१ भो भो पौरा om DH २ Whole verse see before for इत्यादि D ३ अत्त om AB (cd) DK, तवद्धवालिया H (b) ४ वद्द° AB (c) FG ५ अले अले H (a), ६ लेखअं AB (c) D; अलेक्खअं H (d), लेक्खकं E ७ कलम्ह B (d) ८ वद्द० AB (ac) ९ °वाडिदा and over दा the letter य B (d), वाडिदा E १० चिट्ठ H (b) D, चिट्ठदुम्हएव ? H

**प्रथमः** । अले, भणिदो म्हि पिदुणा शग्गं गच्छन्तेण जधा पुत्त वीरअ, जइ तुह वेज्झवाली होदि मा शहशत्ति वावादअिशा वज्झं ( ६७ ) ।

**द्वितीयः** । अले, किं णिमित्तं ( ६८ ) ।

**प्रथमः** । कदावि कोवि शाहू अत्थं दइअ वज्झं मोआवेदि । कदावि लण्णो पुत्ते भोदि । तेणे वड्ढावेण शव्ववज्झाणं मोक्खे भोदि[१४] । कदावि हत्थी बन्धं खण्डेदि । तेणे शंम्भमेण वज्झे मुक्के भोदि । कदावि लाअपलिवत्ते भोदि । तेण शव्ववज्झाणं मोक्खे भोदि ( ६९ ) ।

---

प्रथ०— ( ६७ ) अरे, भणितोऽस्मि पित्रा स्वर्गं गच्छता । म्रियमाणेन पित्रा मरणसमये मह्यं कथितमित्यर्थः । तदेवाह । जधेत्यादिना । यथा पुत्र वीरक, यदि तव वध्यपाली भवति मा सहसेति सहसैवेत्यर्थः । व्यापादयसि वध्यम् ।

द्विती०— ( ६८ ) अरे, किं निमित्तम् ।

प्रथ०— ( ६९ ) कदापि कोपि साधुरर्थं दत्त्वा वध्यं मोचयति । कदापि राज्ञः पुत्रो भवति । तेन वद्धावेन वड्ढावेनेति देशी केवलं भाषा । वृद्धिमहोत्सवेनेत्यर्थः । महोत्सववृद्धयेति यावत् । सर्वबध्यानां मोक्षो भवति । कदापि हस्ती बन्धं खण्डयति । 'बन्धं

---

१ पिदुणा E. २ यथा AB (bc); जह D; जहर (?); H. ३ वज्झ० AB (ac). ४ सहसत्ति AB (bcd) K; शहसा वावा० H; सहसत्ति DH. शहसत्ति E. ५ वावादीअशि BEK; वावादीअशी DH. ६ साधु AB (bcd) DEF; साहू J. ७ दइय B (a). ८ om: H (a). ९ कदावे E. १० पुत्तो DH. ११ तेन C. १२ om. B B (a); वड्ढावेण B (d); वद्धावण्ण DH; वड्ढावेण E; वद्धावेण K. १३ मोक्खो AB (abcd) DJK. १४ होदि AB (bcd) DFGJK. १५ संभमेण. १६ वज्झो B (d) H. १७ मुक्के AB (bc) D; मुक्को B (d) E. १८ °पडिव° AB (abcd) DEF. १९ सव्व° J.

शकारः । किं किं लाअपलिवत्ते होदि (७०) ।

चाण्डालः । अले, वज्झवालिआए लेक्खअं कलेम्ह (७१) ।

शकारः । अले, शिग्घं मालेध चालुदत्ताकं (७२) ।

इत्युक्त्वा चेटं गृहीत्वैकान्ते स्थितः ।

चाण्डालः । अज्ज चालुदत्त, लाअणिओओ क्खु अवलज्झदि । ण क्खु अम्हे चाण्डाला । ता शुंमलेहि जं शुंमलिदव्वं (७३) ।

---

खुड्डदि' इति पाठः क्वचित् । बन्धं छिन्नती( भन्ती )त्यर्थः । तेन संभ्रमेण वध्यो मुक्तो भवति । कदापि राजपरिवर्तो भवति । तेन सर्ववध्यानां मोक्षो भवति ।

शका०– (७०) किं किं राजपरिवर्तो भवति । राज्ञः परिवर्तः परिवर्तनम् । अन्यो राजेत्यर्थः ।

चाण्डा०– (७१) अरे, वध्यपालिकाया लेखं कुर्मः (लेखं कियत्यः पालिकास्तव मम च कियत्य आसन्नाभ्यामुपभुक्ता या काः का इत्येवं गणनरूपं लिखितदर्शनरूपं न व्यवहारमित्यर्थः । पूर्वमिह च बोध्यः)

शका०– (७२) अरे, शीघ्रं मारयत चारुदत्तकम् ।

चाण्डा०– (७३) आर्य चारुदत्त, राजनियोगः खल्वपराध्यति । न खलु वयं चाण्डालाः । तत्स्मर यत्स्मर्तव्यम् ।

---

१ Speeches of चाण्डा० and शकार om K. २ °वत्ति० AB (bc) D; °वट्टि० B (a), °वालि० B (d). ३ अलेले B, अले अले B (a). ४ °वालिआए AB (bcd) EF, °वालिआले० D, °वड्डिआले० B. ५ लेक्खअं AB (c) DE. ६ लाअणिओओ B (a), लाअभाणिओओ B (d). ७ अवलज्झदि BDG; अवज्झदि E. ८ क्खु AB (c) om. B, हु B (bd) EG. ९ चाण्डाल AB (c). १० शुमलेहि AB (bcd) DE; शुमलेहि B (a). ११ om. B (a) के B (b), जं B (d). १२ शुमलि० D.

चारुदत्तः ।

प्रभवति यदि धर्मो दूषितस्यापि मेऽद्य
प्रबलपुरुषवाक्यैर्भाग्यदोषात्कथंचित् ।
सुरपतिभवनस्था यत्र तत्र स्थिता वा
व्यपनयतु कलङ्कं स्वस्वभावेन सैव ॥३४॥

भोः, क्व तावन्मया गन्तव्यम् ।

चाण्डालः । अग्रतो दर्शयित्वा । अले, एदं दीशदि दक्खिणमशाणं । जं पेक्खिअ वज्झा झत्ति पाणाइं मुञ्चन्ति । पेक्ख पेक्ख ।

अद्धं कलेवलं पडिवत्तं कड्ढन्ति दीहगोमाओ ।
अद्धं पि शूललग्गं वेशँ विअ अट्टहाशँ दश ॥३५॥(७४)

---

चारु०— प्रभवतीति । मालिनी छन्दः । प्रबलानां न्यायाधीशानामधिकरणिकादीनां पुरुषाणां वाक्यैर्दूषितस्याद्य मे भाग्यदोषाद्विदूषककक्षतःसुवर्णालंकारनिपातरूपाद्दूषितत्वे( स्ये )त्यन्वयः । स्वर्गस्था भूमिस्थिता वा सैव वसन्तसेनैव । इमं कलङ्कं दूरीकरोतु ॥ ३४ ॥

चाण्डा० —( ७४ ) अरे, एतद्दृश्यते दक्षिणश्मशानम् । यत्प्रेक्ष्य वध्या झटिति प्राणान्मुञ्चन्ति । पश्य । अर्द्धेति । आर्या छन्दः । अर्धं कलेवरं प्रतिवृत्तं कर्षन्ति दीर्घगोमायवः । अर्धमपि शूललग्नं

---

१ प्रबल H B (ad) EK. २ भुवनस्था H H (ad). ३ तथा० B (b). ४ रशहित० G. ५ सैषा E. ६ दक्खिण? K. ७ °मसाणं H (a). ८ °अज्ज वज्झा H (a); पेक्खिअवज्झा D. ९ झत्ति CJ, जत्ति E; ओति K. १० मुञ्चति AB (c); मुञ्चेति B (a); मुञ्चदि D. ११ om: AB (bc) DFG. १२ अद्धकलेवरपडिवत्त H (abd)· °वुत्तं DEH; ०वत्तं AFGK, पलिवत्तं B. १३ कड्ढंति AB (c) E; कटन्ति B (ab), कड्डंति B (d); कड्ढन्ति H, कड्ढिति K. १४ गोमाअओ DH. १५ वि AB (abcd) DF; °रिमति? E; अर्धं वि K १६ शूलग्ग B (a), शूलल्लं E, ०लग्ग J. १७ वेशमिव B (abd), वेशमिव EK १८ °हासस्य B (a)

चारुदत्तः । हा हतोस्मि मन्दभाग्यः । इति सविगमुपविशति ।

शकारः । ण दाव गमिश्शं । चालुदत्तकं वावादअन्तं दाव पेक्खामि । परिक्रम्य दृष्ट्वा । कधं उवविट्टे (७५) ।

चाण्डालः । चालुदत्ता, किं भीदेशि (७६) ।

चारुदत्तः । सहसोत्थाय । मूर्ख, 'न भीतो मरणादस्मि केवलं दूषितं यशः' इत्यादि पुनः पठति ।

चाण्डालः । अज्ज चालुदत्त, गअणदले पडिवशन्तो चन्दशुज्जो वि विपत्तिं लहन्ति । किं उण जणा मलण-

---

वेशामियाट्टहासस्य । प्रतियूत्तमर्धं कलेवरमित्यर्थः । गोमायुः शृगालः । वेशामित्यादेर्हास्यास्य(स्प)दमित्यर्थः ॥ ३९ ॥

शका० — (७५) न तावद्गमिष्यामि । चारुदत्तं व्यापाद्यमानं तावत्पश्यामि । कथमुपविष्टः ।

चाण्डा० — (७६) चारुदत्त, किं भीतोसि ।

[चारु० — पृ० ४४१ श्लो० २७]

चाण्डा० — (७७) आर्य चारुदत्त, गगनतले प्रतिवसन्तः

---

१ नेपथ्ये before शकारः B (abd) E. २ चारु० AB (bcd) E. ३ °भ्यता B (d). ४ उवविट्ठे AB (abc) CDHJK; उवविट्ठो B (d). ५ चाण्डालो B (a). ६ चालुदत्त CJ. ७ भीदे° B (a); भिदे° B (d). ८ om: B (a) ९ भीदर्मं° BDEFGK. १० केवल······यशः om: B B (a); ११ Whole verse repeated to दूषित with इति for इत्यादि D. १२ om: B (a) H. १३ चारु० AB (abcd) E. १४ °तले B (a). १५ परि° B (d) E. १६ वसन्ता AB (abcd) E. १७ °सुज्जा AB (abcd) D. १८ om: AB (bc) D. १९ पुन BDEG. २० जाण B (b), जाण pr. m. corr. जणा B (d); जन G. २१ मअक° DH.

भीतुआ माणवा वा। लोए कोवि उट्ठिदो पडेदि, कोवि पडिदोवि उट्ठेदि।

उट्ठन्तं पडन्ताह वशणपाडिआ शवश्श उण अस्थि।
एदाइं हिअए कडुअ शन्धालेहि अत्ताणअं ॥ ३६ ॥

चाण्डालं प्रति। एदं चउट्ठं घोशणट्ठाणं। ता उग्घोशम्ह। (७७)।
पुनस्तथैवोद्घोषयतः।

चारुदत्तः। हा प्रिये वसन्तसेने, 'शशिशकलमयूख' इत्यादि पुनः पठति।

---

( न्तौ ) चन्द्रसूर्यौः ( र्यौ ) विपत्ति लभन्ते (भेते)। किं पुनर्जना-मरणभीरुका मानवा वा। लोके [कोप्युत्थितः पतति], कोपि पतितोप्युत्तिष्ठते (ति)। उट्ठन्त इति। उत्थितः पतनं च(?)। वसनपातिका शवस्य पुनरस्ति। वसनपातिका वस्त्रपतनम्। वस्त्रं प्रसारितं यथा निपतति पुनरुत्पतति च तथा शवोपि जीवति कदाचित्। किं पुनर्जी( र्जी )वमे( वन्म )नुष्यः पतितः पुनरुत्तिष्ठव( ति ) इति वाच्यमिति भावः। एतानि हृदये कृत्वा स (?) संधारयात्मानम् ॥३६॥ एतच्चतुर्थघोषणास्थानम्। तदुद्घोषामः ( यामः )।
[चारु०– पृ० ४३० श्लो० १३]

---

१ भीरुआ B (a); भीतुआ B (b). २ माणवा. वालो. ण-कोवि B (a); मा वा वा लो ण del. all. वा and ण corr in ए B (d); माण..... लोए B ३ पलदि AB (abcd) DEFG. ४ उड्डदि B (d). ५ Not a verse BCD उट्ठत B (d); उत्थन्त G; ६ वशण्ण B (b). ७ पातिआ B. ८ शत्तश्श B (ad). ९ अस्थि E. १० संधालेहि AB (abcd) CDJ. ११ °उत्थं ABB (bcd); चउत्थअं B (a); १२ घोसण० B (ad); घोषणा B (b) E; घोसणा DH. १३ °त्थाणं B (a); ठाणं B (b), ठाणं H. १४ °सम्ह AB (abcd) DE; घोसम्ह K. १५ ०घोषयति AB (bc) FG; For पुनस्तथैव &c. उभौ शुणाध .... शासदि इति उद्घोषयति D. १६ शशिविमल° B (d); whole verse repeated for इत्यादि D; शशिशकलमूयेरनादि K. १७ om. B.

ततः प्रविशति ससंभ्रमा वसन्तसेना भिक्षुश्च ।

**भिक्षुः** । हीमाणहे अट्ठाणपलिश्शन्तं शमश्शाशिअ वशन्तशेणिअं णअन्ते अणुग्गहिदम्हि पव्वज्जाए । उवाशिके, कहिं तुमं णइश्शं (७८) ।

**वसन्तसेना** । अज्ज, चारुदत्तस्स ज्जेव्व गेहं । तस्स दंसणेण मअलञ्छणस्स विअ कुमुदिणिं आणन्देहि मं (७९) ।

**भिक्षुः** । स्वगतम् । कदलेण मग्गेण पविशामि । विचिन्त्य । लाअमग्गेण ज्जेव पविशामि । उवाशिके, एहि । इम लाअमग्गे । आकर्ण्य । किं णु हु एशे लाअमग्गे महन्ते कलअले शुणीअदि (८०) ।

---

वसन्तसेना भिक्षुश्च । इमौ तौ पूर्वोक्तौ [पृ० २६८–२७१] ।

भिक्षु· –(७८) हीमाणहे आश्चर्ये । अस्थानपरिश्रान्तां(न्ताम्) । समाश्वास्य वसन्तसेनिकां नयन्ननुगृहीतोस्मि । प्रव्रज्यया संन्यासेनेत्यर्थः । प्रव्रज्या संन्यासः । उपासिके, कुत्र त्वां नेष्यामि ।

वस० – (७९) आर्य, चारुदत्तस्यैव गेहम् । तस्य दर्शनेन मृगलाञ्छनस्येव कुमुदिनीमानन्दय माम् ।

भिक्षु –(८०) क(त)रेण मार्गेण प्रविशामि । राजा(ज)मार्गेणैव प्रविशामि । उपासिके, एहि । इमं राजमार्गम् (अयं)

१ पत्थाण A B (c) F H अत्थाण H (ab) h, पत्थाण D, अट्ठाण F; अठाण G
२ पडिश्शं° B (abcd) [ वशंति H (a) E, वशंति B (bc), शंति FG, वशंति corr वशंतें B (d) D H h ] ३ °सिअ D ४ वसन्त° A B (abc) ५ णयन्ते AB (c) D, णअन्तो B (ad) G, णयन्तो H (b) णयन्ता EK ६ °गाहिदम्हि° AB (bcd) G, अणग्गिहि° H ७ चालुदत्तश्श जेव्व AB (c), चालुदत्तस्स H (a), चालुदत्तश्शाव्व H (b) चालुदत्तस्सेव्व EK ८ °लञ्छणस्स BEG ९ °णीं DFH. १० णं F, मां h ११ मग्गण ? E १२ गच्छामि BB (a) १३ लाअ° H (d) १४ एहि एहि B B (a), एदिश्म E १५ पाशे B (d) १६ कलकले H (a), कन्दलआल ? B (b) १७ शुणीअदि AB (c)

वसन्तसेना । अग्रतो निरूप्य । कधं पुरदो महाजणसमूहो । अज्ज, जाणाहि दाव किण्णेदं त्ति । विसमभरक्कन्ता विअ वसुन्धरा एअवासोण्णदा उज्जइणी वट्टदि (८१) ।

चाण्डालः । इमं अ पँच्छिमं घोषणट्ठाणं । ता तालेध डिण्डिमं । उग्घोशेध घोशणं । तथा कृत्वा । भो चालुदत्त, पँडिवालेहि । मा भाआहि । लहुं ज्जेव मालीअशि (८२) ।

चारुदत्तः । भगवत्यो देवताः ।

भिक्षुः । श्रुत्वा ससंभ्रमम् । उवाशिके, तुमं किल चालुदत्तेण मालिदाशि त्ति चालुदत्ते मालिदुं णीअदि (८३) ।

---

राजमार्गः ) । किं नु खल्वेव राजमार्गे महान्कलकलः श्रूयते ।

वस० – ( ८१ ) कथं पुरतो महाजनसमूहः । आर्य, जानीहि तावत्किं नेदमिति । विषमभरक्रान्तेव वसुंधरा एकवासोन्नतोज्जयिनी वर्तते( ॥ ) ।

चाण्डा० – (८२) इदं च पश्चिमं घोषणस्थानम् । तत्ताडयत डिण्डिमम् । उद्घोषत घोषणाम् । भो चारुदत्त, प्रतिपालय । क्षमस्वेत्यर्थः । मा बिभेहि(भीहि) । लघु शीघ्रमेव मार्यसे ।

भिक्षुः– श्रुत्वेति ।घोषणां श्रुत्वेत्यर्थः । (८३) उपासिके, त्वं किल चारुदत्तेन मारितासीति चारुदत्तो मारयितुं नीयते ।

---

१ भवक्कंता B (a); भरक्कंता D. २ वसुंधराए D. ३ एआवासो AB (c) D; एआवासो pr. m. corr. एअवा°, B (d) एअवासा° H. ४ पच्छिमं ABC (a), पश्चिमं B (b). ५ घोसण° B (ad). ६ तडेध B B (a). ७ °ग्घोसेध B (ad). ८ घोषणं AB (bc) B; घोसणं B (ad) D. ९ चारु° B (ad). १० पडु D; पलि° F. ११ वालेहि ····· भाआहि om. AB (bc) DG. १२ मालीअसि. DEG. १३ उवासिक B (d). १४ चारु° B (a) १५ चालुदत्तो AB (abcd) CJ.

वसन्तसेना । ससंभ्रमम् । हद्धी हद्धी कधं मम मन्दभाइणीए कदे अज्जचारुदत्तो वावादीअदि । भो, तुरिदं तुरिदं आदेसेहि मग्गं ( ८४ ) ।

भिक्षुः । तुवलदु तुवलदु बुद्धोवाशिआ अज्जचालुदत्तं जीअन्तं शमश्शाशिदुं । अज्जा, अन्तलं अन्तलं देध (८५) ।

वसन्तसेना । अन्तरं अन्तरं ( ८६ ) ।

चाण्डालः । अज्ज चालुदत्त, शामिणिओओ अवलज्झदि । ता शुमलेहि जं शुमलिदव्वं ( ८७ ) ।

चारुदत्तः । किं बहुना । 'प्रभवति' इत्यादि श्लोकं पठति ।

---

वस०–(८४) हद्धी हद्धी । भये वीप्सा । कथं मम मन्दभागिन्याः कृत आर्यचारुदत्तो व्यापाद्यते । भोः, त्वरितं त्वरितमादिश मार्गम् ।

भिक्षुः– (८५) त्वरतां त्वरतां बुद्धोपासिकार्यचारुदत्तं जीवन्तं समाश्वस्तुम् (श्वासयितुम्) । आर्याः, अन्तरमन्तरं दत्त (दत्त) ।

वस० –( ८६ ) अन्तरमन्तरम् ।

चाण्डा०– ( ८७ ) आर्य चारुदत्त, स्वामिनियोगोपराध्यति । तत्स्मर यत्स्मर्तव्यम् ।

[चारु०– पृ० ४५७ श्लो० ३४]

---

१ हद्धि हद्धि D. २ अज्ज om' H (a). ३ चालुदत्तो AB (abc) DH. ४ तुलिद तुलिद H (a). ५ ओपलदु ओपलदु G. ६ बुद्धोवाशिका CJ; ०शिका D; बद्धोपशिआ G ७ चारु० B (a). ८ जीवन्तं B (a); जीअतं B (d). ९ ०श्शशिदु AB (bc); ०श्शशिदु H (a); ०श्श्शिदु DG. १० अन्तलं अन्तलं AB (abcd) DEF. ११ चारु० AB (bc). १२ शामि० AB(abcd) H १३ णिओएण B (a). १४ ०वज्झदि BDE; ०वज्झति B (b). १५ शुमलेहि AB (bcd) D; शुमलेहि B (a). १६ शुमलि० AB (bcd) D; शुमरि० B (a) १७ श्लोकद्वयं BB (a), om: G; whole verse for इत्यादि D.

चाण्डालः। खड्गमाकृष्य। अज्ज चालुदत्त, उत्ताणे भविअ शमं चिट्ठ। एकप्पहालेण मालिअ तुमं शग्गं णेम्ह (८८)।

चारुदत्तः। तथा तिष्ठति।

चाण्डालः। प्रहर्तुमीहते। खड्गपतनं हस्तादभिनयन्। ही कधं।

आअड्ढिदे शलोशं-मुट्ठीए मुट्ठिणा गेहीदे वि।
धलणीए कीश पडिदे दालुणके अशणिशण्णिहे खग्गे ॥३७॥

जधा एदं शंवुत्तं तधा तक्केमि ण विवज्जदि अज्जचालुदत्ते त्ति। भअवदि शज्झवाशिणि, पशीद पशीद। अवि णाम चालुदत्तश्श मोक्खे भवे। तदो अणुग्गहिदं तुए चाण्डालउलं भवे (८९)।

---

चाण्डा० — (८८) आर्य चारुदत्त, उत्तानो भूत्वा समं तिष्ठ। एकप्रहारेण मारयित्वा त्वां स्वर्गं नयामः।

चाण्डा० — (८९) ही विस्मये। कथम्। आअड्ढिदे इति। आर्या छन्दः। आकृष्टः सरोषं मुष्टौ मुष्टिना गृहीतोपि। धरण्यां किमर्थं पतितो दारुणकोऽशनिसंनिभः खड्गः ॥ ३७ ॥ यथैतत्संवृत्तं तथा तर्कयामि न विपद्यत आर्यचारुदत्त इति। भग-

---

१ चालुदत्ता AB (c) DGK; चारुदत्त H (ab). २ समं AB (abcd) DJ. ३ चिठ C. ४ ०पहालेन BD. ५ मळिअ B (a). ६ सग्ग B (a); शग्गं E. ७ om: AB (bc) DG. ८ आअडिदे H (a). ९ सलोशो B (d) १० मुट्ठिए E. ११ गिहिदे B (d); गीहिदे E. १२ धरणीए B (a) K. १३ दालुणए BB (a). १४ अशणिहे E. १५ सवुत्तं A B (abcd) DJ. १६ तथा B (d). १७ णा D. १८ विज्जति B (a); विवज्झदि B(d). १९ ०चारु० AB (abc); ०दत्त त्ति D. २० सह्य; AB (bc) FG; सह्य० B (ad) K; शत्य DC; स्सह्य H. २१ वाशिणि B (a); वाशिणि text, marg. हि B (d); वासिणी F; वाशिनि GK. २२ चारु० AB (abc) D. २३ मोक्खो AB(abcd) DK. २४ ०गिहिद AB (abcd) EK; ग्गिहिदं D. २५ चण्डाल० B B (bd).

अपरः । जेधाण्णत्तं अणुचिट्ठम्ह ( १० ) ।

प्रथमः । भोदु । एव्वं कलेम्ह ( ११ ) । इत्युभौ चारुदत्तं शूले समारोपयितुमिच्छतः ।

चारुदत्तः । 'प्रभवति' इत्यादि पुनः पठति ।

भिक्षुर्वसन्तसेना च । दृष्ट्वा । अज्जा, मा दाव मा दाव । अज्जा, एमा अहं मन्दभाइणी जाए कारणादो एसो वावादीअदि ( १२ ) ।

चाण्डालः । दृष्ट्वा ।

तुलिदं का उण एशा अंशापडन्तेण चिउलभालेण ।
मा मेत्ति वाहलन्ती उेट्टिदहत्था इदो एदि ॥२८॥ (१३)

यति सह्यवासिनि, प्रसीद । सह्यः पर्वतस्तत्र वर्तमानां दुर्गां देवीं प्रार्थयते । प्रार्थनामेवाहाचि णामेत्यादिना । अपि नाम चारुदत्तस्य मोक्षो भवेत् । तदानुगृहीतं त्वया चाण्डालकुलं भवेत् ।

अपरः — ( १० ) यथाज्ञप्तमनुतिष्ठावः ।

प्रथमः — ( ११ ) भवतु । एवं कुर्वः ।

चारु०—प्रभवतीति पद्यमन्तकाले स्मरणरूपमिति तदेव पुनः पुनः पठतीति ध्येयम् ।

भिक्षुर्वस०—(१२) आर्याः, मा तावत् । आर्याः, एषाहं मन्दभागिनी यस्याः कारणादेष व्यापाद्यते ।

चाण्डा० — ( १३ ) तुलिदमिति । आर्या छन्दः । त्वरितं

१ जधाणत्तं B (bd). २ ०चिट्ठम्ह C. ३ भोदु भोदु G. ४ इतिक्रान्तः G. ५ Followed by शूलैःपदक्रमिकेन D. ६ om. AB (c) DF. ७ om. G. ८ अज्जा AB (bcd) DLPK; अज्ज G. ९ कारणा BGh; marg. दो B (d), कारणाद् E १० एस B(a) ११ वावादीअदि AB (abcd) DE १२ तिडुल B (ab) K; तुडुल G. १३ उब्भिद AB (bc) EG, उब्भद० D.

वसन्तसेना । अज्जे चारुदत्त, किण्णेदं (१४) । इत्युरसि पतति ।

भिक्षुः । अज्ज चालुदत्त, किण्णेदं ( १५ )। इति पादयोः पतति ।

चाण्डालः । सभयमपसृत्य । कधं वशन्तशेणा । णं क्खु अम्हेहिं शाहू ण वावादिदे ( १६ ) ।

भिक्षुः । उत्थाय । अले, जीवदि चालुदत्ते ( १७ ) ।

चाण्डालः । जीवदि वंस्सशदं ( १८ )।

वसन्तसेना । सहर्षम् । पच्चुज्जीविदम्हि ( १९ ) ।

---

का पुनरेषांसपतता चिकुरभारेण । मा मेति व्याहरन्त्युत्थितहस्तेत एति ॥ ३८ ॥

वस० – ( १४ ) आर्य चारुदत्त( त ), किं नैवमिति ।

भिक्षुः – ( १५ ) आर्यचारुदत्त, किं नैवम् ।

चाण्डा० – (१६) कथं वसन्तसेना । ननु खलु(?)खल्वस्माभिः साधुर्न व्यापादितः ।

भिक्षुः – ( १७ ) अरे, जीवति चारुदत्तः ।

चाण्डा० – ( १८ ) जीवति वत्सरशतम् ।

वस० – ( १९ ) प्रत्युज्जीवितास्मि । निर्गतजीवस्य पुनर्जीवनं

---

१ om. B (a). २ चलुदत्त B (d). ३ °णेदंनि AB (abcd); °णेदंति DE. ४ चारुदत्तहग AB (c) DF; चारुदत्त B (a); चारुदत्तजम्म B (b). ५ °दपसृत्य AB B (abc) CDFJK. ६ वसंतसेणा AB (abcd)E. ७ णं कखु repeated once more EGK. ८ साडु AB (c) DG; साडू B (abd) E. ९ अज्जचालु० B; अज्जचारु० B (a) E. १० वस्सिसदं B (a); वम्मरसदं B (b); वस्सशद B (d); वस्शरशदं D, वस्ससदं EK. वस्शसदं J. ११ ०चुवज्जीवि० B (d); सच्चजीवि० K.

चाण्डालः । ता जाव एदं वुत्तंतं लाइणो जेण्णवाडगंदरश णिवेदेम्ह ( १०० )। इति निष्क्रमतः।

शकारः । वसन्तसेनां दृष्ट्वा सत्रासम्। हीमादिके केण गब्भदाशी जीवाविदा । उक्कन्ताइं मे पाणाइं । भोदु । पलाइश्शं ( १ ) । इति पलायते ।

चाण्डालः । उपसृत्य । अले, णं अम्हाणं ईदिशी लोआणत्ती जेण शो वावादिदा तं मालेधेत्ति । ता लट्ठिअशालअं ज्जेव अण्णेशम्ह (२) । इति निष्क्रान्तौ ।

---

प्रत्युज्जीवनम् । गतजीविता पुनरागतजीवितास्मीत्यर्थः । अत्र जीधस्थानीयथारुदत्त एवेत्यवधेयम् ।

चाण्डा० – ( १०० ) तद्यावदेतं वृत्तान्तं राज्ञो यज्ञवाटगतस्य निवेदयावः ।

शका० – ( १ ) हीमादिके खेदे । केन गर्भदासी जीवाविदा जीयदवस्थां प्रापितेत्यर्थः। उत्क्रान्ता मे प्राणाः । भवतु । पलायिष्ये।

चाण्डा० – उपसृत्येति । द्वितीयचाण्डालस्य समीपं गत्वेत्यर्थः । ( २ ) अरे, नन्वस्माकमीदृशी राजाज्ञप्तिर्येन सा व्यापादिता तं मारयत । तद्राष्ट्रियश्यालमेवान्वेषयावः ।

---

१ अपार्तुर्थ B B (a); °ज्जमणं G; वुत्तं J. २ लाइणो AB (c) CDGJ; लइणो B (a) लाइणो E ३ जग० B (d). ४ °णदश्श AB (abc) D. ५ णिवेदम्ह FG. ६ °दाशी AB (bcd) CJ. ७ ज्जविदा DH. ८ इक्कताइं B (a); उक्कंताइं B (d); उक्कन्ताइं E. ९ पलाइश्श H. १० om. B B (a) ११ ईदिशी AB (bc); om : B ; ईदिशी B (d). १२ लाअणत्ति K. १३ शे AB (abcd) DFG; ०णुचिदा B B (abd). after ज्जे. १४ त्ति om. BDFG. १५ अण्णेशम्ह DE.

चारुदत्तः । सविस्मयम् ।

केयमभ्युद्यते शस्त्रे मृत्युवक्त्रगते मयि ।
अनावृष्टिहते शस्ये द्रोणवृष्टिरिवागता ॥ ३९ ॥

अवलोक्य च ।

वसन्तसेना किमियं द्वितीया
समागता सैव दिवः किमित्यम् ।
भ्रान्तं मनः पश्यति वा ममैनां
वसन्तसेना न मृताथ सैव ॥४०॥

अथवा ।

किं नु स्वर्गात्पुनः प्राप्ता मम जीवातुकाम्यया ।
तस्या रूपानुरूपेण किमुतान्येयमागता ॥४१॥

वसन्तसेना । साम्रमुत्थाय पादयोर्निपत्य । अज्ज चारुदत्त, सा ज्जेव्व अहं पावा जाए कारणादो ईअं तुए असरिसी अवत्था पाविदा ( २ ) ।

---

चारु० — केयमिति । अनुष्टुप् ॥ ३९ ॥ वसन्तसेनेति । स्पष्टम् । [ उपजातिश्छन्दः ] ॥ ४० ॥ किं न्विति । श्लोकः । जीयातोर्जीवनौषधस्य काम्ययेच्छया । 'जीयातुर्जीवनौषधम्' इत्यमरः । काम्येच्छा । तस्या वसन्तसेनाया रूपस्यानुरूपेण सादृश्येन विशिष्टेत्यर्थः । विशेषणे तृतीया ॥ ४१ ॥

वस० — ( २ ) आर्य चारुदत्त, सैवाहं पापा यस्याः कारणादियं त्वयासदृश्यवस्था प्राप्ता ।

---

१ केयं समु० K. २ सस्ये DE. ३ मध्यगृष्टिरिवा० AB (bcd) DEFGK. ४ नु B (d). ५ °नुकाम्यया B (b) E; °नुकम्पया H (d). ६ कारणा B (b) LG; marg. दो B (d). ७ om. K. ८ ०रिसा E.

नेपथ्ये । अच्चरिअं अच्चरिअं । जीवदि वसन्तसेणा ( ४ )। इति सर्वे पठन्ति ।

**चारुदत्तः** । आकर्ण्य सहसोत्थाय स्पर्शसुखमभिनीय निमीलिताक्ष एव हर्षगद्गदाक्षरम् । प्रिये, वसन्तसेना त्वम् ।

**वसन्तसेना** । सा ज्जेव्वाहं मन्दभाआ ( ५ ) ।

**चारुदत्तः** । निरुप्य सहर्षम् । कथं वसन्तसेनैव । सानन्दम् ।

कुतो बाष्पाम्बुधाराभिः स्नपयन्ती पयोधरौ ।
मयि मृत्युवशं प्राप्ते विद्येव समुपागता ॥ ४२ ॥

प्रिये वसन्तसेने,

त्वदर्थमेतद्विनिपात्यमानं
देहं त्वयैव प्रतिमोचितं मे ।
अहो प्रभावः प्रियसङ्गमस्य
मृतोपि को नाम पुनर्भ्रियेत ॥ ४३ ॥

अपि च । प्रिये, पश्येय ।

रक्तं तदेव वरवस्त्रमियं च माला
कान्तागमेन हि[१२] वरस्य यथा विभाति ।

[ नेपथ्ये ]–( ४ ) आश्चर्यमाश्चर्यम् । जीवति वसन्तसेना ।

वस० – ( ५ ) सैवाहं मन्दभाग्या ।

चारु०–कुत इति । अनुष्टुप् छन्दः। विद्यात्र मृतसंजीवनी बोध्या ॥४२॥ त्वदर्थमिति ।[उपेन्द्रवज्राच्छन्दः]। एतद्देहमिति । 'कायो देहः क्लीबपुंसोः, इत्यमरः । पुनर्भ्रियेत पुनर्जीवि[दि]त्यर्थः॥४३॥ रक्तमिति ।

१ अच्चरिअ B (b) K pr m B (d) २ °सेना J. ३ सहस्पर्शसुखनिमीलि° AB (c) F ; स्पर्शसुनिर्मी° B (bd) सहस्पर्शसुखनिर्मी° DH ; स्पर्शसुखनिर्मी° E. ४ निमिताक्ष? B (a) ५ om B B (a) ६ बाष्पाम्बु° AB (c) FG , बाष्पम्बु H ७ स्नापयन्ती D ८ प्रतिमा° K ९ प्रभावः H १० म्रियेत? H ११ पश्य पश्य B (a) १२ विरहस्य? H.

एते च वध्यपटहध्वनयस्तथैव
जाता विवाहपटहध्वनिभिः समानाः॥४४॥

वसन्तसेना । अदिदक्खिणदाए किं ण्णेदं ववसिदं अज्जेण (६) ।

चारुदत्तः । प्रिये, त्वं किल मया हतेति ।

पूर्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना ।
नरके पतता तेन मनागस्मि निपातितः ॥ ४९ ॥

वसन्तसेना । कर्णौ पिधाय । सन्तं पावं । तेण म्हि राअ-सालेण वावादिदा (७) ।

चारुदत्तः । भिक्षुं दृष्ट्वा । अयमपि कः ।

अत्र वाच्यार्थः स्पष्टः । व्यङ्ग्यार्थस्तु तावदेतावतीमिमां (मा) मापदमुपभुज्यापि यदि तवाहं दरिद्रतया न दयितस्तदानर्थ इति । विवाह इवेति किं वाच्यम् । तव च मम चायं विवाह एवासीदितः परं कदापि मा मामत्याक्षीरिति भावसेयः ।[वसन्ततिलकं वृत्तम्]॥४४॥

वस० — (६) अतिदक्षिणतया किं नेदं व्यवसितमार्येण । दक्षिणतोदारता समर्थता वा । किं नेदमित्यानुपूर्वी वितर्के इत्यसकृदुक्तम् ।

पूर्वेति । श्लोकः । शत्रुणा शकारेण ।

चारु०—प्रभविष्णुना राजश्यालतया प्रभुणेत्यर्थः । यतो मुक्तोतो मनागिति ॥ ४९ ॥

वस० — (७) शान्तं पापम् । प्रतिहतममङ्गलम् । तेनास्मि राजश्यालेन व्यापादिता ।

१ दक्खिणदाए B (ab) २ ज्जेन AB (abc) DFG. ३ कर्णौ पिधाय om. B (a).
४ सान्तं AB (bcd) CDJ; शान्तं पाव twice G ५ हि D.

नेपथ्ये । अच्चरिअं अच्चरिअं । जीवदि वसन्तसेणा ( ४ )।

इति सर्वे पठन्ति ।

**चारुदत्तः** । आकर्ण्य सहसोत्थाय स्पर्शसुखमभिनीय निमीलिताक्ष एव हर्षगद्गदाक्षरम् । प्रिये, वसन्तसेना त्वम् ।

**वसन्तसेना** । सा ज्जेव्वाहं मन्दभाआ ( ५ ) ।

**चारुदत्तः** । निरूप्य सहर्षम् । कथं वसन्तसेनैव । सानन्दम् ।

कुतो बाष्पाम्बुधाराभिः स्नपयन्ती पयोधरौ ।
मयि मृत्युवशं प्राप्ते विद्येव समुपागता ॥ ४२ ॥

प्रिये वसन्तसेने,

त्वदर्थमेतद्विनिपात्यमानं
देहं त्वयैव प्रतिमोचितं मे ।
अहो प्रभावः प्रियसङ्गमस्य
मृतोपि को नाम पुनर्ध्रियेत ॥ ४३ ॥

अपि च । प्रिये, पश्येय ।

रक्तं तदेव वरवस्त्रमियं च माला
कान्तागमेन हि[११] वरस्य यथा विभाति ।

---

[ नेपथ्ये ]–( ४ ) आश्चर्यमाश्चर्यम् । जीवति वसन्तसेना ।

वस० – ( ५ ) सैवाहं मन्दभाग्या ।

चारु०–कुत इति । अनुष्टुप् छन्दः । विद्यात्र मृतसंजीवनी बोध्या ॥४२॥ त्वदर्थमिति ।[उपेन्द्रवज्राच्छन्दः]। एतद्देहमिति । 'कायो देहः क्लीवपुंसोः,' इत्यमरः । पुनर्ध्रियेत पुनर्जीवि[दि]त्यर्थः॥४३॥ रक्तमिति ।

---

१ अउरिअ B (b) K pr. m B (d) २ °सेना J. ३ सहसोत्थाय स्पर्शसुखमभिनीय निमीलि° AB (c) F ; स्पर्शसुखनिमी° B (bd); सस्पर्शसुखनिमी° DH ; स्पर्शसुखनिमी° E. ४ निमीलिताक्ष? B (a) ५ om B B (a) ६ बाष्पाम्बु° AB (c) FG, बाष्पम्बु H ७ स्नपयन्ती D. ८ प्रतिमो° h. ९ प्रभावः H १० म्रियेत? H ११ वरस्य वरस्य B (a) १२ विराजते? H.

नेपथ्ये । कलकलः ।

जयति वृषभकेतुर्दक्षयज्ञस्य हन्ता
　तदनु जयति भेत्ता षण्मुखः क्रौञ्चशत्रुः ।
तदनु जयति कृत्स्नां शुभ्रकैलासकेतुं
　विनिहतवरवैरी चार्यको गां विशालाम् ॥ ४६ ॥

प्रविश्य सहसा

शर्विलकः ।

हत्वा तं कुनृपमहं हि पालकं भो-
　स्तद्राज्ये द्रुतमभिषिच्य चार्यकं तम् ।
तस्याज्ञां शिरसि निधाय शेषभूतां
　मोक्ष्येऽहं व्यसनगतं च चारुदत्तम् ॥ ४७ ॥
हत्वा रिपुं तं बलमन्त्रहीनं
　पौरान्समाश्वास्य पुनः प्रकर्षात् ।

---

ण न मां पहु मन्यस इति बाहुपाशबलात्कारेण मारिता । मया दृष्टा ।

जयतीति । वृषभकेतुः शिवः । हन्ता भेत्ता । (भेत्ता हन्ता) क्रौञ्चशत्रुरिति प्रभूतप्रभावाभिप्रायम् । आर्यकः पूर्वोक्तः । सिद्धादिष्टराज्यलाभश्चान्यः सः । शुभ्रकैल(ला)सध्वजाम् । गां पृथिवीम् । कृत्स्नां संपूर्णाम् । जयति स्वायत्तीकरोतीत्यर्थः । [मालिनी च्छन्दः] ॥ ४६ ॥

शर्वि०—विनिहतवरवैरीति यदुक्तं तदाह । हत्वेति । स्पष्टम् । शेषभूतां चरमाम् । इत्यनेन सर्वं कर्तव्यमन्यत्कृतमिति ध्वनिः । [प्रहर्षिणी वृत्तम्] ॥ ४७ ॥ हत्वा रिपुमिति । बलं सैन्यम् । मन्त्रश्च । आभ्यां हीनम् । प्रकर्षात्स्वकीयप्रतापादेः

---

१ वृषभस्तुर्दक्ष° G. २ °शत्रोः DH. ३ om. H (a). ४ केतुः AB (cd) D. ५ विनिहित AB (bc) DF. ६ °वैरा AB (abc) F; °वैरो DH. ७ नं ? K. ८ °मभिकृत्स्नांश्च H (a). ९ °मिश्र° B; °मन्त्र° B (d). मन्त्रि° J. १० समाश्वस्य AB (bc) F. ११ प्रकर्षात् AB (bc) DF.

वसन्तसेना । तेण अणज्जेण वावादिदा । ऐदिणा अज्जेण जीवाविदम्हि ( ८ ) ।

चारुदत्तः । कस्त्वमकारणबन्धुः ।

भिक्षुः । ण पच्चभिआणादि मं अज्जो । अहं शे अज्जश्श चलणशंवाहचिन्तएे शंवाहके णाम जूदिअलेहिं गहिदे एदाए उवाशिकाए अज्जश्श केलकेत्ति अलंकालपणणिक्कीदिम्हि । तेण अ जूदणिव्वेदेण शाक्कशमणके शंवुत्ते म्हि । एशा वि अज्जा पवहणविपेज्जाशेण पुप्फकलण्डकजिण्णुज्जाणं गदा । तेण अं अणज्जेण ण मं बेहु मेण्णेशित्ति बाहुपाशबलक्कालेण मालिदा । मएँ दिट्ठा ( ९ ) ।

वस० — ( ८ ) तेनानार्येण व्यापादिता । एतेनार्येण जीवं प्रापितास्मि ।

भिक्षुः०—( ९ ) न प्रत्यभिजानाति मामार्यः । अहं स आर्यस्य चरणसंवाहचिन्तया संवाहको [ नाम ] द्यूतकरैर्गृहीत एतयोपासिकया अज्जश्श केलकेति आर्यस्यात्मीय इत्यलंकारपणनिष्क्रीतोस्मि । तेन च द्यूतनिर्वेदेन शाक्यश्रमणकः संवृत्तोस्मि । एषाप्यार्या प्रवहणविपर्यासेन पुष्पकरण्डकजीर्णोद्यानं गता । तेन चानार्ये-

१ गहिणा K. २ °आणदि B (ad) K; पशहिआणदि G. ३ ०शंवाह AB (bc); शंवाहचिन्तए om. D. ४ चिन्तएज्जा ? B (a). ५ संवाहके D. ६ om. AB (bcd). DEGK. ७ अज्जश्श B (a); अज्जश B (d). ८ केरके० B (a). ९ ०कारपण B (a). १० णिक्किदे B (a). ११ संवुत्ते० E; संवुत्तश्चि G. १२ ०विअस्यांशेण AB (c) D; ०विरशेण ? B (a); ०वितिरिज्जाशेण B (b); ०विवश्यासेण EK. १३ करण्डअ AB (c) D; करण्डक B (a) E; करण्ड B (bd). १४ गदे ? B (a). १५ om. B B (a) D. १६ बुइ ? A. १७ मणेशि° AB (bc) D; मेणेशि B (d), बणेशि ? B. १८ मए दिट्ठा om. B B (a).

नेपथ्ये । कलकलः ।

जयति वृषभकेतुर्दक्षयज्ञस्य हन्ता
तदनु जयति भेत्ता षण्मुखः क्रौञ्चशत्रुः ।
तदनु जयति कृत्स्नां शुभ्रकैलासकेतुं
विनिहतवरवैरी चार्यको गां विशालाम् ॥ ४६ ॥

प्रविश्य सहसा

शर्विलकः ।

हत्वा तं कुनृपमहं हि पालकं भो-
स्तद्राज्ये द्रुतमभिषिच्य चार्यकं तम् ।
तस्याज्ञां शिरसि निधाय शेषभूतां
मोक्ष्येऽहं व्यसनगतं च चारुदत्तम् ॥ ४७ ॥

हत्वा रिपुं तं बलमन्त्रहीनं
पौरान्समाश्वास्य पुनः प्रकर्षात् ।

---

ण न मां बहु मन्यस इति बाहुपाशबलात्कारेण मारिता । मया दृष्टा ।

जयतीति । वृषभकेतुः शिवः । हन्ता भेत्ता । (भेत्ता हन्ता) क्रौञ्चशत्रुरिति प्रभूतप्रभावाभिप्रायम् । आर्यकः पूर्वोक्तः । सिद्धादिष्टराज्यलाभधान्यः सः । शुभ्रकैल(ला)सध्वजाम् । गां पृथिवीम् । कृत्स्नां संपूर्णाम् । जयति स्वायत्तीकरोतीत्यर्थः । [मालिनी छन्दः] ॥ ४६ ॥

शर्वि०—विनिहतवरवैरीति यदुक्तं तदाह । हत्वेति । स्पष्टम् । शेषभूतां चरमाम् । इत्यनेन सर्वं कर्तव्यमन्यत्कृतमिति ध्वनिः । [प्रहर्षिणी वृत्तम्] ॥ ४७ ॥ हत्वा रिपुमिति । बलं सैन्यम् । मन्त्रश्च । आभ्यां हीनम् । प्रकर्षात्स्वकीयप्रतापादेः

---

१ वृषभस्तुर्दक्ष०? G. २ ०शत्रोः DH. ३ om. H (a). ४ केतुः AB (cd) D. ५ विनिहित AB (bc) DF. ६ °वैर AB (abc) F; ०वैरं DH. ७ ०नं ! K. ८ ०मभिकृत्स्नां०? B (a). ९ °मिष० B; °मत्र० B (d). मन्त्रि° J. १० समाश्वस्य AB (bc) F. ११ प्रकर्षान् AB (bc) DF.

प्राप्तं मगग्र वसुधाधिरोज्यं
रोज्यं वैलारेरिव शत्रुराज्यम् ॥ ४८ ॥

अग्रतो निरूप्य । भवतु । अत्र तेन भवितव्यं यत्रायं जनपदसमवायः । अपि नामायमारम्भः क्षितिपतेरार्यकस्यार्यचारुदत्तस्य जीवितेन सफलः स्यात् । त्वरिततरमुपसृत्य । अपयात जाल्माः । दृष्ट्वा सहर्षम् । अपि भ्रियते चारुदत्तः सह वसन्तसेनया । संपूर्णाः खल्वस्मत्स्वामिनो मनोरथाः ।

---

प्रभावात् । [न]गरस्थान् । कुतोपि यूयं मा भैष्टेति विश्वासमुत्पादयेत्यर्थः । वसुधाया आधिराज्यं स्वाम्यं यस्मिन्नीदृशं संपूर्णं शत्रुराज्यं शत्रोः पालकस्य राज्ञो राज्यम् । 'अखण्डाज्ञाविषयो हि राज्यम्' इति लक्षणलक्षितं राज्यमित्यर्थः । प्राप्तम् । किमिव शत्रुराज्यम् । (इव)वलारेरिन्द्रस्य राज्यमिव । ऐन्द्रं पदमिवेत्यर्थः । अयमुपमानवाक्यार्थः । उपमेये रिपुराज्ये विशेषणमिति ज्ञेयमत्रैः ॥ ४८ ॥

यत्रायं जनपदेति लक्षणया जनपदवृत्तिजनपरम् । तेषां जनानां समवायः समूहः । अत्र तेन चारुदत्तेनेत्यर्थः । भवद्भिस्त्वन्तरसंवाद इत्युक्तम् । अयमारम्भो राज्ञः पालकस्य हननरूप उद्योगोपि नाम सफलः स्यादिति संभावना । 'जाल्मोऽसमीक्ष्यकारी स्यात्' । अविचार्य कारिणो जाल्मा यूयम् । अपयात दूरं गच्छतेत्यर्थः । भ्रियते जीवति । अस्मत्स्वामिन आर्यकस्य नूतनमहाराजस्येत्यर्थः ।

---

१ °धिराज्यमा° ? H. २ भाज्य DH. ३ मुरारेरिव B B (a) ४ भवत्यत्र B, भविष्यत्येन A which B hasshown as भाविष्यतन B (c)? भविष्य तेन अत्र om D ५ °र्यवारम्भः AB (c) F, नामारम्भ B (a) K ६ आर्य om B B (a). ७ अप . ल्मा: twice G ८ भो: हर्षम् K ९ संपूर्ण B (d) १० सफलं for खल्वस्मत AB (c) D ११ मनोरथा B (d)

दिष्ट्या भो व्यसनमहार्णवादपारा-
दुत्तीर्णं गुणधृतया सुशीलवत्या ।
नौवेव प्रियतमया चिरान्निरीक्षे
ज्योत्स्नाढ्यं शशिनमिवोपरागमुक्तम् ॥ ४९ ॥

त्वत्कृतमहापातकः कथमिवैनमुपसर्पामि । अथवा । सर्वत्राजेवं शोभते । प्रकाशमुपसृत्य बद्धाञ्जलिः । आर्य चारुदत्त,

चारुदत्तः । ननु को भवान् ।

शर्विलकः ।

येन ते भवनं भित्त्वा न्यासापहरणं कृतम् ।
सोऽहं कृतमहापापस्त्वामेव शरणं गतः ॥ ५० ॥

चारुदत्तः । सखे, मैवम् । त्वयासौ प्रणयः कृतः । इति कण्ठे गृह्णाति ।

---

दिष्ट्या भो इति । प्रहर्षिणी छन्दः । दुःखसमुद्रादपारादुत्तीर्णम् । केनोपायेनोत्तीर्णं तत्राह । नावेव । प्रियतमयेति वसन्तसेनयेत्यर्थः । गुणो रज्जुर्लोकप्रसिद्धोऽनुरागादिश्च । उपरागो ग्रहणम् ॥४९॥ आर्जवमृजुत्वं सरलता । सा चेयं सविनया स्वच्छेत्यादि नानारूपा बोध्या ।

शर्वि० — येनेति । श्लोकः । न्यासो वसन्तसेनादत्तसुवर्णभाण्डरूपस्तस्यापहरणम् । स्वर्णस्तेयस्य शास्त्रोक्तमहापातकत्वादाह । कृतमहापाप इति ॥ ५० ॥

---

१ तावेव AB (abc) DF. २ निरीक्ष्ये AB (abc) CDJ; निरीक्षे K. ३ त्वदर्थे! K. ४ ०कारता AB (ac) F. ५ om. B (a). ६ °उपगमन् B B (a) ७ स प्रणय. B (d).

शर्विलकः । अन्यच्च ।

आर्यकेणार्यवृत्तेन कुलं मानं च रक्षता ।
पशुवद्यज्ञवाटस्थो दुरात्मा पालको हतः ॥ ६१ ॥

चारुदत्तः । किम् ।

शर्विलकः ।

त्वद्यानं यः समारुह्य गतस्त्वां शरणं पुरा ।
पशुवद्वितते यज्ञे हतस्तेनाद्य पालकः ॥ ६२ ॥

चारुदत्तः । शर्विलक, योसौ पालकेन घोषादानीय निष्कारणं कूटागारे बद्ध आर्यकनामा त्वया मोचितः ।

---

शर्वि०—भूतपूर्ववृत्तान्तमुक्त्वा साम्प्रतवृत्तत(वृत्तान्त)माह । अन्यच्चेत्यादिना । आर्यकेणेति । श्लोकः । यज्ञवाटो यज्ञस्थानम् । इदं चापरिच्छिन्न (?) जनसंमर्देन प्रमादस्थानम् । तत्र च शस्त्राघातहननादेः संभावनापि नेत्याशयेनाह । यज्ञवाटस्थ इति । पालको राजा पशुवद्धत इत्यन्वयः ॥६१॥ शर्विलकेनैवमुक्तेपि न सम्यग्बुद्धं चारुदत्तेनेति पुनः स्पष्टयति । त्वद्यानमिति । श्लोकः । तव चारुदत्तस्य यानं प्रवहणं रथम् । य आर्यकः । त्वां चारुदत्तम् । तेनार्यकेण पालकः पशुवद्धत इत्यन्वयः ॥ ६२ ॥

चारु०—घोषादाभीरग्रामात् । निष्कारणं निरपराधमित्यर्थः । अन्यथा सिद्धादेशस्यायमार्यकः श्रीमान्राजा भविष्यतीत्याकारस्य कारागारबन्धनकारणस्य सत्त्वात् । कूटागारे बन्धनगृहे । त्वया

---

१ Twice AB (r). किं किं अन्यच्च G. २ कुटूलं ? K ; कुसमाने B (a). ३ गोष्ठागारे B (a), गूढागारे Com. ४ बन्धने बद्धः AB (cd) DLGK.

शर्विलकः । यथाह तत्रभवान् ।

चारुदत्तः । प्रियं नः प्रियम् ।

शर्विलकः । प्रतिष्ठितमात्रेण तव सुहृदार्यकेणोज्जयिन्यां वेणातटे कुशावत्यां राज्यमतिसृष्टम् । तत्प्रतिमान्यतां प्रथमः सुहृत्प्रणयः । परिवृत्य । अरे रे, आनीयतामयं पापो राष्ट्रियशठः ।

नेपथ्ये । यथाज्ञापयति शर्विलकः ।

शर्विलकः । आर्य, नन्वयमार्यको राजा विज्ञापयति । इदं मया युष्मद्गुणोपार्जितं राज्यम् । तदुपयुज्यताम् ।

चारुदत्तः । अस्मद्गुणोपार्जितं राज्यम् ।

नेपथ्ये । अरे रे राष्ट्रियश्यालक, एह्येहि । स्वस्याविनयस्य फलमनुभव ।

---

शर्विलकेन मोचितः । निगडं बन्धनं रक्षां च भित्त्वा मोचितः ।

शर्वि०—तत्रभवानित्येकं पदम् । पूज्य इत्यर्थः । राज्यमतिसृष्टं दत्तम् । अतिसर्गो दानम् । द्विजेभ्यः संकल्प्य दत्तमित्यर्थः । युष्मद्गुणोपार्जितं युष्माकं पूज्यानां शिष्टतया सिद्धानामिव चारुदत्तशर्विलकादीनां गुणा उपकाराः प्रवहणावतरणरक्षणबन्धनभेदनसिद्धादेशनादयस्तैरुपार्जितं । राज्यं यतस्तत उपयुज्यतामुपयोगविषयीक्रियताम् । चारुदत्तचन्दनशर्विलकादिभिः सर्वै (र्वै) रुपयोगः सार्थकता राज्यस्य यथा भवति तथानुष्ठीयतामित्यर्थः ।

---

१ न प्रियम् om. [illegible] (d); प्रिय last omit G; प्रियं नः प्रियं नः K. २ वेणातटे E. ३ ०वत्या B (d). ४ del. ०य [illegible] (d). ५ पालीय F. ६ om. AB (bcd) D. ७ om. K. ८ विज्ञापति ? [illegible] (b). ९ om. AB (c) DF.

ततः प्रविशति पुरुषैराधिष्ठितः पश्चाद्बाहुबद्धः

शकारः । हीमादिके ।

एव्वं दुलमदिकन्ते उद्दामे विअ गद्दहे ।

आणीदे क्खु हगे बद्धे हुडे अण्णे व्व दुँकले ॥५२॥

दिशोवलोक्य ।

शमन्तदो उवट्ठिदे एशे लष्टिअबन्धे । तो क दाणिं अशलणे शलणं पवज्जामि । विचिन्त्य । भोदु । तं ज्जेव्व अब्भुववण्णशलणलक्खणं गच्छामि । इत्युपसृत्य । अज्ज चालुदत्त, पलित्ताआहि पलित्ताआहि ( १० ) । इति पादयोः पतति ।

नेपथ्ये । अज्ज चालुदत्त, मुञ्च मुञ्च । वावादेम्ह एदं(११) ।

शका०—( १० ) हीमादिके खेदेऽव्ययम् । एव्वं दूलमिति श्लोकः । एवं दूरमतिक्रान्त उद्दाम इव गर्दभः । आनीतः खल्वहं बद्धः । हुडे श्वा कुकुरः । अण्णे अन्यः । व्व इव । दुकले दुष्करो-दुर्धर इत्यर्थः ॥ ५२ ॥ समन्तत उपस्थितः स राष्ट्रियबन्धः । तत्किमिदानीमशरणः शरणं प्रव्रजामि । भवतु । तमेवाभ्युपपन्नशरणरक्षणं [ शरणं ] गच्छामि । आर्यचारुदत्त, परित्रायस्व परित्रायस्व ।

नेपथ्ये—(११) आर्य चारुदत्त, मुञ्च मुञ्च । व्यापाद(द) यामैतम् ।

१ एव B (a) २ अतिक्कन्ते Corr B (d) ३ गद्दहे विअ B (a) ४ अणिदे H ५ हगे B (a) ६ अश B (a), अणेव AB (c) D, अण्णे व B (b), अशेव B (d). ७ टुकुले D ८ समतदो AB (bcd); शर्वतदो H (a) ९ पिट्ठिदेशे ABB (acd) ०ट्ठिदेशे पट्ठिदे &c D, पट्ठिदेश K १० लट्ठिअ० H (ab) J, बन्धे AB (c) ११ F F १२ दाणि AB (bc) १३ अशलणे AB (bcd) E, अशलण D, असलणे K. १४ शलण ? B (d) om D १५ om H (d) १६ शलणदत्त K १७ शलण गच्छमि B B (a) १८ इति om B H (a) १९ शकार before अज्ज B (abd) FK २० चारु० R (d) २१ पलित्ताअहि AB (bcd) DG, पलित्ताअ B; पडित्ताअहि K २२ चारुदत्त B, चारुदत्त B (d)

शकारः । चारुदत्तं प्रति । भो अशलणशलणे, पेलित्ताआहि ( १२ ) ।

चारुदत्तः । सानुकम्पम् । अहह । अभयमभयं शरणागतस्य ।

शर्विलकः । सावेगम् । आः, अपनीयतामयं चारुदत्तपार्श्वात् । चारुदत्तं प्रति । ननूच्यतां किमस्य पापस्यानुष्ठीयतामिति ।

आकर्षन्तु सुबद्ध्वैनं श्वभिः संखाद्यतामथ ।
शूले वा तिष्ठतामेष पाट्यतां क्रकचेन वा ॥ ९४ ॥

चारुदत्तः । किमहं यद्ब्रवीमि तत्क्रियते ।

शर्विलकः । कोत्र संदेहः ।

शकारः । भट्टालआ चोलुदत्त, शलणागदे म्हि । तॅं

---

शका०– ( १२ ) भो अशरण[शरण], परित्रायस्व ।

शर्वि०–किमस्येत्यादिवाक्येन पृष्टं(ष्टं) विकल्पयति । आकर्षन्त्विति । श्लोकः । एनं शकारम् । सुबध्य (?) सुष्ठु बद्ध्वा पादे रज्जुम् । चाण्डाला आकर्षन्तु । श्वभिः कुक्कुरैः । क्रकचेनारास्येन (?) शस्त्रेण विदार्यतां वा ॥ ९४ ॥

शका०–( १३ ) भट्टारक चारुदत्त, शरणागतोस्मि । तत्परि-

---

१ चारुदत्तं प्रति om. B B (a). २ अशलणे० B (a) ; अशलणे om.; शलणे B (bd). ३ °एहि AB (c) D ; पलित्ताअ B (b) G पलित्ताआएदि del ए B (d); पदित्ताआहि K. ४ भा B. ५ °यसौ B B (a). ६ चारुदत्तः पश्यति AB (c) DF ; चा० पाश्चात्यश्यति B (b). ७ न उच्यतां AB (c) F ; ननुच्यतां B (b); ननुच्यतां G. ८ आकर्षंतु AB (c) DE. आकार्षंतु B (b). ९ °बध्वैनं ? C. १० °वते? D ११ तिष्ठतामे० B (d) E. १२ भट्टालआ AB (bcd) J ; om. B (a). १३ चालुदत्ता G. १४ om. B B (a).

पलित्ताआहि पलित्ताआहि । जं तुए शोलिशं तं कलेहि । पुणो ण ईदिशं कलिश्शं ( १३ ) ।

नेपथ्ये

**पौराः** । वावादेध । किं णिमित्तं पादकी जीवावीअदि । (१४)

**वसन्तसेना** । वध्यमालां चारुदत्तस्य कण्ठादपनीय शकारस्योपरि क्षिपति ।

**शकारः** । गब्भदाशीधीए, पशीद पशीद । ण उणो मालइश्शं । ता पलित्ताआहि ( १५ ) ।

**शर्विलकः** । अरे रे, अपनयत । आर्य चारुदत्त, आज्ञाप्यतां किमस्य पापस्यानुष्ठीयताम् ।

**चारुदत्तः** । किमहं यद्ब्रवीमि तत्क्रियते ।

**शर्विलकः** । कोत्र संदेहः ।

**चारुदत्तः** । सत्यम् ।

---

त्रायस्व । यत्तत्र सदृशं तत्कुरु । पुनर्नेदृशं करिष्यामि ।

पौराः–(१४) व्यापादयत । किंनिमित्तं पातकी जीव्यते ।

शका०–( १५ ) गर्भदासीपुत्रि, प्रसीद । न पुनर्मारयिष्यामि । तत्परित्रायस्व ।

---

१ पडित्ताआहि AB (bc) D ; पलित्ताआहि del. प B (d) ; पडित्ताअहि once D ; पडित्ताएहि G. २ तुअ B B (abd) K. ३ सलिशं K. ४ ईदिशं कालिश्शं AB (c) ; दूशाशशं B ; दुश्शश B (a) K ; ईदिश्शं कालिश्शं B (b), श्शाशशं B (d); यदि or दिशं कालिश्शं D ; णा श्शाश्शं E ; एदिशं कालिश्शं G ५ पातकी BD ; पातका (की)? E ६ चारुदत्तस्य कण्ठादपमालामप० B (a). ७ °दाशीधीदे AB (bc) CEG ; गब्भदाशि om : धीए B ; °धीदे EK. ८ Once only AB (bc) DF. ९ उणो BDEF : For ण उणो &c. परम उणो माल० E. १० पलित्ता० AB (abc) E ; twice B (d) ; °एहि D. ११ यत् om B (d).

शर्विलकः । सत्यम् ।

चारुदत्तः । यद्येवं शीघ्रमयम् ।

शर्विलकः । किं हन्यताम् ।

चारुदत्तः । नहि नहि । मुच्यताम् ।

शर्विलकः । किमर्थम् ।

चारुदत्तः ।

शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः ।
शस्त्रेण न हन्तव्यः··················

शर्विलकः । एवं तर्हि । श्वभिः खाद्यताम् ।

चारुदत्तः । नहि ।

···········उपकारहतस्तु कर्त्तव्यः ॥ ५९ ॥

शर्विलकः । अहो आश्चर्यम् । किं करोमि । वदत्वार्यः ।

चारुदत्तः । तन्मुच्यताम् ।

शर्विलकः । इति मुक्तः ।

शकारः । हीमादिके पैच्चुज्जीविदेम्हि (१६ ) ।

इति पुरुषैः सह निष्क्रान्तः ।

---

चारु०—शत्रुरिति । आर्याछन्दः । उपकारेत्यादिचतुर्थचरणः॥५९॥

शका०—( १६ ) हीमादिके प्रत्युज्जीवितोस्मि ।

---

१ Speech om. G. २ om. K. ३ नहि नहि BB (a). ४°रस्तु K. ५ वदत्वार्यः AB (c) CDJ; वदत्वार्यः, del त्वा H (d). ६ om. BB (abd). ७ पच्चुज्जी° B;पच्च.... दम्हि B (a), पच्चुज्ज...दम्हि H (d). ८ Followed by इतःपरं नीलकण्ठेनापूरि AB (bc) G from नेपथ्ये &c. to शर्विलक—आर्ये वसन्तसेने p ४८० om. BB (ad) E K.

अथ मृच्छकटिकस्योधिको ग्रन्थः ( पृ०४८६पर्यन्तम् )।

नेपथ्ये कलकलः।

पुनर्नेपथ्ये । एसा अज्जचालुदत्तस्स वहुआ अज्जा धूदा पवेसणच्चले विलग्गन्तं दारअं आक्खिवन्ती वाहभरिदणअणेहिं जणेहिं णिवारिज्जमाणा पज्जालिदे पावए पविसदि ( १७ )।

शर्विलकः । आकर्ण्य नेपथ्याभिमुखमवलोक्य । कथं चन्दनकः। चन्दनक, किमेतत्।

चन्दनकः । प्रविश्य । किं ण पेक्खदि अज्जो महाराअप्पासादं दक्खिणेण महन्तो जणसंमद्दो वट्टदि । एसेत्यादि पुन पठति । कधिदं अमए तीए जधा अज्जे मा साहसं करेहि । जीवदि अज्जचारुदत्तो त्ति। परन्तु दुक्खवावुडदाए को सुणेदि । को पत्तिआएदि ( १८ )।

---

( यत्पुस्तकं दृष्ट्वास्माभिरियं कृता व्याख्या तत्र द्विशतवर्षजीर्णे पुस्तके दृश्यते–'इतः परं नीलकण्ठेनानुरीति प्रति(?)प्रतिज्ञाय– "नेपथ्ये कलकलः | पुनर्नेपथ्ये । एषा अज्जचालुदत्तस्स वहुआ अज्जा धूदा" इत्यारभ्याग्रे–शर्वि०–दिट्ठ्या जीवितसुहृद्वर्ग आर्यः। चारु० –"युष्मत्प्रसादेन"–इत्यन्तं समाप्य– 'यत्सूर्योदयभयतः कविनोचितपात्रमेलनं न कृतम् । सुन्दरयुक्तिभिररचयदाचन्दनकोक्ति नीलकण्ठस्तत् ॥' इति निजनिर्मितसूचिकामार्यां विरच्य समापितोयमधिको ग्रन्थः । पुस्तकान्तरे तु न दरीदृश्यते । अस्माभिस्तु मूलकृत्कथितानानुरूपामपीमां कवितामालोच्यापि ग्रन्थोयं प्रकृतग्रन्थसंलग्न इनेति व्याख्यायत इत्यवधेयम् ) |

पुनर्नेपथ्ये–(१७) एषार्यचारुदत्तस्य वधूरार्या धूता पदे प्रसनाञ्चले विलग्नं दारकमाक्षिपन्ती बाष्पभरितनयनैर्जनैर्निवार्यमाणा प्रज्वलिते पावके प्रविशति ।

चन्द० – ( १८ ) किं न पश्यत्यार्यो महाराजप्र(प्रा)सादं

---

१ एसा AB (c) २ °च्चद. ३ °च्चले AB (bc) J. ४ प्रविश्य चन्दनकः AB (c) G, चन्दनकः Twice H (b). ५ महाराअ (आअ!) प्पासादं ? H (b), महाराअप्पासाद G. ६ वट्टइ मग्गा B (b); वट्टइ मग्ग G. ७ पविस इदि AB (c) D.

चारुदत्तः । सोद्वेगम् । हा प्रिये, जीवत्यपि मयि किमेतद्व्यवसितम् । ऊर्ध्वमवलोक्य दीर्घं निश्वस्य च ।

न महीतलस्थितिसहानि भव-
चरितानि चारुचरिते यदपि ।
उचितं तथापि परलोकसुखं
न पतिव्रते तव विहाय पतिम् ॥ ५६ ॥

इति मोहमुपागतः ।

शर्विलकः । अहो प्रमादः ।

त्वरया सर्पणं तत्र मोहमार्योऽत्र चागतः ।
हा धिक् प्रयत्नवैफल्यं दृश्यते सर्वतोमुखम् ॥ ५७ ॥

---

दक्षिणेन महाञ्जनसंमर्दो वर्तते ( ते ) । तत्र(?) एतेव्याद्यनुपदोक्तं ज्ञेयम् । महाराजः पालकः । कथितं च मया तस्मै यथार्यै मा साहसं कुरुष्व । जीवत्यार्यचारुदत्त इति । परंतु दुःखव्यापृतया कः शृणोति । कः प्रत्ययते ।

चारु०—न महीतलेति [ प्रमिताक्षरा वृत्तम् ] । हे चारुचरिते । यदपि यद्यपि । भवत्याश्चरितानि पातिव्रत्यसुशीलतादिलक्षणानि । महीतलस्थितिसहानि न सन्ति । भूतले स्थातुं न शक्नुवन्तीत्यर्थः । पदार्थमत्युच्चं न धर्तुं समर्था भूरिति भावः । तथापि स्वर्गसुखं मया विना न त्वया भोक्तुं युक्तं पतिव्रतात्वादिति सर्वार्थः ॥ ५६ ॥

[ शर्वि०—त्वरयेति । स्पष्टम् ॥ ५७ ॥ ]

---

१ उचित AB (c). २ °मुपगत. F. ३ त्वरया. AB (c) DFGH. ४ सर्पणं तत्र AB (c) F; समयस्तत्र DGH.

वसन्तसेना । समस्ससिदु अज्जो । तं[1] गदुअ जीवावेदु अज्जं[2]। अण्णधा अधीरत्तणेण अणत्थो संभावीअदि ( १९ ).।

चारुदत्तः । समाश्वस्य सहसोत्थाय । हा प्रिये, क्वासि । देहि मे प्रतिवचनम् ।

चन्दनकः । इदो इदो अज्जो ( २० ) ।

इति सर्वे परिक्रामन्ति ।

ततः प्रविशति यथानिर्दिष्टा धूता चैलाञ्चलमार्पयन् विदूषकेणानुगम्यमानो रोहसेनो रदनिका च ।

धूता । सास्रम् । जाद, मुञ्चेहि मं । मा विग्घं करेहि । भीआमि अज्जउत्तस्स अमङ्गलाकण्णणदो ( २१ ) । इत्युत्थायात्यञ्चलमाकृष्य पावकाभिमुखं परिक्रामति ।

रोहसेनः । हा अज्जुए, पडिवालेहि मं । तुए विणा ण संकुणोमि जीविदं धारेदुं ( २२ ) । इति त्वरितमुपसृत्य पुनरञ्चलं गृह्णाति ।

---

वस० — ( १९ ) समाश्वसित्वार्यः । तत्र गत्वा जीवयत्वार्याम् । अन्यथाधीरत्वेनानर्थः संभाव्यते ।

चन्द० — ( २० ) इत इत आर्यः ।

धूता — ( २१ ) जात, मुञ्च माम् । मा विघ्नं कुरुष्व । बिभेम्यार्यपुत्रस्यामङ्गलाकर्णनात् ।

रोह० — ( २२ ) हा आर्ये, प्रतिपालय माम् । त्वया विना न शक्नोमि जीवितं धर्तुम् ।

---

१ समस्ससदु twice G. २ तत्थ AB (c) G. ३ अज्ज G. ४ om DH. ५ भाभामि DH ; भेआमि F, भीभमि G. ६ ०कण्णादो AB (c) ; कण्णणादो B, (b) DH. ७ दाव ०AB (c), दावउज्जए B (b) दाव अज्जे DH, दाद अज्जए J. ८ ०न तेदु AB (c) DFG. ९ सक्कुणोमि AB(c) ; सक्कुणोमि DH.

विदूषकः । भोदि, मा दाव । बम्हणीए भिण्णत्तणेण चिदाधिरोहणं पावं उदाहरन्ति रिसीओ ( २३ ) ।

धूता । वरं पावाचरणं । ण उण अज्जउत्तस्स अमङ्गलाकण्णनं (२४) ।

शर्विलकः । पुरोऽवलोक्य । आसन्नहुतवहार्यो । तत्त्वर्यतां त्वर्यताम् ।

चारुदत्तः । त्वरितं परिक्रामति ।

धूता । रअणिए, अवलम्ब दारअं जाव अहं समीहिदं करेमि ( २५ ) ।

चेटी । सकरुणम् । अहं पिं पधोवदेसिणिग्हि भट्टिणीए (२६) ।

धूता । विदूषकमवलोक्य । अज्जो दाव अवलम्बेदु ( २७ ) ।

---

विदू० — ( २३ ) भवति, मा तावत् । ब्राह्मण्या भिन्नत्वेन चिताधिरोहणं पापमुदाहरन्ति ऋषयः ।( क्षत्रियादीनां भिन्नत्वेनापि चितारोहणाधिकारस्मरणादुक्तं ब्राह्मण्या इति भिन्नत्वेनेति च.।

धूता— ( २४ ) वरं पापाचरणम् । न पुनरार्यपुत्रस्यामङ्गलाकर्णनम् ।

धूता— (२५) रदनिके, अवलम्बस्व दारकं यावदहं समीहितं करोमि ।

चेटी— (२६) अहमपि य(प)थोपदेशिन्यस्मि भट्टिन्याः ।

धूता— ( २७ ) आर्यस्तावदवलम्बताम् ।

---

१ भोदीए दाव AB (c) CDF, भोदी मा दाव H (b), भोदीए दाव J. २ पावाचरणं DGH. ३ Om. AB(c)DG. ४ रअणीअ J. ५ वि D. पधोव॰ AB(bc)DF; जधोव J.

धूता । वसन्तसेनां दृष्ट्वा । दिट्ठिआ कुसलिणी बहिणिआ (३५)।

वसन्तसेना । अहुणा कुसलिणी संवुत्तम्हि (३६) । इत्यन्योन्य मालिङ्गतः ।

शर्विलकः । दिष्टया जीवितसुहृद्वर्ग आर्यः ।

चारुदत्तः । युष्मत्प्रसादेन ।

---

नयोर्दंपत्योरित्यहो आश्चर्यमित्यर्थः । अन्यथानयोर्द्वयोरपि नाश-समप्रधानस्य (?) संभवादिति भावः । आर्य वन्दे ।

धूता– (३५) दिष्टया कुशलिनी भगिनी ।

वस०– (३६) अधुना कुशलिनी संवृत्तास्मि ।

शर्वि०– दिष्ट्या दैवेन । जीवितः सुहृदार्यकवसन्तसेनाधूतादीनां मित्राणां वर्गः समूहो यस्य तादृश आर्यः । दिष्टया दैवेन न त्वन्येन केनापि कारणेनेत्यर्थः । नाहं दैवेन जीवितसुहृद्वर्गः किंतु युष्मत्प्रसादेनेत्युत्तरं ददौ चारुदत्तः ।

१ एतावत्पर्यन्तमेवायमधिको ग्रन्थः । ।

पुस्तकान्तरे तु “ शका०– हीमादिके पच्चुज्जीविदेम्हि इति पुरुषैः सह निष्क्रान्तः” (पृ० ४७९ अन्तिमा पङ्क्तिः) इत्यनन्तरं “शर्वि०–आर्ये वसन्तसेने परितुष्टो राजा भवतीं बन्धु(वधू)शब्देनानुगृह्णाति । राजार्यकः ” इत्येव दृश्यते ग्रन्थः । एवंविधपूर्वापरीभावमावहन्न त्वन्योयमधिकः कृत्रिम इतीदमिहावधेयम् ।

---

१ Followed by a verse यत्सूर्योदयभयत कविनोचितपाश्रमेलन न कृतम् । दुष्टस्पृक्तिभिरवयदाचन्दनकोक्ति नीलकण्ठस्तत् ॥ AB (bc) CD G.

शर्विलकः । आर्ये वसन्तसेने, परितुष्टो राजा भवतीं वधूशब्देनानुगृह्णाति ।

वसन्तसेना । अज्ज कदत्थम्हि ( ३७ ) ।

शर्विलकः । वसन्तसेनामवगुण्ठ्य चारुदत्तं प्रति । आर्य, किमस्य भिक्षोः क्रियताम् ।

चारुदत्तः । भिक्षो, किं तव बहुमतम् ।

भिक्षुः । इमं ईदिशं अणिच्चत्तणं पेक्खिअ दिउणे मे पव्वज्जाए बहुमाणे संवुत्ते ( ३८ ) ।

---

वस०–(३७) आर्य कृतार्थास्मि ।

शर्वि०– वसन्तसेनामवगुण्ठ्येति प्रावारकेण वसन्तसेनामाच्छाद्येत्यर्थः । निर्मोकमिव वेश्यात्वं व्यवच्छिद्य वर्णान्तरेणेव वधूपदाभिधेयत्वेन वसन्तसेनाभुजंगीमलंचकारेति भावः । अस्य भिक्षोः प्रागुक्तस्य संवाहकनाम्नो भिक्षुभूतस्येत्यर्थः ।

भिक्षुः– (३८) इदमीदृशम्(?) । अणिच्चत्तणमनित्यत्वम् । प्रेक्ष्य द्विगुणतरो मम प्रव्रज्याया(यां) बहुमानः संवृत्तः । इदमीदृशमनित्यत्वं क्व राजा पालकः शकारस्तत्कृतो वसन्तसेनाचारुदत्तादीनां वधः ? । क्व चायमार्यक आभीरः क्षणादेव भूमिदेवः श्रीमहाराजश्चैवंविधमित्यर्थः ।

---

१ वेधु० AB (bc) D, वधू FG. २ ०सेनामवगु० ? AB (bc). ३ om. B B (a). ४ इदिसं AB (c); ईदिसं B (a) D; ईदिसं B (b); इदिश B (d). ५ दिउणदले AB (bc) DEG; दिउणदले del. दले B (d). ६ पव्वज्जाय AB (abc); पवज्जा B (d). ७ ०माणो K. ८ संवुत्ते AB (abc) CDJ; संवुत्ते B (d); सवुत्ते K.

विदूषकः । सावेगम् । संमीहिदासिद्धिए पंउत्तेण बम्हणो कादव्वो । अदो भोदीए अहं अग्गणी होमि ( २८ ) ।

धूता । कधं पेच्चादिट्ठम्हि दुवेहिं । बालकमालिङ्ग्य । जाद, तुमं ज्जेव पंज्जवट्ठावेहि अत्ताणं अम्हाणं तिलोदअदाणाअ । किं मणोरहेहिं । सनिःश्वासम् । ण हु अज्जउत्तो तुमं पंज्जवट्ठाविस्सदि ( २९ ) ।

चारुदत्तः । आकर्ण्य सहसोपसृत्य । अहमेव पर्यवस्थापयामि बालिशम् । इति बालकं बाहुभ्यामुत्थाप्य वक्षस्यालिङ्गति ।

धूता । विलोक्य । अम्महे । अज्जउत्तस्स ज्जेव सरसञ्जोओ । पुनः निरूप्य सहर्षम् । दिट्ठिआ अज्जउत्तो ज्जेव एसो । पिअं मे पिअं मे[11] (३०) ।

बालकः । विलोक्य सहर्षम् । अम्मो । आवुत्तो मं परिस्सजादि । पुनः अज्जए, वड्ढेसि । आवुत्तो ज्जेव मं पंज्जवट्ठावेदि ( ३१ ) । इति प्रत्यालिङ्गति ।

विदू०— (२८) समीहितसिद्धये प्रवृत्तेन ब्राह्मणोपतः कर्तव्यः । अतो भवत्या अहमग्रगामी भवामि ।

धूता— ( २९ ) कथं प्रत्यादिष्टास्मि द्वाभ्याम् । जात, त्वमेव पज्जवट्ठावेहि पर्यवस्थापयात्मानमस्माकं तिलोदकदानाय । अतिश्रान्तं(?) किं मनोरथैः । न खल्वार्यपुत्रस्त्वां पर्यवस्थापयिष्यति ।

धूता— ( ३० ) आश्चर्यम् । आर्यपुत्रस्यैव( स्येव ) स्वरसंयोगः । दिष्ट्यार्यपुत्र एवैषः । प्रियं मे प्रियं मे ।

बालकः— (३१) आश्चर्यम् । पिता मां परिष्वजति (ते) । आर्ये, वर्धसे । जनक एव मां पर्यवस्थापयति ।

१ [illegible] AB (c), [illegible] DFH. २ [illegible] B (b). ३ [illegible] ४ [illegible] DG ५ [illegible] B (b) ६ [illegible] AB (c) F, [illegible] B (b) ७ [illegible] B. ८ [illegible] G ९ [illegible] AB (c) DI, [illegible] (c B, b) १० [illegible] B (b) G ११ [illegible] D १२ [illegible] J १३ [illegible] AB (c) १४ [illegible] AB (c), [illegible] B (b), [illegible] H. १५ [illegible] AB [illegible] D, [illegible] I [illegible] H. १६ [illegible] AB(c) DH [illegible] B (b) [illegible] F. १७ [illegible] B (c) D, [illegible] B (b) D. १९ [illegible] AB (c) DF, [illegible] B (b).

चारुदत्तः । धूतां प्रति ।

हा प्रेयसि प्रेयसि विद्यमाने
कोऽयं कठोरो व्यवसाय आसीत् ।
अम्भोजिनीलोचनमुद्रणं किं
भानावनस्तंगमिते करोति ॥ ९८ ॥

धूता । अज्जउत्त, अदो ज्जेव्व सा अचेतणेत्ति चुम्बीअदि (३२)।

विदूषकः । दृष्ट्वा सहर्षम् । हीं हो भो एदेहिं ज्जेव अच्छीहिं पिअवअस्सो पेक्खीअदि । अहो सदीए पहावो जदो जलणप्पवेसव्ववसाएण ज्जेव पिअसमागमं पाविदा । चारुदत्तं प्रति । जेदु जेदु पिअवअस्सो ( ३३ ) ।

चारुदत्तः । एहि मैत्रेय । इत्यालिङ्गति ।

चेटी । अहो संविधाणअं । अज्ज वन्दामि (३४) । इति चारुदत्तस्य पादयोः पतति ।

चारुदत्तः । पृष्ठे करं दत्त्वा । रदनिके, उत्तिष्ठ । इत्युत्थापयति ।

---

चारु०—हा प्रेयसीति । प्रेयसीति—प्रथमं संबोधनम्—। द्वितीयं सप्तम्यन्तम् । लोचनमुद्रणमिति मुकुलीभावं लक्षयति । [इन्द्रवज्रा छन्दः ॥९८ ॥]

धूता— (३२) आर्यपुत्र, अत एव सा नेतनेति चुम्ब्यते ।

विदू०— ( ३३ ) आश्चर्यम् । एताभ्यामेवाक्षिभ्यां प्रियवयस्यः प्रेक्ष्यते । अहो सत्याः प्रभावो यतो ज्वलनप्रवेशव्यवसायेनैव प्रियसमागमं प्रापिता । जयतु जयतु प्रियवयस्यः ।

चेटी— (३४) अहो संविधानम् । समीचीनं विधानं घटनम-

---

१ अचेतणत्ति AB (c) DG. २ चुम्बीअदि (=उच्यते) G. ३ Om. AB (c) DF. ४ भो · AB (c) DF. ५ एदे ज्जेव्व B (b). ६ पिय० B! (b). ७ Om. DH. ८ जलन० C. ९ संविधाण अज्ज B (b). १० उत्थापयति B (b).

चारुदत्तः । सखे दृढोऽस्य निश्चयः । तत्पृथिव्यां सर्वविहारेषु कुलपतिरयं क्रियताम् ।

शर्विलकः । यथाह आर्यः ।

भिक्षुः । [2]प्रियं नः प्रियम् ।

वसन्तसेना । सम्पदं जीवाविदम्हि ( ३९ ) ।

शर्विलकः । स्थावरकस्य किं क्रियताम् ।

चारुदत्तः । सुवृत्तोऽयमदासो भवतु । ते चाण्डालाः सर्वचाण्डालानामधिपतयो भवन्तु । चन्दनकस्य पृथिवीदण्डपालकता भवतु । तस्य राष्ट्रियश्यालस्य यथैव क्रिया पूर्वं वर्त्तमानौ तथैवास्तु ।

---

चारु०—अस्य भिक्षोः।निश्चयो निखिलं जगदिदमनित्यमिति वैराग्यलक्षणो निर्णयः।सर्वेषु विहारेषु सौगतदेवालयेषु। 'विहारो नास्तिकालये' इति कोशः। कुलपतिरध्यक्षः। सर्वस्वामीत्यर्थः। कुलं गृहम् ।

वस०— ( ३९ ) साम्प्रतं जीवनसाफल्यं प्रापितास्मीत्यर्थः । दशभिः सुवर्णैर्मोचितेन निष्क्रीतेनेव संवाहकेन निर्वेदाद्भिक्षुभूतेन वसन्तसेना सलिलसेचनाद्विना जीवदवस्थां प्रापितेति महानुपकार आसीत् । इदानीं सकलविहारकुलपतित्वाधिकारवितरणेन प्रत्युपकारप्रतीकार आसीदिति 'सम्पदं जीवाविदम्हि' इत्यस्याशयः ।

[ चारु० ]—सुवृत्तः सदाचारोऽयमदासो भवतु । इतः परं कस्यापि दास्यं नानुभवत्विव्यर्थः । पृथिवीदण्डपालता । पृथिव्यां पृथिव्या या यो दण्डः शासनं तं पालयतीति पृथिवीदण्डपालस्तस्य भावः । सर्वपृथिव्यां कोठपालाधिकारो भवत्वित्यर्थः । दण्डपाल एव माग-

---

१ कुलपतिषु B (d) २ om AB (bc) DEI ; प्रियं न प्रियं नः h ३ Whole speech om AB (c) DK. ४ दंदे B (b) ५ जीविदा B (a) ६ om D' ७ सुवृत्त अदासो AB B (bc) CDEGJ, सुवृत्त अदा॰ B (a), सुवृत्त B (d), सुवृत्त य Aca K. ८ चन्दनकः AB (c) CDJ ९ पृथ्वी B B (a) १० ॰पालकी AB (c) CDJ. ११ वर्तमान CJ.

शर्विलकः । एवम् । यथाह आर्यः । पश्यैनं मुञ्च मुञ्च । व्यापादयामि ।

चारुदत्तः । अभयं शरणागतस्य । 'शत्रुः कृतापराधः' इत्यादि पठति ।

शर्विलकः । तदुच्यतां किं ते भूयः प्रियं करोमि ।

---

कुटक (?) इति नागरिक इति चाभिधीयते । स्फुटं चेदं दशकुमारादौ । तस्येत्यादि । तस्य राजश्यालस्य शकारस्य पूर्वं तद्भगिनीपतेः पालकस्य राज्ञो राज्य इत्यर्थः । यथैव वर्तमाना क्रिया तथैवास्त्वित्यन्वयः । क्रिया दानादानसंमानस्नानवसनभोजनाङ्गनाद्यैश्वर्योपभोगलक्षणः सर्वव्यापार इत्यर्थः । सज्जनशिरोमणिना चारुदत्तेनातिशौण्डीर्यादेवमभिहितेपि शर्विलकेन पूर्वं यथैव वर्तमाना क्रियेत्यादेर्मारणरूपा क्रिया बुद्धेति तथैवाशयेन परमोत्साहेन शर्विलकः प्राह । पश्यैनमिति ।

शर्वि०—एनं शकारं मुञ्च मुञ्च । एनमहं व्यापादयामि । स्वयं मारयामीति पश्य त्वमिति कथनेन समुद्योतते परमोत्साहः ।

चारु०—'शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः । शस्त्रेण न हन्तव्य उपकारहतस्तु कर्तव्यः' इत्यार्या (पृ० ४७९ श्लो० ५५) स्मर्तव्यानुपदमेवोक्ता । आशीराशिशंसनलक्षणां (?) ग्रन्थसमाप्तिं ग्रन्थकारस्तावदवतारयति ।

शर्वि०—तदुच्यतां किं ते भूयः प्रियं करोमीति । ते चारुदत्तस्य ...... दिदमनेकधा प्रियं कृतम् । भूयः पुनः किं करोमि प्रिय-

---

१ पश्यैनं ...... पठति शर्वि० om : AB (c) DF; पश्यैनं B (b) G; पश्यैनं J. २ Once B (d) K. ३ इति पुनः B. ४ उपकरोमि B (a).

वैदग्ध्यवादनादेव निपातः। मधुकराभिरुतमिव मधुरं वाद्यते वंशः। इयमपरा प्रणयकुपिता कामिनीवाङ्कारोपिता कररुहपरामर्शेन सार्यते वीणा। इमा अपराः कुसुमरसमत्ता इव मधुकर्योऽतिमधुरं प्रगीताः। गणिकादारिका वेश्याविशेषा इति गुणपताकायामुक्तम्। नाट्यते नाट्यम्। पठ्यते सशृङ्गारः। अवलम्बिता गवाक्षेषु वातं गृह्णन्ति सलिलगर्गर्यः। एतच्च जनानां पानार्थम्। (P. 199, L. 373) इहापि पञ्चमप्रकोष्ठे। अयमपि दरिद्रजनलोभोत्पादनकरो हिङ्गुतैलगन्ध आसमन्ताद्धरति। विविधसुरभिधूमोद्गारैर्नित्यं सन्ताप्यमानं निःश्वसितीव महानसं द्वारमुखैः। अधिकं रोमाञ्चयति संसाध्यमानबहुविधभक्ष्यभोजनगन्धः। भोजनं करणे ल्युट् व्यञ्जनादिवचनः। अयमपरः पटच्चरमिव जीर्णवस्त्रमिव छेद्यपट्टमनेकाधारशोणिताभ्यामुपहतत्वात्। रूपिदारओ। रूपशब्दः पशुवचनः। तद्योगाद्रूपी खट्टिकः। तस्य दारकः पुत्रः। यद्वा। रूपी रूपसंघः तस्य दारकश्छेदकः। खट्टिक एव। यत्र मांसं छिद्यते तं पदं धावति प्रक्षालयति। बहुविधाहारविकारमुपसाधयति सूपकारः। बध्यन्ते मोदकाः। पच्यन्ते पूपकाः। अपीदानीमहं भोक्तुं पादोदकं लप्स्ये। 'घर्घितमिति' पाठे व्यञ्जनादिसामग्र्योपचितं घर्घितकमिति पूर्वटीका। इतश्च गन्धर्वाप्सरोगणैरिव विविधालङ्कारशोभितैर्गणिकाजनैर्बन्धुलैश्च वत्सलं स्वर्गीयत इदं गृहम्। (P. 201, L. 387) गुणेष्ववाच्याः। अनभिधानीयगुणा इत्यर्थः। 'ऋणेष्विति' पाठे ऋणेष्ववाच्या ऋणमेवावसीय सर्वैरभिमुद्यामह इत्यर्थः। ललामो विलासः। लल विलासे भौमादिकः (?)। अनुप्रासानुरोधेनानयोरैक्यम्। 'ललामा इति' पाठे श्रेष्ठा इत्यर्थः। (L. 392) इहापि षष्ठ प्रकोष्ठके। अयं तावत्सुवर्णरत्नानां कर्मतोरणानि। नीले रत्ने वस्तुविशेषे निक्षिप्तानि प्रसारितानीन्द्रायुधस्थानकमिव दर्शयन्ति। नीलरत्नेष्वा(?)रोपितानीन्द्रायुधमिव दृश्यन्त इत्याशयः। वैडूर्यमौक्तिक-प्रवालक-पुष्पराग-नीलक-कर्केतर-पद्मराग प्रभृतीन् रत्नविशेषानन्योन्यं विचारयन्ति शिल्पिनः। प्रवालक-कर्केतरौ मणिविशेषौ। बध्यन्ते जातरूपैः सुवर्णमाणिक्यानि। घट्यन्ते सुवर्णालंकाराः।

---

१ कर्कर्य BC. २ °न्ताद्धाति E F G. ३ पट्टं जीर्णं° BC. ४ °संह BC. ५ शाटिक BC. ६ स्वर्गायते FG. ७ °यलिङ्गना BC. ८ लड विलासे E F G. ९ लोच भामादिकः EFG. १० नानारत्नेष्वोपि B C D, नीलरत्नेष्वारोपितानि E F G. ११ °नीलकर्केतर° E. १२ °प्रभृतीनां B C D. १३ पुलकक° B C D.

लोहितसूत्रैर्ग्रथ्यन्ते मौक्तिकाभरणानि । घृष्यन्ते वैडूर्याणि । छिद्यन्ते शङ्खाः । शाणे घृष्यन्ते प्रवालानि । शोष्यन्ते ओल्लविदमवतारिता आर्द्रिता वा । कुङ्कुमप्रस्तराः । प्रस्तरः कुङ्कुमाधार(श्च)मेपुट इत्याहुः । सोलीआदि आर्द्रीक्रियते । सल्लिज्जभं कस्तूरिका । शल्यवद्वेधकत्वात् । आज्यमिव मृगमदत्वात् (?) । विसालीअदि विशेषेण घृष्यते चन्दनरसः । संयोज्यन्ते गन्धयुक्तयः । दीयन्ते गणिकाकामुकयोः सकर्पूरं ताम्बूलम् । अवलोक्यते सकटाक्षम् । प्रवर्तते हासः । पीयतेनवरतं सशृङ्गारं मदिरा । इभेन्येवज्ञातपुत्रदारावित्ता मनुष्या आसवकरकेणापीतमदिरा गणिकाजनैर्ये मुक्तास्तवारं(or मुक्तावारं A)पिबन्ति । अयमर्थः । मद्यपानभाण्डेनापीतमद्या अनादृतनिजपरिवारास्त्यक्तान्यकर्तव्या अत एव तत्रैवात्यन्तमवस्थाना गणिकाजनैर्ये मुक्ता निःसारिता इत्युक्तं ते पुरुषा वारंवारं पुनः पुनर्मद्यमेव पिबन्ति । मदिराया अवारितसत्रत्वमुक्तम् । (P. 204, L. 409) इह सप्तमे प्रकोष्ठे । सुश्लिष्टायां विहङ्गपाल्यां कपोतपालिकायां सुखनिषण्णा[न्य]न्योन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि । दधिभक्तपूरितोदरो ब्राह्मण इव सूक्तं पठति पञ्जरशुकः । ऋक्समुदायः सूक्तम् । शोभनोक्तं च यथा स्यादेवम् । इयमपरा संमानलब्धप्रसरेव गृहदासी अधिकं कुर(रु)कुरायते मदनसारिका । अनेकफलरसास्वादप्रहृष्टकण्ठा कुम्भदासीव कूजति परपुष्टा कोकिला । आलम्बिता । नागदन्तेषु गृहभित्तिस्थदारुविशेषेषु । नागदन्तका इति प्रकृतौ कः । पञ्जरपरम्पराः । योध्यन्ते लावकाः । आलाप्यन्ते कपिञ्जला गौरास्तित्तिरयः । प्रेष्यन्ते पञ्जरकपोताः । योद्धुमित्यर्थात् । इतस्ततो विविधमणिविचित्रित इव सहचरि(री)सहितो नृत्यन् रविकिरणसन्तप्त (प्तं) पक्षोत्क्षेपैर्वीजयतीव प्रासादं गृहमयूरः । इतः पिण्डीकृताश्चन्द्रकिरणा इव पदगतिं शिक्षमाणानि कामिनीनां पश्चात्परिभ्रमन्ति राजहंसमिथुनानि । एतेपरे वृद्धमहत्तं (changed to ह्र) का इव इतस्ततः परिभ्रमन्ति गृहसारसाः । प्रसारणकं दत्तं गणिकाभिर्नानापक्षिसमूहे यत्सत्यं सत्येतन्नन्दनवनमिव मे गणिकागृहं प्रतिभाति । (P. 206, L 427) [इहापि] अष्टमे प्रकोष्ठे । भवति क एष पट्टप्रच्छदप्रावृतः अधिकतरमत्यद्भुतं पुनरुक्तालंकारालंकृतः । अङ्ग-

१ धीरं वैडूर्यं B C D, °दूर्या F G. २ साउली° F; स उलीअदि G. ३ सेलज्जभ B C D ४ मुक्तास्तवाट E, मुक्ता° वाढ F G. ५ एव च F. ६ गणिकाभि· B C D ७ नागदन्ता इति E F G ८ तित्तरय F G. ९ सतापित F. १० त्त Changed to ह्र A. ११ यत्तु F G १२ प्रकोष्ठके F G. १३ °मत्युद्धत F G

भङ्गैः परिस्खलन्नितस्ततः परिभ्रमति। मा दाव ॥ ( L. 432 ) जइ वि इत्यार्या । विततायामिव अमेध्य इवेति पाठान्तरे इ (इ has over it so ···om : ? A)त्यर्थः। अनभिगम्योनाभिगमनीयः । एषा पुनः का पुष्पप्रावारकप्रावृता (पुष्पपट) इति प्रसिद्धः। उपानद्युगलनिक्षिप्ततैलचिक्कणाभ्यां पादाभ्यां लक्षिता । अहो अस्याःकपर्दकडाकिन्या उदरविस्तारः । 'करट्ट' इति पाठे अशौचाभ्यवहरणप्रयुक्तकरट्टब्राह्मणवत् । तत्किमितीमां प्रवेश्य महादेवमिव द्वारशोभा इह गृहे निर्मिता । अन्यथा अनेन द्वारेणास्या गृहे न प्रवेशः स्यादित्याशयः । एषा खल्वस्माकमत्ता चातुर्थिकेन ज्वरविशेषेण पड्यते । तेनेदृशी दृश्येत्युक्तम् । सपरिहासम् । भगवन् चातुर्थ(र्थि)क । एतेनोपकारेण मामपि ब्राह्मणमवलोकय। शूणपीणजठरो । शूण उच्छूनः । पीनो महाभोगः। मुदो मृतः॥ (P. 208, L. 457) सीधुसुरासवेत्यादि । उपजातिविशेषः । सीधुसुरासवा मदिराविशेषाः । एतावदवस्थापन्नपीनत्वरूपां(पा) गतां(ता) यदि म्रियते अत्र मृता भवति शृगालानां पर्याप्तिका सौहित्यम् । युष्माकमपि जानपात्रा वहन्ति । उद्वाहकेनार्जितविभवस्यैव परमियान्विस्तारो भवतीति प्रभुरभिप्रायः (?) । प्रेमनिर्मलजले मदनसमुद्रे स्तननितम्बजघनान्येव यानपात्राणि । (P. 210, L. 460) सर्वर्तुकुसुमप्रस्तारा रोपितानेकपादपा निरन्तरपादपतलनिर्मिता युवतिजघनप्रमाणा पट्टदोला लघुकीकरोतीव नन्दनवनस्य सश्रीकत्वम् ॥ एसो असोअ इत्यादि । गाथा। धंच्छो वृक्षः । घनरुधिरपङ्कचर्चिका चर्चा यस्य सः ॥ ३० ॥ ओणामेहि अवनमय । से अस्याः । भावे क्तयोगे षष्ठी(?) । छात्रस्य हसितामिति यथा । अध इं अथ किम् । अनुमतौ । धांअवत्तहारी वार्त्तिकः । सोण्डीरदाए शौण्डीर्येणाशयमहत्त्वेन। भोदी भवती । भणामीत्यनन्तरं सहासनाटकसूत्रं परितमिव तथा कृत्वा बोद्धव्यम्(?) ।

[इति] मदनिकाप्रदानः (नो नाम चतुर्थोऽङ्कः) ॥ ४ ॥

---

१ °त्तरेत्यर्थ- F; °त्तरेर्थः G. २ अशेषाखाद्यहरण B C D. ३ प्रवृत्त G. ४ करट F G. ५ द्वारं महादेवमिव F G. ६ द्वारमहादेवमिव F G. ७ परिहासः G. ८ चातुर्थिक E F G. ९ एकावस्था° E F; एकावस्थां पीनत्वरूपा G. १० धुच्छो E F G. ११ अवत्तहारी F G. १२ बोद्धव्यं भावावितम्(?) B. १३ मदनिकाप्रदानं नाम चतुर्थोऽङ्कः E G, प्रदानो नाम F.

# पञ्चमोऽङ्कः ।

पूर्वाङ्के अङ्कावतारेणैव सूचितस्य प्रकरणनायकस्य प्रवेशः । तथा चोक्तम् । 'प्रवेशश्चूलिका चैव तथा विष्कम्भकोपरः । अङ्कावतारोऽङ्कमुखमथो ( थो ) पक्षेपपञ्चकम् ' इति । प्रवेशयतीति प्रवेशः । पचाद्यच् । प्रवेशको ण्वुलन्त उच्यते । अधमपात्रप्रयोज्यः प्रवेशकः । तदुक्तम् । ' भृत्यवर्गकथाबद्ध कर्तव्यस्तु प्रवेशकः । अन्तर्जवनिकासंस्थैस्तथा मागधवन्दिभिः ॥ अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका । 'विष्कम्भस्तु द्विधा सोयं शुद्धः संकीर्ण एव च ॥ शुद्धो मध्यमपात्रेण संकीर्णो मध्यमाधमैः' इति । (P. 216, L. 4) अपाहृतं निरस्तम् । अनभिनन्दितमिति यावत् ॥१॥ बलाकशब्दः पुलिङ्गोप्येषां संमतः । खं आकाशम् ॥ २ ॥ निपक्कं द्रावितम् ॥४॥ प्रडीनैरिति कर्मणि क्तः (?)। ध्याविद्धैर्भ्रान्तैः । चक्रं समूहः । पत्रस्य छेदः खण्डनं विचलं (?) यत्र चित्रे तत्पत्रछेद्यं चित्रम् । तदिव गगनं शोभते ॥५॥ घृतपाण्डुचन्दनसदृशं नष्टचन्द्रार्कत्वात् । धा इवार्थे । शिखी मयूरः । वनादिति ल्यब्लोपे कर्मणि पञ्चमी । वनं प्राप्येत्यर्थः ॥६॥ ( P. 219, L. 31 ) अणेकहा सिणेहाणुसारं भणिअ अनेकधा स्नेहानुसारं भणित्वा । पाठान्तरेणैव (?) कथा । कथं हारितमलंकारभाण्डमित्यादिका । नैव कथानुसारः कृतोस्या रत्नावल्या भाव (?) इत्यादिकः । मल्लको भाजनविशेषः । तन्मा तादृक् । यद्भोजनाद्यर्थमपि न तथा भणितोहम् । यद्भुक्तपीतस्य चौरैरेवापहृतस्यास्प_ह_स्य । (P. 222, L. 58) यत्सपीडनद्दत्तसंज्ञया पदान्तापवारितं मुखं कृत्वा । गणिका हस्ती कायस्थो भिक्षुः चाटो (टो) क्षुद्रविषयभोक्ता । रासभो गर्दभः ।(P. 225, L. 83) अवेध माणहेति । अवेत अवगच्छत मानधा इत्यर्थः ॥ अधाजभेति । उपेन्द्रवज्रया श्लोकः । 'यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्यति आर्द्रीभवति पृष्ठचर्म । यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम्' ॥१०॥ वंशं वादयामीति । उपजातिविशेषः । पादत्रयं जगतीजात्या । चतुर्थः पादः शालिन्या । 'वंशं वादयामि सप्तच्छिद्रं सुशब्दं वीणां वादयामि सप्ततन्त्रीं नदन्तीम् । गीतं गायामि गर्दभस्यानुरूपं को मे तुल्यस्तुम्बुरुर्नारदो वा' ॥ ११ ॥ (P. 226, L. 98) अस्य बहु-

---

१ प्रवेशकः F. २ 'वि येषां' F. ३ निरतं E F G.

कस्य संज्ञां ददामि। कापित्थं फलविशेषः। वृद्धविट्योद्दुं यासु इति यायस(?)। (Erased with the marks = &c. A)। (P. 229, L. 123) इन्द्रमहकामुकः काकः। 'इन्द्रमह काकपोदओ विअ' इति पाठो व्यक्तार्थ एव। पण्हं प्रश्नम्। मुण्डे मस्तके। गोडुं पादम्॥ (P. 235, L. 184) अपश्चेति। एपा वसन्तसेनेति सन्निकर्षेण। लज्जाप्रणयिनीत्यत्र संधायचामित्यादिनाकारलोपः ॥१२॥ कण्ठं मुञ्चतीति। 'कण्ठो गले गलंस्थाने' इति कोशः। लावण्ययोगवान् पूर्वं कण्ठं मुञ्चतीत्युत्प्रेक्षा (?) ॥१४॥ मूढे इति वसन्तसेनायाः साक्षेपसंबोधनम्। पयोधरो मेघः, स्तनौ च ॥१५॥ (P. 237, L. 209) अयमपर इति शत्रोः पुनर्मध्य इत्यर्थात्। करसमूहं अंशु-राजग्राह्यभागौ ॥१७॥ प्रोषितभर्तृशब्दो 'न नित्यः समासान्त इति' नं भूत (?) श्चेति कन्॥१८॥ कक्षा मध्यबन्धनम्। गां भूमिम्॥ २१॥ येष्पाङ्कुराः संलग्नशरतुल्याः ॥२२॥ मेचकाः श्यामाः। गगनं जलरूपेण द्रवीभूतं पतति ॥२५॥ त्रिदशपतिशरास्य वज्रस्य। रतिप्रसक्ता संभोगेन प्रसक्ता। प्रियेण काङ्क्षितायाः। (P. 242, L. 268) यद्वदिति। हे शक्र यथा अहल्याया अप्रातिदुःखेन गौतमोऽस्मीत्यसत्यं ब्रूपे। हे निरपेक्ष परपीडानभिज्ञ तन्ममापि दुःखं जानीहीत्यर्थात्। ततः किं कर्तुमुचितमित्याह। निवार्यतामिति। प्रियभवनगमनं प्रति विरोधकत्वादित्याशयः ॥३०॥ आटोपो दम्भः। कूटं माया। कपटं छद्म। अनृतं मृषाभाषणम्। निह्नवप्राकट्यभेदात्कूटकपटयोर्भेदः। एतेषां जन्मभूमेः। वेद्यापणो वेद्याव्यवहारः। व्यञ्जकेत्यर्थः (?)। दाक्षिण्यपण्यप्रधानम्। निष्क्रयो मूल्यम्॥३६॥ (P. 247, L. 315) अपि पारयिष्यामि। आआविओ आचार्य उपदेष्टा। प्रेष्यतां भुज्यताम्। किं तु स एव व्याजो विडम्बनास्माकं प्रस्तुत आरब्धा ॥३९॥ अथवा सत्यमेवेदम्। अथवेति प्रकरणात्प्रतीयते। बम्हणेन ब्राह्मणेन। यद्दृष्टेति। यतः यस्माद् दृष्टपूर्वस्य जनस्य संगमेन उत्तरलतया वर्तमानस्वदैन्यविस्मृतानां विस्मरणवतां पुंसाम्। मत्संबन्धिनी सालचेपिका (Erased A)। (P. 255,) L. 397 तुलयितुमिति। लुब्धालुब्धजिज्ञासया। श(व)हुमूल्याया रत्नावल्या अल्पमूल्यसुवर्णभाण्डस्य कृते यो-

---

१ कुकुरः B C D. २ ° ना एकार° BC. ३ साक्षेपं E F G. ४ पुनरमध्य E F G. ५ नहतश्चेति E G. ६ वाष्पा° F. ७ आआविविओ B C D; आआरिओ E F G. ८ ब्राम्हणेन G. ९ स्नानचोलिका F; चेलिका Corr. शाटिका G. १० °मूल्यस्य E F.

गात् । (P. 257, L. 418) वर्णकः विलेपनम् ॥४८॥ अस्माद्विधदुर्लभया। दरिद्रस्य वेदयाचातिसंभवात् ॥ ४८ ॥ स्तम्भेष्वित्यादि । प्रंदतीछन्दसा । वितानं चन्द्रातपः ॥ ५० ॥ विद्युदित्यार्या । अनया च वेतालादिभयानकरूपवर्णनम् ॥५१॥ संगीतवीणा इव धाराः ॥५२॥

[इति] दुर्दिनो नाम [ पञ्चमोऽङ्कः ] ॥ ५ ॥

---

१ प्रभृति ° Γ. २ नाम पञ्चमोऽङ्कः Γ G.

## षष्ठोऽङ्कः ।

(P. 265, L. 14) जोएहि योजय । अपयत्तं अपर्याप्तम् । यदृच्छासंबन्धि (?) । (P. 270, L. 56) एतेन मृच्छकटेन प्रातिवेशिकगृहपतिदारकसंबन्धिन्या सुवर्णशकटिकया क्रीडितम् । तेन प्रतिवेशिगृहपतिदारकेण । (P. 271, L. 66) तव पितुर्गुणनिर्जिता दासी । अलिअं अलीकम् । असत्यमिति यावत् । वालहस्ताभ्यां सुवर्णपूर्णां शकटिकां दारकं च स्वयं गृहीत्वा निष्क्रान्ता । उद्घाटितं पक्षद्वारकम् । (P. 273, L. 88) ही ही इत्यकस्मात्स्मरणविपर्ययेण । जोणत्थलके यानास्तरणकम् । णस्साकडुआ नासिकारज्या दुःसहाः । अतोऽतिक्रमः संभाव्यते । 'णस्साकडुआ' इत्यपि पाठः । तत्र नस्याकटुका इत्यर्थः । बइल्ला बलीवर्दाः । (P. 275, L. 104) धूतं (धूर्तं) पलायित इव द्यूतकरः । सभिकामिव मां दृष्ट्वा प्रच्छादितशरीरः । एतेनार्यकस्य पलायनमुपक्षिप्तम् । गामेल्लुआ ग्राम्याः । चक्कपरिवट्टिअं चक्रपरिवृत्तिम् । शूले शूरः । एआई तवस्सी एकाकी वराकः । एशो आअदे इति । चक्रपरिवृत्तिदानार्थम् । एतेन शकारस्य कौकनेकमुक्तम् (?) । अतोऽपि च शकारलाघवमुक्तमित्यवधेयम् । (P. 278, L. 125) आलिके अ(आ)रयत् । संभारमित्यर्थः । मत्वर्थीयः । (L. 127) गोणा गावः । न सकलानि यानि पदानि मन्थानि (?) । एत्रं प्रयहणादि । गुम्भट्टाणेसु । लेपो जीमूतरथस्थाने (?) । परिब्भट्ठो बन्धनभेदादपगतः । ता गेण्हध ततो धारयत । व्यसनं महा(?)र्णवम् । संघाताजप्यत्वेनं (?) संबन्धेन ॥ १ ॥ गम्यो नृपः । सर्वेषां सेव्यो हि राजेत्यर्थः ॥२॥ सुघुंत्तं सुव्यक्तम् (Erased A) । (P. 282, L. 176). जय जयमान च(ध?)न्दनक मङ्गलक पुंप्योटक मुखाः ॥ किं अच्छधेत्यादि । गाथा । 'किं तिष्ठत विश्वस्ता योऽसौ गोपालदारको बद्धः । भित्वा समं व्रजति नरपतिहृदयं च बन्धनं चापि' ॥ ५ ॥ पुरत्थिमे पूर्वस्मिन् । वीरक-विशल्य-भीमाङ्गद-दण्डकाल-दण्डशूर-प्रमुखाः । आअच्छधे-

---

१ अपर्यत्तं B E F G. २ एत्तुम्यशकटेन B C D; एतेन बालकेन E F G. ३ गृहपतिना B C D. ४ जाणत्थलकं E F. ५ °कडुआ E F G. ६ द्रुत E F G. ७ कातरत्वमुक्तम् E F G. ८ समार इत्यर्थः B C. ९ गन्थानि E. गच्छामि F G. १० ट्ठाणेसु° F G. ११ लीपोजीमूतरथस्थने: E. °रथस्थाने F G. १२ महार्णवः E F G. १३ सुवत्तम् E F G. १४ °पुप्पोट्टक° E F G. १५ मुख्याः E F.

ति । गाथापञ्चकम् । ‘ आगच्छत विश्वस्तास्त्वरितं यतत लघुं कुरत । लक्ष्मीर्येन न राज्ञः प्रभवति गोत्रान्तरं गन्तुम् ’ ॥६॥ ‘उद्यानेषु सभासु च मार्गे नगर्यां आपणे घोषे । तत्तद्योजयत त्वरिता शङ्का वा जायते यत्र’ ॥ ७॥ ‘अरे रे चीरक किं किं दर्शयसि ब्रवीहि (ब्रूहि!) तावद्विश्वस्तम् । मोचयित्वा बन्धनकं कोसौ गोपालकं हरति’ ॥८॥ ‘कस्याष्टमो दिनकरः कस्य चतुर्थश्च वर्त्तते चन्द्रः । षष्ठश्च भार्गवग्रहो भूमिसुतः पञ्चमः कस्य’ ॥९॥ ‘भण कस्य जन्मषष्ठो जीवो नवमस्तथैव सूरसुतः । जीवति चन्दनके कोसौ गोपालकं हरति’ ॥१०॥ ‘हक्त्रासौ चाष्टमस्थे भवन्ति(ति)र्बुवच(द) ना अद्यापि चलिते (न स्वापि वनिता’) इत्यष्टमरविफलम् ॥ ‘चतुर्थेविश्वासः शिशुलिन ( खरिणि ) भुजङ्गेन सदृशः’ । इति [चतुर्थ] चन्द्रफलम् ॥ ‘षष्ठो भृगुः परिभवस (om.) रोग [ता] पदः’ ॥ [इति षष्ठभार्गवफलम्] । ‘विप(रिपु)मदकोपभयानि पञ्चमे तनयकृताश्च शुचो महीसुते । क्षिद्यु(ति)रपि नांद्य(स्य)भवेच्चिरं (चिरं भवेत्) स्थिरत शिरसि कपेरिव मालती कृता’ ॥ [इति पञ्चममङ्गलफलम] जीवे जन्मन्यपद्य(ग)तधनाः (नधीः) स्थानभ्रंशो (भ्रष्टो) बहुकलहया[यु]तः ॥ [इति जन्मस्थगुरुफलम्] ॥ नं सखि(खी)वदनं तिलकोज्ज्वलं नं घच(चय)नं शिखिकोकिलतो(ना)दितम् । हरिणप्लुतसारस (शावयि) चित्रितं वि (रि) पुण (ग)ते मनसः सु(सु)खदं गुरौ’॥ षष्ठजीवफलम् । ‘गच्छत्यध्वानं सप्तमे धा (चा)ष्टमे धा(च) हीनः स्त्रीपुत्रैः सूर्यजे दीनचेष्टः । तद्वद्धर्मस्थे वैरक(ह)द्रोगबल्या (बन्धे)ध(र्थ)मौस्तु(प्यु)च्छिद्येत ( om. ) द्वैर्यदधी (धेऽघदेवी) क्रियाभ्यः (चः) ’। इति नवमशनैश्चरफलम् ॥ [बृहत्संहिता अ० १०४ श्लो० ६-४४] भट चन्दनकेति संबोधनम् । अवहरइ इत्यादि । गाथा। ‘अव(प)हरति कोपि त्वरितं चन्दनक शपे तव हृदयेन । यथार्धोदितदिनकरे गोपालदारकः खण्डितः’ ॥११॥ उहारिओ इत्यादि । गाथा। ‘उद्घाटितं प्रवहणं व्रजाति मध्येन राजमार्गस्य। एवं तावद्विचारयत कस्य कुत्र वा प्रवासितं प्रवहणमिति’ ॥१२॥ यच्छ-

१ लघु° B C. २ नगर्यां E F G. ३ त्वरिताः B F. ४ कदर्थयसि E F G. ५ गुरुषनसु E F G. ६ मदभूरुर्भ° E F G. ७ अथ Om. F G ८ स्थिरा E F G. ९ न यतीयस्न E F G.

न्दसमिति यथाच्छन्दं यथेष्टमित्यर्थः । (Erased A) (P. 289, L. 225) को तमित्यादि। गाथाद्वयम्। 'कस्त्वं गुणारविन्दं शीलमृगाङ्कं जनो न जानाति। आपन्नदुःखस्य मोक्षो यतस्त्वं चतुःसागरसारकं रत्नम्' ॥१३॥ 'द्वावेव पूजनीयाविह नगर्यां तिलकभूताश्च (भूतौ च)। आर्या वसन्तसेना धर्मनिधिश्चारुदत्तश्च' ॥१४॥ जोनामीति। गाथा। 'जानामि चारुदत्तं वसन्तसेनां च जानामि। प्राप्ते च राजकार्ये पितरमप्यहं न जानामि' ॥ प्राप्ते चेति चकारः पुनरर्थे ॥ १५ ॥ (P. 290, L. 236) तंत्तिलश्चिन्तापरः। राज्ञा पालकनाम्ना। व्यायच्छतः परपरिभवं कुर्वतः ॥१७॥ पत्तरहो पत्ररथः पक्षी। शाकुनिकस्य पक्षिणां हन्तुः। त्वयमिमित्तजस्य चन्दनकस्य सापराधस्य चारभत्तेन कृता (?)। यदाह (P. 292, L. 259) प्राणप्रदस्येति ॥ भीदाभयेति। गाथा। 'भीताभयप्रदानं ददतः परोपकाररसिकस्य। यदि भवति भवतु नाशस्तथापि खलु लोके गुण एव' ॥ १९ ॥ संभमेत्यादि। गाथा। 'संभ्रमघर्घरकण्ठो यत्त्वं जातोसि यत्त्वया भणितम्। दृष्टो मयेह आर्यः पुनरपि वसन्तसेनेति'॥२०॥ खस-खत्ति-कड-कडट्ठोविल-कर्णाट-कर्ण-प्रावरण-द्राविड-चोल-चीन-बर्बर-खिराट-वाल्हीक-लाट-खेर-खान-मुख-मधुघात-प्रभृतीनाम्॥ (P. 296, L. 296) जाणन्तो वीत्यादि। गाथा। 'आनन्नपि खलु जातिं भणामि तव च न शीलविभवेन। तिष्ठतु ममैव मनसि किं च कपित्थेन भग्नेन'॥२१॥ संज्ञां ददातीति जात्युचितक्रियाभिनयः॥ (L. 302) सिण्णेत्यादि। गाथा। 'शीर्णशिलातलहस्तः पुरुषाणां कूर्चग्रन्थिसंस्थापनः। कर्तरीव्यापृतहस्तस्त्वमपि सेनापतिर्जातः' ॥ २२ ॥ जोदी तुज्झ विसुद्धेति। गाथा। 'जातिस्तव विशुद्धा माता भेरी पितापि ते पटहः। दुर्मुख करटकभ्राता त्वमपि सेनापतिर्जातः' ॥ २३ ॥ करटको वाद्यविशेषः॥ (P. 300, L. 337) एत्थ इत्यादि। गाथा। 'अत्र मया विज्ञप्ता परिज्ञापिता। चन्दनकं च स्मरिष्यसि। न भणाम्येष लुब्धः स्नेहस्य वशेन

१ शीतभृ° E F G. २ भूतौ च E F G. ३ जाणामीति° E F G. ४ सुजानामि B C. ५ तंतिलः E F G. ६ त्वयमित्तजस्य E F G. ७ खत्तिखड F. ८ कलट्ठो E F G. ९ खेरखान F G. १० कच °E F G. ११ जाई तुज्झ° E F G. १२ भेरी E F G. १३ दुर्मुख E F G. १४ स्मरिष्यति E F G.

भ्रमः'॥२५॥ तथा यदीत्यादि। राज्यप्राप्तिरूपः ॥२६॥ अभयमित्याद्यार्या। 'अभयं तव ददातु हरो विष्णुर्ब्रह्मा रविश्च चन्द्रश्च। हत्वा शत्रुपक्षं शुम्भनिशुम्भौ यथा देवी' ॥२७॥ चिरोद्दिष्टो चिरोधितः। पुत्रभ्रातृप्रभृतिभिः सहितः। तमार्यकमेव॥

[इति] प्रवहणविपर्यासो नाम षष्ठः (षष्ठोऽङ्कः)॥६॥

---

१ हीरेव E F G.

## सप्तमोङ्कः।

शुल्कं राजदेयम् ॥१॥ असत्कारमिति। अकृत्रिमं स्वभावत एवेत्यर्थः। (P. 303, L. 16) कर्मान्तो राजादीनां नियोगविशेषः। तत्संबन्धिनि धर्मे त्यक्तकाष्ठानि तैः प्रतिरुद्धगमनः ॥ २ ॥ सावशेषः किंचिदवशिष्टः। कोकिलपक्षे नरपतिपुरुषाः शाकुनिकाः। सनिगड इव सनिगडः याल्यामन्दगमनः। यानेधिरूढोनवस्थितः। काकश्रीरक्षितकोकिल उपमानम् ॥ ३ ॥ तस्य चारुदत्तस्य महात्मनो गुणैः। तत्प्रयहणस्यस्य चन्दनकेन रक्षितत्वात् ॥ ४ ॥ मा कुप्य मा क्रोधं कुरु। गोड्डौ पादौ। अलघुर्मन्दः। (P. 308, L. 80) क्षेमेणेत्यादौ चारुदत्तार्यकयोरुत्तरोत्तरेणाष्टखण्डः श्लोकः ॥ ७ ॥ पालके राजनि रक्षक पय यां। रक्षणे महानभिनिवेश इत्यर्थः। श्रमणको भिक्षुः। अशकुनपरम्परा च चारुदत्तवसन्तसेनयोरनिष्टस्याग्रे भविष्यतः सूचनाय ॥

[इति] आर्यकापवाहनो नाम सप्तमः (मोङ्कः) ॥ ७ ॥

---

१ °दवशेषः E F G. २ गोडा E F G. २ इत्यार्यक° E.

## अष्टमोऽङ्कः ।

(P. 311, L. 6) पञ्चजनेत्यादि । वैतालीछन्दसा द्वयम् । पञ्चेति । जणसंयोगात्पञ्चेति पञ्चशब्दो गुरुः । छन्दोनुरोधात् । पञ्चजनेति णकारः (?) । अवलेक्केति केवलः ककारः पकारश्च लघुः । अवसंवीत्यत्र सकारो न प्रविष्टः । अन्यथा अवस्संदोति स्यात् । शे णले इत्येकारद्वयेन्यतरो न गाहतीत्यत्र 'गा' इत्याकारस्य गुरुत्वम् । पञ्चजनाः पञ्चेन्द्रियाणि । इ-स्तिअ अविद्याम् । गाम शरीरम् । लंखिस्सदे रक्षितः । दुष्ट(ष्य?)त्वाविक-तिपातात् । चाण्डालोहंकारः । अबलोसहायः । अथवेन्द्रियादिविनाशात् । अवश्यं स नरः स्वर्गं गाहते ॥ २ ॥ 'शिरो मुंण्डितं तुंण्डं मुंण्डितं चित्तं न मुंण्डितं न संयत्तीकृतम् । किं मुंण्डितं यस्य पुनश्चित्तं मुंण्डितं सुष्ठु साधु शिरस्तस्य मुण्डितम्' ॥ ३ ॥ (P. 311, L. 8) संयमधेति । गाथा । क्वचिद् दृश्यते । 'संयच्छत निजकमुदरं नित्यं जागृत ध्यानपटहेन । विषमा इन्द्रियचौरा हरन्ति चिरसंचितं धर्मम्' ॥ १ ॥ लंट्ठिअशालकाहे-ति । राष्ट्रियश्यालकत्वेनै च पुनः संयोगः प्रकर्षख्यापनार्थः । अपूपौ द्वाविति वा न पुनरुक्त्ये(?) । ही अविद् माणहे इति विस्मयंखेदे । ना-सिकां भित्वापवाहयति । तत्कुत्राहमशरणः शरणं गमिष्यामीति । (P. 313, L. 23) आपानकं पानगोष्ठी । पिबन्त्यस्मिन्नित्यधिकरणे ल्युट् । रक्तमूलकस्य शीर्षमिव मध्यमा किं पत्रलकभागमपनीय (?) मूलकमुपदर्शीकुर्वन्ति ॥ आनिर्जितमनात्मसात्कृतम् ॥४॥ णीविदे नापितः । सद्युपासको दृष्ट इत्याशयः । शलावकश्चार्वाकः । कोष्ठकमिष्टकादिर-चितम् ॥ (P. 316, L. 48) यत्र तावत्कुकु(कु)राः शृगाला जलं पिबन्ति । इगे वि अहमपि । त्वमपि पुराणकुलित्थयूषसवर्णान्युग्रगन्धीनि चीवरा-णि प्रक्षालयसि । एकप्रहारवन्तं करोमि । एकप्रहारेण मारणोत्कावयं प्रयोगः ॥ अद्यापीति । गौरी ललाटे शोभा भवति । विरतस्य आत्मति-

१ 'संयमधेति...धर्मम्' before पञ्चजणे E F G. २ वैतालीय° F. ३ °वीति E F G. ४ ऽन्तः E F G. ५ इत्तिआ आविय E F G. ६ गामः B C. ७ लक्खिदो E F G. ८ ख-ण्डितम् B C. ९ om. BC. १० °मखण्डितम् BC. ११ लट्टिअ E F G. १२ न om. E F G. १३ वा om. E. १४ पुनरुक्तम् B C D E F G. १५ °मशरणं E F G. १६ भागमनीय E F G. १७ णाविदे E F G. १८ आत्मनि E F G.

स्वरूपगतिः (?)। किणः संघर्षजः। वर्णान्तरं धत्तकषायीकरणं न शोलितम्। यस्मान्तः स्कन्धे न तिष्ठते। नपुंसकत्वं चिन्त्यम् (?)। निभृतमवकाशो यस्य तत्। संकोचितप्रदेशमित्यर्थः। पटस्योच्छ्रयो विशालता। तस्माद्दुःखम् ॥५॥ जातमात्र एव न प्रव्राजितः। तपस्विना वराकेण। हलक्केन हृदयेन। न गतस्तर्हि न गमिष्यतीत्यर्थः। पुत्रक हृदय द्वे(·द्वे?)यं अद्यस्त्वं (?) भट्टारकं दर्उतिटिति नम इति प्रस्तावात् (?)। विशेयमर्थं (?)। (P. 319, L. 81) काइलं पङ्कविलम्। कलुषमिति यावत्। विपर्यस्तं लोकविरुद्धम् ॥ ६ ॥ बहुकुसुमेत्यादि। पुष्पिताग्राच्छन्दः। रुक्खा वृक्षाः। ललन्ति विहरन्ति ॥ ८ ॥ स्त्रीभिरित्यार्या ॥ ९ ॥ बुभुक्षितो न शक्यते पादाभ्यां गन्तुम्। (P. 322, L. 118)। णहमज्झेत्यादि। गाथा। 'नभोमध्यगतः सूर्यो दुःप्रेक्षः कुपितवानरसदृशः। भूमिर्दृढसंतप्ता हतपुत्रशतेव गान्धारी ॥' गान्धारी दुर्योधनादिपुत्रशतमाता ॥१०॥ शिलशीत्यादि। मालिन्या श्लोकः। 'शिरसि मम निलीनो भाव सूर्यस्य पादः शकुनिखगापि(वि)हङ्गा वृक्षशाखासु लीनाः। नरपुरुषमनुष्या उष्णदीर्घं श्वसन्तो गृहशरणनिषण्णा आतपं प्रेरयन्ति' ॥१२॥ हिङ्गुज्जेत्यादि। उपजातिछन्दसा। 'हिङ्गूज्ज्वलौ जीरकभद्रमुस्तकौ वचाया ग्रन्थिः सगुडा च शुण्ठी। एषा मया सेविता गन्धयुक्तिः कथं नाहं मधुरस्वर' इति ॥१३॥ 'हिङ्गूज्ज्वलं दत्तमरीचचूर्णं व्याघारितं तैलघृतैर्मिश्रम्। भुक्तं मया पारभृतीयं मांसं कथं नाहं मधुरस्वर' इति ॥१४॥ पलिपतितस्तहेणोधिकमांसेन सह मया भुक्तं ततः कथं न मधुरस्वरोहम्। धनद्व्यः कर्मणि यत् तः(?)। (P. 325, L. 156) किं न प्रेक्षते भावः। वृद्धसूकर इव। घुरुघुरेत्यव्यक्तशब्दानुकरणम्। अव्यक्तं शब्दं कुर्वाणो लक्ष्यते। पंगालखण्डेण प्राकारखण्डपथेनैव प्रवेशय। दैवगत्या तु न भग्नं प्रवहणमित्याह। कथं न भग्न इति। ण छिण्णा लज्जू ण मला गोणा इति एकत्वे शकारोक्तत्वात्क्रमणम्। मम गुरुर्गुरुरिति। अतिमान्यत्वपरम्। एवं त्वं प्रेक्षसे। सादरं महत्तरत्वा (?)। पुलकालिलोए पुष्पतणीयः(?)। पुष्करिणी। एकार्यन्वयपयच्छनीय इत्यनेन गुरुत्वमेव द्रढयति इति

१ किणं E F G. २ हलक्केण E F G. ३ हदयं दयं E F G. ४ कं हटिति F G. ; के हटिति E. ५ विशेषमर्थः E F G. ६ ता किं न पेक्षते E. तत् किं F G. ७ पागाल° F G. ८ पुलकुलगीए पुरस्करणीक E F G. ९ एकार्थेस्ते छपनीय E.

प्राचीनटीका(?)। त्वं तावत्प्रवहणमग्रत आरोह। (P. 329, L. 189) अथवा तिष्ठ त्वम्। तव पित्र्यं प्रवहणम्। अहं प्रवहणस्वामी। अग्रतः प्रवहणमधिरोहामि। यद्यप्यहमेवं ब्रवीमि तथापि तवैष भावारोधिरोह भट्टारक इति भणितुम्। प्रवहणे राक्षसी चौरो वा प्रतिवसति। मूशे पञ्जे इति विपरीतोक्तिः शकारवाक्यत्वात्। वुड्ढचेडे निश्चितथोतः। वृद्धश्चोत्प्रेपांम्ह इत्यावाचकः। अकारणादिति पूर्वटीका(?)। कथं शृगाला उड्डीयन्ते। वायसा धावन्ति। तद्यावद्द्वावोक्षिभ्यां भक्ष्यते दन्तैः प्रेक्ष(क्ष्य)ते। शकारवाक्यत्वाद्विपरीतोक्तिः। तावदहं पलाये। [अ]वनतेत्यादि। पुष्पिताग्रा। प्रेयाम इति लोटो मस(?)। गौरवमात्मनि बहुमानः ॥१५॥ अन्यथा यापन्यात्(?)। लाघवनायाति कातरं विदुःखं काकादने भीरुः (?)। वेशाभावेन ॥१७॥ नाम्पश इति म्यन्ताव्। कर्मणि लकारः। मोक्षयति(?)। (P. 334, L. 241) भक्खिदे भक्षितः। विपरीतोक्तिः पूर्ववत्। अथवेत्यतलस्योक्तिः। शृगाला उड्डीयन्तीत्यादि चतुष्टयमपक्रमम्। देवदार्णं यंभणार्णं अग्गादो चलणेण गच्छामि। नहि नहि इति न्यायविरुद्धम्। तेन हि अपूर्वा श्रीः समासादिता। लोशाविदा रोपिता। हे अन्तिके अत्तिके॥ एसे पडामि इत्यादि। वसन्ततिलकम्। 'एष पतामि चरणयोः विशालनेत्रे हस्ताञ्जलिं दशनखे तव शुद्धदन्ति। यत्तव मयापकृतं मदनातुरेण तत्क्षमस्वेदानीं वरगात्रि तवास्मि दासः' ॥१८॥ जे चुम्बिदे इत्युपजात्यौ। 'ये चुम्बिता मातृकाभिर्गतौ ■ देवानामपि ये प्रमाणम् (प्रणामम्)। ते पातिताः पादतलेन मुण्डा वने शृगालेन यथा मृतवक्राः' ॥ मातृका इति स्वार्थे कः। मुण्डा इति बहुवचनमप्यनर्थकम् ॥१९॥ एदेहिं इत्यादि। वसन्ततिलकच्छन्दसा। सावेन्दोः पाक्षिकगुरुत्वादेदेहिं इत्येहिमित्यनयोर्लघुत्वम्। 'एताभ्यां तव दशनखोत्पलमण्डलाभ्यां हस्ताभ्यां चाटुशतताडनलम्पटाभ्याम्। कर्षयामि। हे त्वाम्। वरतनु मम(corr. निज A) यानकात्केशेषु वालिदयितामिव यथा केशेषु

१ चोरो वा E F G. २ प्रेक्ष्यते E F G ३ पलायिष्ये E. ४ अवनतेत्यादि E. ५ प्रयामे F G ६ लोटो F G ७ वेशभावेन G. ८ देवताना ब्राह्मणानामप्रतश्चलनेन E F G ९ लोशाद्दा E F G. १० एशे E F G ११ °जातिः E F G. १२ चुम्बिता E F G. १३ गतेन देवानामपि F G. १४ प्रमाणम् E F G १५ गुरुत्वम् E F G.

जटायुराकृष्टवान्। पाठान्तरे हनूमानित्यर्थः। व्याहृतोपमं चेदम् ॥२०॥ योसौ वञ्चनावमानेन तदा रोषाग्निः संधुक्षितः सोद्य एतस्याः पादप्रहारेणानेन प्रज्वलितः। ततः सांप्रतं मारयाम्येनाम् ॥ (P. 339, L.301) यदीच्छसे इत्यादि। उपजातिच्छन्दसा। 'यदीच्छसि लम्बदशाविशालं प्रावारकं प्रच्छदं सूत्रशतैर्ग्रथितम्। मत्स्यं च खादितुं तथा तुष्टिं कर्तुम्। चुहू चुहू चुक्कु चुहू चुहुत्ति इत्यनुकरणम् ॥ २२॥' निक्षिकेन्योन्यार्थावेतौ(?)। अचेशसदृशेति। अचेट्यापाटकोचितं कृत्तिमम् (?)। विविक्ते विजने। पटान्तापवारितां कृत्वा। अपध्वस्तो धिक्कृतः। (P. 342, L. 323) खण्डुआइं बाहुवलय(वि)शेषान्। पंहिलिस्सं परिधास्ये। पीढके पीठम्। उंवाविसिस्सं उपवेक्ष्यामि। तंबहिहिसिधोष्टासि (?)। उच्छिष्टअं भोजनावशिष्टम्। प्रभवति मम भट्टारकः शरीरस्य न चारित्र्यस्य। परपिण्डभक्षको भूतः। पिट्टयतु ताडयतु मारयतु वा ॥ (P. 345, L.359) येणम्हीत्यादि। गाथा। 'येनास्मि गर्भदासो विनिर्मितो भागधेयदोषेण। अधिकं च न क्रीणि(क्रे)ष्यामि तेनाहमकार्यं परिहरामि ॥ २५॥' कस्स भाआमि कस्य(स्मात्)बिभेमि। अपि तु न कस्यापीत्यर्थः। ओवलिके अपवरके। गृहविशेष इत्यर्थः। परिकथं का नु इति प्रसिद्धम्(?) ॥ सव्वकालमित्याद्यर्थस्तु। 'सर्वकालं मया पुष्टो मांसेन च घृतेन च। अद्य कार्ये समुत्पन्ने जातो मे वैरिकः कथम्' ॥ वैरिको वैरी। स्वार्थे कः ॥ २८॥ लब्धो मयोपायः। वृत्ता वृद्धखोडेन। शण्णा उपदेशः। एदं विदम्। भाव यत्त्वं मया भणितः सर्वः समस्त(?)। कथमहं एवं बृहतो मल्लकप्रमाणात्। समुद्रप्रमाणादिति वक्तव्ये मो (मौ)र्ख्यान्मल्लकप्रमाणतया कुलमुपमिनोति। मल्लिका पत्रपुटिका तया कुलस्य महत्त्वं मौर्ख्यादुपमिनोतीति प्राचीनटीका। जातोकार्यं करोमि। एवमेतदङ्गीकारयितुं मया भणितम्। णासेण न्यासेन नासेन (superfluous) विनाशेन च। अथ कपटकापटिको ब्राह्मणः वृद्धपोढः कदाचिदपवारितस्तिष्ठति। शृगालः ॥ (P. 351, L. 418) सुवण्णकमित्युपजातिः। 'सुवर्णकं ददामि, प्रियं वदामि, पतामि शीर्षेण सवेष्टनेन सोष्णीषेण। तेन नूनं वेदानी इति प्रसिद्धम् (?)। (written

१ मोत्त च F G. २ चुक्कति चुहु चुहु कृत्वा E F G. ३ पहिलिस्सं E F G. ४ पीढकं पीठम् E F G. ५ उविविसिस्सं E F G. ६ जेण E F G. ७ विहितो विनिर्मितो B C. ८ ओवलिए E F G. ९ परिकरं कप्पाण्ड इति° E F G.

and erased A) तथापि मां नेच्छसि शुद्धदन्ति किं सेवका कष्टमया मनुष्याः' ॥ ३१ ॥ खलचारितम् (?)। यत्नेन प्रतीकपाठो दृश्यते । तत्र इत्यादीत्यध्याहार्य इत्यादि श्लोकद्वयं पठतीत्यर्थः॥ खलचारितेति निकृष्टेति च संबोधनद्वयम्। पलाशपदेन राक्षसोप्यभिधीयते । गाले देती(न्ती) साक्षेपं वदन्ती इति देशीति चिरन्तनटीका ॥ किं शो शाके इति । शक्करीविशेषच्छन्दसा श्लोकः ॥ 'किमसौ वालिपुत्रो महेन्द्रो रम्भापुत्रः कालनेमिः सुबन्धुः । रुद्रो राजा द्रोणपुत्रो जटायुश्चाणक्यो वा धुन्धुपुत्रस्त्रिशङ्कुः' ॥ कालनेमिरसुरः। सुबन्धुः कविविशेषः। धुन्धुरसुरभेदः ॥३४॥ (P. 858, L. 451) अथ चैतेपि त्वां रक्षन्ति॥ चाणक्येनेत्याद्यर्थस्तु। 'चाणक्येन यथा सीता मारिता भारते युगे । भारतावच्छिन्ने समये । एवं त्वां मारयिष्यामि जटायुरिव द्रौपदी(दीं) ॥३५॥ ऊर्ध्वमुच्चैस्तराम् । शुमल स्मर । मल म्रियस्व॥ एदं दोशकलण्डिअमित्यादि ।शार्दूलेन श्लोकद्वयम् । 'एतां दोषकरण्डिकामविनयस्यावासभूतां खलां दुर्जनस्वभावाम् । रक्तां तस्य चारुदत्तस्य किलागतस्य रमणे संभोगनिमित्तं कालागतामागताम् । कालां कृष्णाम् । किमेष समुदाहरामि निजकं बाह्वोः शूरत्वम् । निश्वासापि म्रियते अम्बा सुमृता सीता यथा भारते' ॥३६॥ 'इच्छन्तं मां नेच्छसीति गणिका रोषेण मया मारिता शून्ये पुष्पकरण्डके इति सहसा पाशेनोत्त्रासिता । मया रोषेण मारिता [इति] विपर्यस्य योजना । सेयावश्चितः भ्राता मम पिता माता च सा द्रौपदी । पाठान्तरे तु प्रमांतः पतिः या सा (?) पश्यति नेदृशं व्यवसितं पुत्रस्य शूरत्वम् ॥३७॥ ता ततः । अपसृत्य तिष्ठामि । पाप इति वृक्षं संबोधयति । अनिमित्तमसंकुलम् । पिट्ठदो पृष्ठतः । दक्षिणदिग्गतत्वं मृतत्वमपि । (P. 358, L. 503) शपे मायस्यशीर्षमात्मीयाभ्यां पादाभ्याम् । संभ्रामय हृदयम् । एषा मया मारिता । यदि मम न प्रत्येषि पराक्रमे ततः प्रेक्षस्व राष्ट्रिक(य)स्यालस्य शूरत्वम् । उवरदे उपरतः । हे पाप हे पापसंकल्प ॥ [अत्थं शतमिति]। अर्थं शतं ददामि सुवर्णकं ते कार्षापणं ददामि सवोडिकं ते । षोडश विंशतिकपर्दका (कः?) गौडे प्रसिद्धः। तच्चतुष्टयं पणः। ते षोडश कार्षापणः । कहावण इत्येके । एष दोषस्थाने पराक्रमो मे साधारणो भवतु मनुष्याणाम्' ॥ (P. 362, L. 554) आउत्तस्स भगिनीपतेः ।

१ धुन्धुमारः E F G. २ न रक्षन्ति E F G. ३ द्रौपदीम् E F G. ४ शुमल E F G. ५ मरणे (?) G.

घ्यवहार(रं)विचारम्। निधनं गच्छात्विति(त्यमिति) ॥४०॥ चेटं प्रति घ्रूते यस्यां वेलायामलंकलेमीति अलंकरोमीति वक्तव्ये इति पुरातनटीका(?)। पासादवालग्गपडोलिआए । प्रासादो(दउ)परिगृहविशेष इति पश्चाद्व्याख्यातम् । (P. 364, L. 572) अत्तपालित्ताणे आत्मरक्षार्थम् । निगलपूरितं अतिगुरुबन्धनोत्तीरेयम्। एवं मन्त्रोभिरक्षितो भवति । प्रावारेण प्रच्छदपटेन। णामंकिदे नामाङ्कितः। वसन्तसेनाया इति शकारस्य घेति लिखिताक्षरः । शुक्खपण्णउडेण शुष्कपर्णपुटेन । तथा कृत्वा पूर्वोक्तेन स्थगितां कृत्वेत्यर्थः । अत्थदश अर्थस्येत्यर्थः [चारुदत्तेति] । 'चारुदत्तविनाशाय करोमि कपटं नवम् । नगर्यां विशुद्धायां पशुघातमिव दारुणम्'॥४४॥ अविदमादिके सभयविस्मये । नत्थिय नासाज्ज्वा बाधितः (?)। घदयेले एतयेरः ॥ एशे म्हि इत्यादि । गाथा । 'एषोहं त्वरितत्वरितं लङ्कानगर्यां गगने गच्छन् । भूमौ पाताले हनूमच्छिखरादिव महेन्द्रः' ॥ महेन्द्रशिखरादिव हनूमानिति वक्तव्ये शकारोक्तत्वाद्विपरीतम् । 'अअट्ट' इति पाठे अष्टकशिखरादित्यर्थः । व्याहतोपममिदं तावत् ॥४५॥ (P. 367, L. 597) तेथेति प्रसार्य । भवतु । धर्माक्षराणि । सग्गेण स्वर्गेण । यावत्तस्या वसन्तसेनायाः । द्यूतकराभ्यां सकाशाद्दशसुवर्णानां कृते निःक्रीतः । तदो पहुदि निःक्रयप्रभृति । तया क्रीतमात्मानमवगच्छामि ॥ वादादवेति । गाथा । 'वातातपेन तप्तानि चीवरतोयेन तिम्मितत्वमार्द्रत्वं प्राप्तानि । तिम्मिता इति भावप्रधानो निर्देशः। एतानि विस्तीर्णं प्रासं प्रसारितं यत्र (?) तानि मन्ये पत्राण्येव विजृम्भन्ते' ॥ ४६ ॥ (P. 368, L. 609) शुद्धेति । शुद्धं केवलं कटकादि न स्वभाव एवालंकरणं यत्र सः । विदिये द्वितीयः । शे ज्जेव्व स एव । से अस्याः । परं मनागिष्टम् । ओ(उ)लम्बिअ अवलम्ब्य । तत्र समाश्वस्तमना भूत्वा ।

[इति] मोडनो नामाष्टमः (मोङ्कः) ॥ ८ ॥

१ णासिच्छिय बाहिदे नासारज्जा विद्धः E F G. २ अट्टअ इति° E F G. ३ तथा कृत्वा प्र° E F G. ४ सग्गेण E F G. ५ दुदिये E F G. ६ वसन्तसेनामोटनो° E F G.

# नवमोङ्कः ।

अधिकरणे न्यायविवादविषये नियुक्तत्वात्तदेषामस्ति । 'अत इनि ठना-विति' ठन् । अपवादो दोषवाच्येति यावत् (Erased A) ॥ (P. 373, L. 13) ह्लादेहमिति । प्रहर्षिणीछन्दसा । जलेहिं शुवदीहिं शुविहि-दपाहिं इत्यत्र सानुस्वाराणामप्यन्त्याक्षराणां लाघवम् । छन्दोनुरोधात् । 'स्नातोहं सलिलजलैः स्वच्छैः । पाठान्तरे 'पानीयैः' । नारीभिर्युवतीभिः स्त्रीभिः सह उद्याने उपवनकानने निषण्ण इति विपर्यस्य योजना । गन्धर्व इव सुविहितैरङ्गकैर्लक्षितः । 'गन्धव्वेहिं' इति पाठे तृतीया प्रथमार्थे । रूपकं च (?) । पौनरुक्त्यादि शकारोक्तत्वात् ॥१॥ खणेनेत्युपेन्द्रवज्रया' । हगे इत्यत्र एकारस्य लघुत्वम् ' । छन्दोनुरोधात् । एतच्छत्रकमुष्टिकं पा-घालबन्ध इत्येके (?) । 'क्षणेन ग्रन्थिः । पाठान्तरे 'घृष्टिका' । क्षणेन ग्रन्थिः क्षणजूलिका मे क्षणेन वालाः क्षणकुन्तला वा । क्षणेन मुक्ताः क्षणमूर्ध्व-चूडाः जनिकाज्यलिकयोर्विशेषः (?) । चित्रो विचित्रो । हगे अहम् । राजश्यालः । 'चित्ते ण चित्तो' इति पाठे चित्रं न चित्रं यतोहं राजश्याल इति व्याख्येयम् । राजश्यालत्वेन मयि सर्वं संभाव्यत इति भावः ॥२॥ (P. 374, L. 24) किमिणाचिट्ठिदं [ कृपणचेष्टितम् ] । आः क्रोधे । लाआणं राजानम् । आउत्तं भगिनीपतिम् । पुनर्भगिनीपतिमिति पुनरुक्तम् । अत्तिकां भगिनीं ज्येष्ठाम् । (P. 382, L. 95) युष्माकं सुखं ददामि न ददामि । शकारोक्तेर्व्याकुलता ॥ लाअशाशुलेत्यादि । गाथा । 'राज-श्वशुरो मम पिता राजा तातस्य भवति जामाता । राजश्यालकः खल्वहं ममापि भगिनीपती राजा' । एतेन यदुक्तं भवति तदाह । अपराद्धस्यापि न मे किमपि करिष्यति । क्रीडितुं रक्षितुम् । जीर्णेति विशेषणं विजनत्व-ख्यापनार्थम् । तत्र च प्रेक्षितुम् । तत्रेति करणाधिकरणत्वेन विवक्षित-त्वाचदित्येवार्थः (?) । तत्र दैवयोगेन पश्यामि म चेत्यर्थः । (P. 385, L. 126) म मयेति तस्य योध्यत्वेन व्यवहारपदम् । परिशून्यया ग्रीवया । बाहुपाशेन मारितेति शून्यैवाति (?) । अर्थनिमित्तमिति ज्ञातुम् । मना-

१ दोषभागिति E F G. २ जुवदीहिं E F G. ३ सुविहिद॰ E F G. ४ ॰न्ताक्षराणां F. ५ परिहृत॰ B C. ६ रचितैः B C. ७ छत्रकमुष्टिकाकालबन्ध इत्येके E F G. ८ जूलिका-शूलिकयोः E F G. ९ मे न E F G.

कथन्त्वमन्ये मां सूचयन्ति (?)। अनेनैव वसन्तसेना मारितेति सूचनाकारः । गुप्तेनापि उत्तराचरणेन ततोऽस्मै(त आत्मै)व विनाशितः । ( P. 388, L. 153 ) मित्तघरअं मित्रगृहम् । प्रस्तावाच्चारुदत्तस्य गृहम् । अर्थो न पुनरधिकरणिकानामिति देश्यापतिरूपतया ज्ञानेन शिष्टानां लज्जाकरत्वादिति भावः । विनयदत्तस्य नप्ता । धनदत्तेति कायस्थसंबोधनम् । स्वैरं स्वच्छन्दम् । असंभ्रान्तं संभ्रमशून्यम् । अवस्थामीदृशीं दशाम् ॥८॥ मार्गगत आर्यकः ॥९॥ शास्त्र चास्त्र शब्दे त्यादिरात्मनेपदी । रेहादेरात्मनेपदानित्यत्वाच्च परस्मैपदम् । चरास्त्र शब्द इति तुदादिस्तालव्यान्तः । आत्मनेपदी (?) ॥१०॥ आर्द्रतमायां हि भुवि चरणस्खलनं युज्यते ॥१३॥ जृम्भितो दीर्घोत्मातोतिस्थल (?) । चिन्तासक्ते चिन्तामार्गे निमग्ना ( corr. सक्ता A. ) एव मन्त्रिणः सलिलानि यत्र । दूत आह्वायकः गतागतनियुक्तः । चीरश्च गृहपुरुषः । नागश्वेसतारकार्थे (?)। नाना बहुप्रकाराः शब्दं कुर्वन्तो ये कङ्कपक्षिणस्तै रचितं व्याप्तम् । अशुभसूचकत्वेन तेषां समवधानमुक्तम् । अधिपक्षे तु व्यक्तमेव । 'पक्ष' इति पाठे तेषां पक्षाणां रचितम् । नानाकमणिकया निर्मितभेदो यत्रेत्यर्थः । कङ्को मांसादः पक्षिविशेषः ॥१४॥ घोणा उन्नता यत्र घोणया वा उन्नतमुन्मुखम् । अपाङ्गो विशालो यत्र । एतेन नेत्रविशालत्वमुक्तम् ॥ १६ ॥ ( P. 396, L. 253 ) प्रसक्त(क्तिः) प्रणयो रागानुबन्धः प्रीतिर्वेति । प्रीतिः स्नेहमात्रम् ॥ लज्जाए इत्यादि । वैतालीयम् । एदं इति लविन्दुविकारो लघुः[1] । छन्दोनुरोधात् । 'लज्जया भीरुकतया च लक्षितः[2] स्वमित्यर्थात् । किमर्थमलीके स्त्रीवधादौ दरिद्रमाचरणं निगूही(गृहि)तुम् (?) । कुत एवमित्याह । स्वयं मारयित्वार्थनिमित्तमिदानीं गृह्णाति न नष्टके' । अपि तु नष्ट एव । 'नष्टके' इत्यपि पाठः (?) ॥ १७ ॥ छलपरिहारार्थं चिरं समीक्ष्यत इत्याशङ्क्याह । छलमत्र नेति ॥१८॥ पक्षः केशविशेषः (?) । भृशमत्यर्थम् । अन्तरा एतद्वचनमध्ये । मेघजलसिक्तनाशासे जलबिन्दुर्बच्युत इति कर्मवशमेकं मिथ्यात्मसूचकमिति'(?)॥१९॥ वेदार्थानित्यादि । अतिधृतिजातिः । वेदार्थविरोधिनो वचने जिह्वापातो युज्यते । अनपेक्षितानि । अपेक्षा योग्यतामप्यपेक्षा तेषां न कृतेत्यर्थः (?) ॥२१॥ दुष्टात्मेति । प्रहर्षिण्या श्लोकः ॥२७॥ पादप्रहारेति । गाथा । 'पादप्रहारेण परिभव आक्रमः स एव विमानना तया बद्धगुरुकवैरस्य ।

१ रेकारो E F G. २ भीरुतया च E F G.

अनुशोचमानस्येयं कथमपि रात्रिः प्रभातापगता मम' ॥२३॥ (P. 404, L. 349 ) सावएहिं श्वापदैः । [ सावसेसेहिं ] सावशेषाभ्याम् । 'अहो सुसन्ना व्यवहारनीतय' इति सामान्यविशेषभावेन विशेषणम् ॥२५॥ छिद्रेषु व्यसनेषु ॥२६॥ ( P. 410, L. 428) पुरत्थापनं पुरावस्थितिः। पुरनिर्माणमिति यावत् । कूपयूपेति लोकोक्तिः । कृतजनदोषश्चासौ भग्नश्चेति विशेषणसमासः । मए मम । शिले शिरः । ( P. 414, L. 471) ओवन्धेइ अवबध्नाति । कृतहस्ततया शिल्पकौशलेन ॥ ३४ ॥ एवं यां इदं यथमिदं स्मर्यते ॥ सच्चेनेत्यादि । वैतालीयम् । 'सत्येन सुखं खलु लभ्यते सत्यालापे सत्यमालापयतीति क्विपि सत्यालापः । तत्र न भवति पापकम् । सत्यमिति द्वे [अ]व्यक्षरे इति स्वरूपोक्तिः । न भवति पापस्य निमित्तमिति यस्मादिति प्राचीनटीका । अलीये ण(?)अलीकं कर्तुं । सत्यापेक्षया बह्वक्षरमपीत्यर्थः । सत्यं पूर्वोक्तस्वरूपत्वाद्व्यक्षरमपि कर्मभूतम् । मा निगूहति मा संवृणोति ॥३५॥ अतिकापटिकतया निमृ- हसि । कशा अश्वताडिनी ॥३६॥ खीरे(?)व रत्नम् । (P. 419, L. 522) कडं कृतम् । द्रुपगादीनां श्वेतकाकीयत इवार्थे च्छः (?) । उत्पातकल्पै- रित्यर्थः ॥४१॥ विषसलिलेति । विषादिपरीक्षाप्रार्थितेन्विष्टे । विचारे । क्रकचं दातव्यम् । अर्हे तव्यः (?) । यदि मयोक्तं क्रियते तदा क्रकच- दानमर्हमेवेति भावः (?) । अथ विचारनिरपेक्षं नृपतिं इति स्वीकृत्य वदति ॥४३॥

[इति] व्यवहारो नाम नवमः [अङ्कः] ॥ ९ ॥

---

## दशमोऽङ्कः।

दिण्णकलवीलेत्यादि। गाथा। 'दत्तकरवीरमालौ गृहीत था-याभ्यां वध्यपुरुषाभ्याम्। दीप इव मन्दस्नेहः स्तोकं स्तोकं क्षयं याति'॥२॥ पितृवनं श्मशानम्। तर्कयन्ति उत्प्रेक्षन्ते॥३॥ किं पेक्खधेति। गाथा। 'किं प्रेक्षध्व(?) छेद्यमानं सत्पुरुषं कालपरशुधाराभिः। सुजनशकुनाधि-वासं सज्जनपुरुषद्रुममेतम्'॥४॥ पिष्टचूर्णं श्यामतण्डुलचूर्णम्। पशुर्दैव-तार्थं छागादिः॥५॥ मदुपेतं मदर्पितं यथास्यादेवं उद्धृतबाष्पाः। मदिति-पञ्चम्येकवचनान्तम्। मदुपगतमोदशमयस्यान्तरं द्रष्टेति यार्थः॥६॥ इन्द्रेत्यादि। गाथा। 'इन्द्रः प्रवास्यमानो। यद्वा। प्रवाह्यमानो विवर्धमानः। गोप्रसवो निपतनं च ताराणाम्। सत्पुरुषस्य। प्राणविप-त्तिर्नाशः। चत्वार इमे न द्रष्टव्याः'॥७॥ हण्डे इति नीचसंबोधने। णअ-री इत्यादि। गाथा। 'नगरीप्रधानभूते वध्यमाने। इतान्ताज्ञया। किं रोदित्यन्तरीक्षमुतानभ्रे पतति वज्रम्॥' नगरीप्रधानवधो वज्र इवेत्यु-त्प्रेक्षा॥८॥ ण[अ]लुअदीत्यादि। गाथा। 'न च रोदित्यन्तरिक्षं नैवानभ्रे च पतति वज्रम्। ग्रीसमूहमेघाभिपतति। नयनाम्बु कर्तृ। धाराभिः॥९॥ वज्झमीत्यार्या। 'वध्ये नीयमाने जनस्य सर्वस्य रुदतः। नय-नसलिलैः सिक्ते सति रथ्या(थ्या)तः नोन्नमति रेणुः'॥१०॥ गोमिन् प्राहे स्वामिनः (?)। (P. 428, L. 48) शलोचे सलोत्रः। उद्विज्य उद्वेगं कृत्वा। एशा इत्यादि। गाथाद्वयम्। 'एप गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः। असुवर्णं मण्डनमपनीयतेऽद्य नगरीतः'॥१४॥ सर्वः खलु भवति लोकः लोकस्य सुखसंस्थितस्य कार्ये। तच्चिह्नः चिन्ता-परः। उपयुक्त इत्यर्थः। विनिपतितानां नगराणा (?) प्रियकारी दुर्लभो भवति'॥१५॥ (P. 432, L. 80) इत्यादौ हस्तात्। हा आवुक पितः। निरुपपदेन आर्य इत्यादिविशेषणशून्येन॥ अब्भुदये इत्यादि। गाथा। 'अभ्युदये चावसाने च तथैव रात्रिंदिवमहतमार्गा। अव्याहतप्रसिद्धा

---

१ तत्किं न कुरुत कारणतत्त्वबन्धननने निपुणाः। अचिरेण शिरच्छेदनशूलारोपे-षु कुशलाः॥ EFG: २ निल° E F G. ३ प्राणभूते B C D. ४ इते E F G. ५ °नाग° E F G. ६ नयणा E F G.

इत्यर्थः । उद्दामेव किशोरी नियतिर्दे(दै)वं खलु प्रत्येषितुं याति' ॥१९॥ शुष्केत्यादि । गाथा । अत्र द्वितीयखण्डचतुर्थपञ्चमगार्गी पञ्चममात्रो (?) । शुष्कापि प्रदेशा अङ्गानि । शे अस्य । किं विनमितमस्तकेन अवनतशिरसा किं कर्तव्यम् । अस्य खो [ह्]णस्य लज्जयानतशिरसोपि न कुत्सेत्यर्थः । कुत एतन्मित्यत आह । राहुगृहीत इव चन्द्रो वैन्दनीयो जनपदस्य' ॥ किंशब्द आचत्योंभयोरर्थयोर्योज्य इत्याहुः । आघातं अधिकरणवधस्थानम् । घालकं(?) । 'स(श)मिता यज्ञे' [६।४।५४] इति पाणिनेः सूत्रम् । शमितरि भवं शामित्रम् । यज्ञे पशुघातस्थानम् । आलम्बोभिमान्त्रितः । मारित इत्येके ॥२१॥ ण हु अम्हे इत्यादि । गाथा । 'न [खलु] वयं चाण्डालाश्चण्डालकुले जातपूर्वा अपि । येभिभवन्ति साधुं ते पापास्ते च चाण्डालाः' ॥२२॥ अमी हि त्वा देवा दावामर्धमयावगच्छामीत्यादि सर्वः स्वाधीन इत्यर्थः(?) । किं पेक्खधेति । गाथा । किं प्रेक्षध्वं सत्पुरुषमयशोवशेन नष्टजीवनम् । कूपे खण्डितपाशां काञ्चनकलशामिव मज्जन्तम्' ॥२४॥ छुब्यन्तं (corr. खिप्यन्तं A.) क्षिप्यमान(ण) म् । 'जीवाशं' 'जीवप्रत्याशं' इत्यपि पाठान्तरे । इदमपि यत्र फलमयशः। (P. 439, L. 152) अक्रन्दामि विरौमि । वालग्गपदोलिआए वालाग्रप्रतोलीतः । प्रासादभागादित्यर्थः । मंस्रेणेत्यादि । उपजातिछन्दः । 'मांसेन तिक्ताम्लकेण तिक्ताम्लेन तप्तं शाकेन सूपेन समत्स्यकेन । भुक्तं मयात्मनो गृहे शालेर्भकेन गुडोदनेन' ॥२९॥ भिन्नकांस्यवत्खङ्खणाय कटुस्वराया विकृतध्वन्याश्चाण्डालवाचः स्वरसंयोगः । यथाचैष उत्खालित उद्गतो वध्यडिण्डिमशब्दः श्रूयते पटहानां च शब्दस्तथा तर्कये । यः शत्रुं व्यापाद्यमानं प्रेक्षते तस्याक्षिणी शीतलायेते । विषकंण्डिकामध्यप्रविष्टेन च कीटकेन । (P. 443, L. 195) ही विस्मये । कथमित्यर्थः । एवंह्रे एतावान् महान् । यस्यां वेलायां अस्मादृशो महान्चरमनुष्यो वध्यं वधस्थानं नीयते तस्यां वेलायां कीदृग्भवेत् । नववलद्दके धिअ नववृषभ इव । मण्डितः । वृषभशब्दः संभवद्यपि शकारभाषात्वात्यक्तः। (P. 444, L. 201) कडे भवीअदि कृतो भविष्यति ॥ ओशलधेति । गाथा । 'उत्सर्पत ददत मार्गं द्वारं पिदधत भवत । तूष्णींकाः मौनिनः। अविनय-

१ सोहणए E F G.　२ न वन्दनीयो E F G.　३ भन्धिका E F G.　४ कथमित्यर्थं E F G.　५ भरमनुष्यो E F G.

तीक्ष्णविषाणो दुष्टवृषभ इव पतति' ॥ ३० ॥ पुत्तका पुत्रक । न दि रत्नकुम्भसदृशोऽहं स्त्रियं मारयामि । एष खु मम कार्यसाक्षी । किदवेले कृतवैरः । विहवे सामर्थ्यम् । तुवलसि त्वरसे ॥ किं ओहशासीत्यादि । गाथा । 'किमवहसासि हे शक (?) पुरुषं दृष्ट्वा दैवपर्यस्तम् । विदितं न त्वमपी (त्वो?) यत हे दुर्जन कृतान्तदंष्ट्रापुमारोहपि ।* (P. 451, L. 264) पराणेमि परामयामि व्यावर्तयामि । एत्ताए एताद्दृता एवमेदे- त्यर्थः । इदानीमित्येके । सन्नलेन वध्यपटहवादनदण्डेन । तालिय ताड- यित्वा । वज्जपालिआ घथपर्यायः । अरे तव । वीरक इति चण्डालनाम । पत्थं लपडेदि वन्धमाश्रित्य प्रसरति । चालुदत्ताकं अरे मारयितुं तव मया समर्पितः । त्वं मम कर्तव्यमित्यर्थः(?) । वयं चण्डालाः । नैवं कृते- ऽस्माकं दोष इति भावः । विन्नप्ये(?)विज्ञापयामि । शुमलिदव्वं स्मर्तव्यम् । [ प्रभवतीति ] । प्रबलपुरुषा नयनिर्णेतारः । तेषां वाक्यैर्मोग्यदोषादूषि- तस्य यदि मे धर्मः प्रभवति तदा सैव वसन्तसेनैव स्वस्वभावेनात्मरू- पतया क्षपनयतु ॥३४॥ गन्तव्यम् । तत्रैव मया मर्तव्यमित्यर्थः । अट्ठाणं पुद्धस्थानम् । जीर्णस्थानरूपमेव(?) । उपासिके पडिवालेहि प्रतिपालय । (P. 463, L. 375) क्षणं तिष्ठतीति(तिष्ठेति) मारणव्यापारपरोक्तिरि- यम् ॥ आअविदए इत्युदीतिः ॥ 'आकर्षितः सरोषं । मुष्टौ त्सरौ । मुष्टिना गृहीतोऽपि । धरण्यां किमिति निपतितो दारुणकोशनिसन्निभः खड्गः' ॥३७॥ सह्यवासिनि । सह्यः पर्वतविशेषः । तत्रस्थां दुर्गां स्वकुल- देवतां संबोधयति ॥ का उणेति । गाथा ॥ 'का पुनस्त्वरितमंसे पतत् चिकुरभारेण । माभेति व्याहरन्ती उत्थितहस्ता इव पतति' ॥ 'उच्छिअ- अ(ह)त्था' इति पाठे उच्छ्रितहस्तेत्यर्थः ॥३८॥ द्विधा इतरथेवित्कात्मज्ञा- नम् ॥४२॥ वरस्य जामातुरिव ॥४४॥ केणापि । न पतद्व्यतिरिक्तेनान्ये- नेत्यर्थः । न प्रत्यभिजानाति । [जयतीति] । जयति सर्वोत्कर्षेण वर्धताम् (वर्तते) । तदनु जयति आत्मसात्करोति । शेषभूतां पुष्पदामायमानाम् । गुणभूतामिति केचित् ॥ ४६ ॥ (P. 470, L. 457) निर्वेदः शान्तिः धैर्यविकेच्छानिवृत्तिः । किमेतत्किमेतदिति शत्रूणां क्रूरः कलकलः । यज्ञवाटो यज्ञस्थानम् । एतच्चापरिच्छिन्नजनसंमर्दने प्रमादस्थानम् । तेन सर्वोत्कटवध इति सूचयितुम् ॥५१॥ पुस्तकान्तरपाठदर्शनव्याख्या ।

१ पुमामारोहेति पाठान्तरम् F G. * A breaks here. २ सर्वसमथ° F G.

(P. 484, L. 616) । अहमेवेति । पर्यवस्थापनमाचार इति कृत्वा स्वयमेव क्षमोहमिति भावः । दिउणतले द्विगुणतरः । अचलां पृथ्वीम् ॥५९॥

मृच्छकटिकविवृतिरियं गणपतिचित्तान्तपारपर्यन्ता ।
पृथ्वीधरकृतिरुपनयतु संतोषं कृतिसमुद्रे ॥ १ ॥

इति दशमोऽङ्कः ॥ १० ॥



# AN ALPHABETICAL INDEX OF THE SANSKRIT VERSES OCCURRING IN THE PLAY.

अ

क



ख

## न



## प

व



श



स

# AN ALPHABETICAL INDEX OF THE PRÂKRIT VERSES OCCURRING IN THE PLAY.